सरस्वतीभवन-ग्रन्थमाला

( १०६ )

परमानन्दचक्रवर्तिप्रणीतया

काव्यप्रकाशविस्तारिकाव्याख्यया

संवलितः

# काव्यप्रकाशः

[ प्रथमो भागः ]




सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः

SARASVATĪBHAVANA-GRANTHAMĀLĀ

( Vol. 106 )

General Editor

DR. BHAGIRATHA PRASADA TRIPATHI 'VAGISHA SHASTRI'

Director, Research Institute,

Sampurnanand Sanskrit Vishvavidyalaya,

Varanasi



# KĀVYAPRAKĀŚA

*With*

*KĀVYAPRAKĀŚA VISTĀRIKĀ*

by

**PARAMĀNANDA CAKRAVARTĪ**

***Edited by***

Dr. GAURĪNĀTHA ŚĀSTRĪ

Ex-Vice Chancellor

Sampurnanand Sanskrit Vishvavidyalaya

VARANASI

1976

सरस्वतीभवन-ग्रन्थमाला

( १०६ )

प्रधानसम्पादकः

डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'

अनुसन्धानसंस्थाननिदेशकः

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये




मम्मटाचार्यप्रणीतः

# काव्यप्रकाशः

## परमानन्दचक्रवर्तिप्रणीतया

काव्यप्रकाशविस्तारिकाख्यया व्याख्यया विभूषितः

सम्पादकः

डॉ० गौरीनाथशास्त्री

उपकुलपतिचरः

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

वाराणस्याम्

२०३३ तमे वैक्रमाब्दे १८९८ तमे शकाब्दे १९७६ तमे खैस्ताब्दे

प्रकाशक:
निदेशक:,
अनुसन्धानसंस्थानस्य
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये



प्राप्तिस्थानम्—
प्रकाशनविभागः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः,
वाराणसी-२२१००२ ( उ० प्र० )



प्रथमं संस्करणम् : ५०० प्रतिरूपाणि
मूल्यम्—३८-०० रूप्यकाणि

मुद्रक:—
घनश्याम उपाध्यायः,
प्रबन्धकः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीयमुद्रणालयस्य
वाराणसी-२२१००२ ( उ० प्र० )

# प्रास्ताविकम्

काव्यशास्त्रमूर्धन्यभूतस्य गभीरस्य, अनपेक्षितोक्तिविधुरस्य नवशताब्दीनामनन्तरं साम्प्रतं विंशशताब्द्यामपि पूर्ववदेवोपयोगिता प्रामाणिकता च विराजते काव्यसंसारप्रकाशकस्य मम्मटविरचितस्य काव्यप्रकाशस्य। महामुनिभरतात् प्रवर्तितायाः काव्यशास्त्रधारायाः प्रवाहे मम्मटात् प्राग् रसालङ्काररीति-वक्रोक्ति-ध्वन्यादयो विविधा वादाः प्रचलिता लक्ष्यन्ते। पूर्ववर्तिनां भामह-दण्डि-वामन-आनन्दवर्द्धन-अभिनवगुप्तादीनां काव्यशास्त्रविचारसम्पत्तिरुपायोजि काश्मीरिकेण राजानकभट्टेन मम्मटेन। काव्यशास्त्रक्षेत्रे विद्यमाना अदभ्रा भ्रान्तयो निराकृताः सरस्वत्यवतारभूतेन मुख्यतो ध्वनिमास्थापयता तेन। तत्प्रणीतं 'शब्दव्यापारविचारः' इति 'संगीतरत्नमाला' चेति ग्रन्थान्तरद्वयमपि ज्ञायते।

नाटककाव्यादौ समेषां ज्ञानानाम्, शिल्पानाम्, विद्यानाम्, कलानाम्, विविधानां कर्मणाम्, योगादीनां चोपयोगो मन्यते। इहालङ्कारशास्त्रेऽशेषविद्यापारावारीणेन मम्मटेन व्याकरणन्यायमीमांसादिशास्त्राणामपि तत्त्वमगुम्फि यथायथम् इति तदीयः काव्यप्रकाशः पाण्डित्यनिकषो मतः पण्डितमण्डलीषु। अतो विविधशास्त्रनदीष्णैस्तत्र विरच्यय व्याख्याः कृतार्थीकृतः स्वकीय आत्मा। सर्वप्रदेशोद्भवा विद्वांसो नैयायिका मीमांसका वैष्णवास्तान्त्रिका जैना धर्मशास्त्राचार्याश्चाप्यरीरचन् व्याख्यास्तत्र। बालचित्तानुरञ्जिनीटीकाकारेण द्वादशशताब्दीभवेन विदुषा सरस्वतीतीर्थयतिना प्रकटिता स्वकीया व्याकरणन्यायमीमांसासांख्यवेदान्तशास्त्रपारगामिता।

इत्थं तत्त्वरत्नाकरोऽयं काव्यप्रकाशः स्वरत्नविचयार्थं चिराय निमज्जननिपुणान् तलस्पर्शिपण्डितजनान् आहूतवान्, आह्वयति, आह्वयते, आह्वास्यति, आह्वास्यते च। चतुर्दशशताब्दीजेन चण्डीदासेन विभाविता काव्यप्रकाशदीपिकेत्याख्या प्रख्याता व्याख्याऽस्माद् विश्वविद्यालयाद् एकादशवर्षेभ्यः प्राक् प्रकाशिता। तस्याग्रजपौत्रेण साहित्यदर्पणकारेण महापात्रेण विश्वनाथकविराजेन काव्यप्रकाशदर्पणेत्यभिधेया टीकिता टीका। चतुर्दशशताब्दीभव एवायं काव्यप्रकाशविस्तारिकाविस्तारकश्चक्रवर्ती परमानन्दभट्टाचार्यः प्रौढनैयायिक आसीद् महानैयायिकगङ्गेशोपाध्यायकृतस्य तत्त्वचिन्तामणेर्भक्तः।

एवं खलु महती परम्परा वर्तते लब्धालब्धानां शताधिकानां टीकानां काव्यप्रकाशे, तथापि न ताः सर्वाः प्राकाश्यमानीताः। यद्यपि पञ्चदशशताब्दी-रचितया सारसमुच्चयटीकया ज्ञायते काव्यप्रकाशविस्तारिकायास्तदानीं प्रचारः, तथापि षट्शताब्दीभ्यः प्राग् रचिताया अप्यस्याः प्रकाशनमेतावच्चिरं क्वापि न सञ्जातमित्याश्चर्यविषयः।

चण्डीदासविरचितकाव्यप्रकाशदीपिकासम्पादकानां श्रीशिवप्रसादभट्टा-चार्याणां दृष्टिमाचकर्षेयं काव्यप्रकाशविस्तारिका स्वप्रकाशाय। किन्तु दुर्दैवा-दामयाविदिवङ्गतैस्तैरस्याः सम्पादनकार्यभारो निक्षिप्तः प्राच्यपाश्चात्त्योभय-विद्यापारावारीणानां डॉ० गौरीनाथशास्त्रिमहाभागानामंसयोः। वाराणसेय-संस्कृतविश्वविद्यालयस्योपकुलपतिपदं समलङ्कृतवतां व्यापृतानां शास्त्रिवर्याणां साहायकमाचरितं मीमांसामार्तण्डैः पण्डितपट्टाभिरामशास्त्रिमहोदयैरस्य काव्यप्रकाशविस्तारिकासमेतस्य काव्यप्रकाशस्य सम्पादनप्रक्रियायाम्। इह काव्यप्रकाशविस्तारिकाया नवसंख्याका मातृका आधारीकृताः पाठालोचनाय। 'क' 'ख' 'ग' 'घ' 'ङ' 'च' 'छ' 'ज' 'झ' इति विहितानि तासां नामानि। घ-मातृकायां पाठभेदो विरलः। पाण्डित्यप्रकाशिका विविधाः पादटिप्पण्यो विरचिता इह विलसन्ति यथायथम्। सोऽयं सरस्वतीभवनग्रन्थमालायाः षडुत्तरशतपुष्पत्वेन सम्पूर्णानन्दसंस्कृतविश्वविद्यालयतः प्रकाश्यते।

मालायां षट्संख्याकाः काव्यशास्त्रग्रन्थाः प्रकाशिताः (१) गङ्गानन्द-कवीन्द्ररचिता काव्यडाकिनी, (२) प्रभाकरभट्टविरचितो रसप्रदीपः, (३) आशाधरभट्टकृता त्रिवेणिका, (४) चिरञ्जीविविरचितः काव्यविलासः, (५) गोकुलनाथोपाध्यायरचितेन काव्यप्रकाशविवरणेन संवलितः काव्यप्रकाशः, (६) चण्डीदासकृतदीपिकाटीकायुतः काव्यप्रकाशश्चेति। सम्प्रत्ययं प्रकाश्य-मानः सप्तमः काव्यशास्त्रग्रन्थो भवतां कराम्बुजगतश्चकास्ति। व्याख्यानां तुलनात्मकविवेचनाय व्याख्येयं महत उपकाराय सम्पत्स्यते। विषयविवेचना-त्मिकया भूमिकया विराजितं पाठालोचनपूर्वकं सम्पादितं षष्ठसमुल्लासान्तं प्रथमभागं ग्रन्थरत्नमिदमुपस्थापयतो मे चेतसि सञ्जायते महान् प्रमोदः। सर्वतः प्रथमं प्रकाशमानीयमानेन ग्रन्थरत्नेनानेन विद्वज्जना जिज्ञासवश्च नूनमुपकृता भविष्यन्तीति विश्वसिमि।

हरिप्रबोधिन्याम्<br>२०३३ वैक्रमाब्दे<br>२-११-७६ खीस्ताब्दे

**भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'**<br>निदेशकः<br>अनुसन्धानसंस्थानस्य

# प्राक्कथनम्

अत्रेयमसुद्रितचरी रसप्रियेण श्रीपरमानन्दचक्रवर्तिना रचिता **काव्यप्रकाशविस्तारिकाख्या** सुविशदा टीका साहित्यशास्त्रनिष्णातानां दोषज्ञानां सरस्वतीविनोदनार्थमस्माभिर्मुद्राप्य सबहुमानमुपायनीक्रियते।

एषा च टीका रसप्रदीपकारेण प्रभाकरभट्टेन[१] खृष्टीय १५८३ मिते वर्षे विरचिते स्वग्रन्थे समुद्धृता। अन्यैरपि कैश्चित् काव्यप्रकाशटीकाकृद्भिः स्वकृतनिबन्धेषु प्रसङ्गतो विस्तारिकाया अस्याः समुल्लेखः कृतः। तथाहि—खृष्टीये १६४८ वर्षे राजानकरत्नकण्ठरचितायां सारसमुच्चयाख्यायां काव्यप्रकाशटीकायाम्[२], राजानकानन्दकविविरचितायां शितिकण्ठविबोधनापरसमाख्यायां १६६५ खृष्टाब्दे रचितायां काव्यप्रकाशनिदर्शनटीकायाम्[३], खृष्टीय १६१२ मिते वर्षे प्रणीतायां कमलाकरभट्टकृतायां काव्यप्रकाशटीकायाम्[४], एतत्समकाल-

---

१. ग्रन्थोऽयं १९२४ खृष्टाब्दे नारायणशास्त्रिखिस्तेमहोदयेन वाराणसीतः सरस्वतीभवनग्रन्थमालायां प्रकाशितः। 'इण्डियान् हिस्टोरिक्याल कोयार्टालि' ७, १९३२ इत्यत्र सुशीलकुमारदेमहोदयेनैतद्ग्रन्थस्थानां सन्दर्भाणां चर्चा कृता।

२. १९५० खृष्टाब्दे कलिकातानगरीतः प्रकाशितस्य सुशीलकुमारदेरचितस्यालङ्कारेतिहासग्रन्थस्य प्रथमे भागे १९६ पृष्ठे, तथा १९३७ खृष्टाब्दे मद्रासनगरीतः प्रकाशितस्य कृष्णमाचार्यप्रणीतस्य संस्कृतसाहित्येतिहासग्रन्थस्य ७५९ पृष्ठे च द्रष्टव्यम्। वामनाचार्य-झालकीकरेण तु स्वकृतायां बालबोधिन्याम् "आनन्दकविकृतायां सारसमुच्चयापरनाम्न्यां निदर्शनाख्यटीकायाम् यदुक्तं तत्तु अनालोचितरमणीयम्" इति खण्डनं कृतम्। ( भाण्डारकर ओरिएण्टल रिसर्च इन्स्टिट्यूट्, पूना, खृष्टाब्दाः १९५०, प्रस्तावना, १७ पृष्ठे )।

३. सुशीलकुमारदेकृतस्यालङ्कारशास्त्रेतिहासस्य प्रथमे भागे १९८ पृष्ठे, कृष्णमाचारियारग्रन्थस्य ७५८ पृष्ठे झालकीकरग्रन्थस्य प्रस्तावनायाम् १७ पृष्ठे च द्रष्टव्याः।

४. अलङ्कारशास्त्रेतिहासस्य १६७-१६८ पृष्ठयोः, कृष्णमाचारियारग्रन्थस्य ७५८ पृष्ठे, झालकीकरग्रन्थस्य च ३०-३१ पृष्ठयोश्चैतद् विवरणं द्रष्टव्यम्।

वर्तिना नरसिंहठक्कुरेण रचितायां नरसिंहमनीषाख्यायां व्याख्यायाम्[५], कमलाकरनरसिंहाभ्यां स्तोकशोऽर्वाचीनस्य वैद्यनाथस्य कृतावुदाहरणचन्द्रिकायाम्[६], खृष्टीयाष्टादशशताब्दीभूषणभूतेन देशिकमूर्धन्येन नागोजिभट्टेन प्रणीते उद्द्योतनाम्नि काव्यप्रदीपव्याख्यायाञ्च[७] उपलब्धैः समुल्लेखैरेतदेव सुष्ठु प्रतिपादितं भवति यदियं विस्तारिका खृष्टीयषोडशशताब्दीसमये तदुत्तरवर्तिनि च काले सुप्रचारा, विद्वद्भिः सुपरिगृहीता चासीदिति ।

काव्यरसिकानां पुनरेतत् परं दुःखस्थानं वर्तते यदुपादेयाप्येषा विस्तारिका इदानीन्तने काले दुर्लभप्रचारा जाता । नेयमद्यावधि प्रकाशपथमानीता, नाप्यस्याः मातृका अद्यत्वे सुलभाः सन्ति । तस्मादस्याः प्रथममिदं मुद्रणं शास्त्रव्यसनिनां विदुषां महतः सन्तोषस्य कारणं स्यादित्याशास्महे ।

अनेन तु टीकाकृता स्वीयाभिजनपरिचयादिविषये ताटस्थ्यमवलम्बितमिति वंशादिकमभिजनादिकं वाऽस्य न निश्चयेन ज्ञातुं शक्यते । वामनाचार्यस्तु पुष्पिकायाम् "चक्रवर्ती भट्टाचार्यः" इति पदप्रयोगबलेन वङ्गदेशाभिजनोऽयमिति सिद्धान्तितवान् ।[८] सिद्धान्तस्यैतस्य समर्थकमन्यत् प्रमाणद्वयमप्युपलभ्यते । तथा ह्ययं स्वकृतटीकोपोद्घाते—

"न्यायाचार्यमनङ्गीकृतपरपक्षं बहुज्ञमीशानम् ।
गुरुमिह नत्वा काव्यप्रकाशविस्तारिकां तनुमः ॥"

इति श्लोके नामोल्लेखपुरस्सरं गुरुं प्रणमति । एतेन च 'ईशानन्यायाचार्यो'ऽस्य गुरुरासीदिति ज्ञायते । अयमीशानन्यायाचार्यस्तु वङ्गीयो नैयायिकप्रवरः सुगृहीतनाम्नो वङ्गीयनैयायिकधुरन्धरस्य रघुनाथशिरोमणेः ( खृष्टीय १४५५-१४६० ) पूर्वकालवर्तीति दिनेशचन्द्रभट्टाचार्यमहोदयेन प्रतिपादितं वर्तते ।[९] अपरं च श्रीकृष्णचैतन्यपार्षदानां षड्गोस्वामिनाम-

---

५. देकृतग्रन्थस्य १६६-१७० पृष्ठयोः, कृष्णमाचारियारग्रन्थस्य ७५८ पृष्ठे, झालकीकरग्रन्थस्य च ३१-३२ पृष्ठयोरेतद्विवरणं द्रष्टव्यम् ।

६. दे १७० पृष्ठसंख्या, कृष्णमाचारियार ७५८ पृष्ठसंख्या, झालकीकर —३२ पृष्ठसंख्या च द्रष्टव्याः ।

७. दे १७२ पृष्ठ संख्या, कृष्णमाचारियार ७५६ पृष्ठ संख्या, झालकीकर— ३४-३५ पृष्ठसंख्या च द्रष्टव्याः ।

८. झालकीकर, १६ पृष्ठे ।

९. १३५८ वङ्गाब्दे कलिकातास्थ वङ्गीयसाहित्यपरिषत् प्रकाशिते दिनेशचन्द्रभट्टाचार्यप्रणीते "बाङ्गालीर सारस्वत अवदान" इत्याख्ये ग्रन्थे 'वङ्गे नव्यन्यायचर्चात्मके' प्रथमे भागे ६१-६२ पृष्ठयोरेतद्विवरणं द्रष्टव्यम् ।

न्यतमेन सनातनगोस्वामिपादेन स्वकृतायां श्रीमद्भागवतटीकायां बृहद्वैष्णवतोषिण्यां स्वीयोपदेशकानां वन्दनावसरे 'परमानन्दभट्टाचार्यं रसप्रियम्'[१०] इति वन्दना विहिता। तत्र च भट्टाचार्यरसप्रियशब्दौ सामानाधिकरण्येन प्रयुक्तौ वक्तुर्विशेषविवक्षामवगमयतः। तत्र भट्टाचार्यशब्दो वङ्गप्रान्तेषु प्राचीनादेव कालान् न्यायशास्त्रप्रवीणेषु रूढ इति सुप्रज्ञातमेव विदुषाम्। अपरञ्च रसप्रियशब्दः साहित्यरसचर्वणाप्रागल्भ्यं सूचयतीति प्रकरणादिपर्यालोचनया लभ्यते। एवं च तर्ककर्कशधीरपि काव्येषु कोमलमतिरयमिति गोस्वामिपादेन स्वगुरोः प्रतिभावैशिष्ट्यं स्तुतं भवति। तस्माद् ईशानन्यायाचार्यशिष्योऽयं सनातनगोस्वामिनो गुरुरासीदिति दिनेशचन्द्रभट्टाचार्यमहोदयेन प्रतिपादितम्[९]। एतत्तु समीचीनमेवेति वयमपि मन्यामहे।

"अन्धा दोषान्धकारेषु के वा न स्युर्विपश्चितः।
नाहन्तु दृष्टिविकलो धृतचिन्तामणिः सदा॥"

इति विस्तारिकास्थेन सप्तमोल्लासप्रारम्भश्लोकेन परमानन्दः स्वयमेव श्लेषेण तत्त्वचिन्तामणिपरिशीलनपरिपक्वमतिवैभवस्य न्यायशास्त्रनिष्णातत्वमात्मनः प्रख्यापयति।

गादाधर्यां चतुर्दशलक्षण्यामुपलब्धस्य चक्रवर्तिलक्षणस्यायमेव कर्तेति केचनाशेरते[११]। तत्तु न समीचीनम्। यतः परमानन्दात् प्राचीनतरः श्रीनाथचक्रवर्त्त्येवास्य चक्रवर्त्तिलक्षणस्य कर्तेति वङ्गीयेषु सम्प्रदायज्ञेषु सुविदितैवैषा वार्ता।

परमानन्देन तु स्वकृतायां विस्तारिकायां 'इति मिश्राः" इत्यादिपदेन सुबुद्धिमिश्रस्य, "इति दीपिकाकृतः" * इत्यनेन काव्यप्रकाशदीपिकाकृतः चण्डीदासस्य, "यच्चोक्तं विश्वनाथेन" इत्यादिना च काव्यप्रकाशदर्पणकृतो विश्वनाथस्य समुल्लेखः कृतः। किञ्च दशमोल्लासे श्लेषालङ्कारव्याख्यानावसरे "प्रतापरुद्रादिवत् संकेतितो नृपतिविशेषश्च" इत्युक्त्या प्रतापरुद्रदेवस्य विद्यानाथस्तुतस्य नामकीर्तनमपि तेन कृतम्। एतेषां परमानन्दकृतिसमुल्लेखानां परमानन्देन समुल्लिखितानाञ्च ग्रन्थानां रचनाकालपर्यालोचनया

---

१०. तत्रैव।

११. दे, २६२ पृष्ठे, झालकीकर, २६-२७ पृष्ठे च द्रष्टव्यम्।

* दीपिकाकृदयं जयन्तभट्ट इति यत् झालकीकरेणोक्तं तत्तु न सम्यक्, काव्यलक्षणविवेचनादिप्रसङ्गे चण्डीदासादिमतानामेव समुल्लेखनात्। चण्डीदासाविर्भावकालस्तु खृष्टीयत्रयोदशशताब्द्येव।

स्फुटमेवैतत् प्रतीयते यदयं खृष्टीयषोडशशताब्दीतः प्राचीनतरः स्यादिति। परमानन्दगुरोरीशानन्यायाचार्यस्याविर्भावकालः खृष्टीयपञ्चदशशताब्द्याः प्रथमपाद एव। परमानन्दशिष्यः सनातनस्तु श्रीकृष्णचैतन्यसमकालज एव। चैतन्यदेवाविर्भावकालस्तु खृष्टीयपञ्चदशशताब्दीसमय एवेति विद्वद्भिः सुनिर्णीत आस्ते।[१२] एवञ्च खृष्टीयपञ्चदशशताब्द्यामेव परमानन्दः प्रादुर्बभूवेति निःसंशयमेव वक्तुं शक्यते। खृष्टीयषोडशशताब्दीकालवर्तिना स्मृतिनिबन्धकारधुरीणेन रघुनन्दनेन स्वरचितेषु श्राद्धतत्त्वोद्वाहतत्त्वैकादशीतत्त्वाख्येषु स्मृतिनिबन्धग्रन्थेषु परमानन्दगुरोरीशानन्यायाचार्यस्य यः समुल्लेखः कृतः[१३] स तु सिद्धान्तमिममेव द्रढयति।

## अनेन रचिता ग्रन्थाः

परमानन्दचक्रवर्तिरचिता काचन नैषधीयचरितटीकाप्युपलभ्यते। सा त्वनेन विस्तारिकाकारेणैव रचितेति विदुषां मतम्।[१४]

परमानन्दचक्रवर्तिकृता काचित् पुष्पदन्तकृतस्य महिम्नः स्तोत्रस्य टीकापि वर्तते।[१५] परमानन्दोऽयं सर्वानन्दसूनुः भ्रातरौ चास्य देवानन्दभवानन्दौ। विस्तारिकाकारादयं भिन्नो वा न वेत्यत्र न किञ्चित् साधकं बाधकं वा प्रमाणमुपलभामहे।

अमरमालाख्या काचिदमरकोषटीकापि परमानन्दरचिता विद्यते। अमरमालाकारोऽयं ढाकाप्रान्तीय भाओयालाख्यपरगणान्तर्गतशालिकनिग्रामवास्तव्य आसीद् इति तत्कृतटीकापुष्पिकात उपलभ्यते। मालाकारोऽयं खृष्टीयपञ्चदशशताब्दीकालवर्ती आसीदिति महामहोपाध्यायहरप्रसादशास्त्रिमहोदयानां मतम्।[१६] परमसौ परमानन्दशर्मा इति निजमाह्वयमुदीरयति, न पुनर्विस्तारिकाकाररीत्या परमानन्दचक्रवर्तिभट्टाचार्य इति, स्वाभिजनपरिचय-

---

१२. कृष्णमाचारियार, २८७ पृष्टे, २६५५ खृष्टाब्दे कलिकाताविश्वविद्यालयतः प्रकाशिते "चैतन्य याण्ड हिज् एज्" इत्याख्ये दिनेशचन्द्रसेनरचितग्रन्थे २०६, २५६ पृष्ठयोः आलोचना द्रष्टव्या।

१३. दिनेशभट्टाचार्यं, ६१ पृष्ठे।

१४. 'इण्डिया आफिस क्याटालाग्' ६-२४३८।

१५. 'क्याटालोगास्, क्याटालोगोराम्', ३२५ पृष्ठे।

१६. हरप्रशादशास्त्रिकृतं हस्तलेखविवरणम्, ४.२६

प्रसङ्गे च नायं विस्तारिकाकार इव जोषमास्त इति विस्तारिकाकारादन्य एवासौ मालाकार इत्येवास्माकं निर्णयः।

सुविज्ञातनाम्न्या अप्यस्याः टीकाया हस्तलेखपुस्तकानि तु सम्प्रति न बाहुल्येन लभ्यन्ते। 'अफ्रेट' महोदयेन स्वकृते 'क्याटालोगास् क्याटालोगोराम्' इत्याख्ये हस्तलेखविवरणे अस्याः टीकायाः हस्तलेखत्रयाणामेव समुल्लेखः कृतः।[१७] राजाराजेन्द्रलालमित्रकृते[१८] महामहोपाध्याय हरप्रसादशास्त्रिकृते[१९] च हस्तलेखविवरणे टीकैषा विवृता विद्यते। पि. पिटारसन्महोदयेन तु स्वकृतहस्तलेखानुसन्धानविवरणे परमानन्दकृतेयं विस्तारिका साहित्यदीपिका-नाम्नाभिहिता।[२०] वि. राघवन्महोदयेन सम्पादिते हस्तलेखविवरणग्रन्थे[२१] चास्याः टीकाया हस्तलिखितपुस्तकानां परिचयो विस्तरेण लभ्यते।

एषु चाधस्ताद् वर्णितान्येवाष्टसंख्यकानि हस्तलेखपुस्तकानि समुपलभ्यन्ते। तानि यथा—

१) कलिकाताराष्ट्रियसंस्कृतमहाविद्यालयग्रन्थागारस्थं वङ्गाक्षरलिखितं खण्डितमेकं पुस्तकम्। ( सं०–अलं ११ )।

२-३) "वङ्गीय-एसियाटिक् सोसाइटी" इत्याख्यप्रतिष्ठानस्य ग्रन्थागारस्थं पुस्तकद्वयम्।

अनयोरेकं देवनागराक्षरमयं नातिप्राचीनम्। (संख्या ४८३।२४९२)।

अपरं तु सुप्राचीनमाद्यन्तयोः खण्डितं वङ्गाक्षरमयम्। संख्या—४८३२।३३६४।

४-६) पुण्यनगरीस्थे "भाण्डारकर ओरिएण्ट्याल रिसर्च इन्स्टिट्यूट" इत्याख्यप्रतिष्ठाने रक्षितं मातृकात्रयम्।

एतेषु नागराक्षरलिखितेषु १६७६ संवत्सरे प्रतिलिपीकृतमेकं सम्पूर्णतयोपलभ्यते। ( संख्या ६६ )।

द्वितीयं तु प्रारम्भतः षोडशभिः पत्रैर्हीनम्। ( संख्या १०० )।

---

१७. क्याटालोगास् क्याटालोगोराम् २. २०२. २. २६, ३.२२

१८. संख्या २६३८.

१९. हरप्रसादशास्त्रिकृतहस्तलेखविवरणम् २ ६४

२०. पिटारसन्कृतं हस्तलेखविवरणम्, २ भूमिका, २२; २०८-२०६

२१. १९६८ खृष्टाब्दे मद्रासविश्वविद्यालयतः प्रकाशितस्य 'न्यूक्याटालोगास् क्याटालोगोराम्' ग्रन्थस्य चतुर्थे भागे ९७ पृष्ठे।

तृतीयं पुनर्बहुशः त्रुटितमास्ते। ( संख्या २०२ )।

७-८) मद्रासस्थ "अडयारलाइब्रेरी" त्याख्ये सरस्वतीभाण्डारे रक्षितमस्या मातृकाद्वयम्। ( संख्या डिवि० १६६०, १६६२ )।

अन्ते चैतन्निवेदये—यदस्मदध्यापकवर्यैः सम्प्रदायतो वङ्गदेशेषु साहित्यालङ्कारशास्त्रे तलस्पर्शिवैदुष्यमावहद्भिर्नैकविधानामलङ्कारग्रन्थानां सम्पादकैः भट्टपल्लीवास्तव्यैः शिष्यजनहितङ्करैः श्रीशिवप्रसादभट्टाचार्यैरस्य ग्रन्थस्य प्रकाशनाय महान् यत्नः कृतः। तदर्थं पाण्डुलिपिसम्पादनादिकमनुष्ठितम्। किन्तु दुर्दैववशेन सहसा ते लोकान्तरं गताः। रुग्णावस्थायां ते लोकहितङ्करं कार्यमिदं निर्वोढुं मह्यं प्रादुः। स्नेहवशान्मह्यं समर्पितस्यास्य लोकहितङ्करस्य कार्यस्य निर्वहणेऽहं सोत्साहं प्रावर्तिषि। तदैवाहं वाराणसेयसंस्कृतविश्वविद्यालयस्योपकुलपतिपदं निर्वोढुमाहूतः कार्यमिदं विश्वविद्यालयस्यानुरूपमिति निश्चित्वानो विश्वविद्यालयीयमुद्रणालय एवैतत्प्रकाशनाय व्यवस्थामकरवम्। संप्रति षष्ठोल्लासान्तः प्रथमो भागः प्रकाशितः। अचिरादेव द्वितीयभागस्यापि प्रकाशनं भविष्यति। अस्य प्रकाशनकार्ये विश्वविद्यालयीयसाहित्यप्रधानाध्यापकेन पं० पट्टाभिरामशास्त्रिविद्यासागरेण महदानुकूल्यं कृतम्, विषयविवेचनात्मिका भूमिकापि विरचितेति पण्डितवराय शतशो धन्यवादान् वितरामि। मदीयेनान्तेवासिना कालिकातास्थसंस्कृतमहाविद्यालयगवेषणाविभागे साहित्याध्यापकपदमधितिष्ठता श्रीमता कालीकुमारदत्तेन विविधं साहाय्यमाचरितमिति तमाशीर्भिः परिपूरयामि। वाराणसेयसंस्कृतविश्वविद्यालये कार्यालयपण्डितानामन्यतमेन परमस्नेहभाजनेन श्रीमता परमेश्वरपाण्डेयेन पालिसाहित्याचार्येण ग्रन्थस्यास्य मुद्रणकार्ये भूयान् परिश्रमः कृत इति तस्मै विशेषेणाशिषः प्रददामि।

**स्मारं स्मारं गुरोर्वाक्यं गहने पथि गच्छता।**
**यत्किञ्चित्सेवितं तेन शङ्करो मे प्रसीदताम्॥**

सं० २०३२ श्रावण
शुक्ला सप्तमी
कालिकाता
दि० १३-८-७५

**श्री गौरीनाथ शास्त्री**

## पञ्चमोल्लासान्तकाव्यप्रकाशविषयविवरणात्मिका

# भूमिका

अथेदानीं श्रीपरमानन्दचक्रवर्तिभिर्विरचितया 'काव्यप्रकाशविस्तारिकया' टीकया सह श्रीमम्मटाचार्याणां काव्यप्रकाशस्य षष्ठोल्लासान्तः प्रथमो भागः प्रकाशपथमानीयते विदुषां तोषाय। श्रीमम्मटाचार्याणां काव्यप्रकाशस्य च यादृशस्सार्वत्रिकः प्रचारः, न तादृशोऽन्येषां ग्रन्थकाराणां ग्रन्थानां वास्तीत्यहमभिप्रैमि। आ च हिमवतः, आ च कुमारिकायाः सर्वेष्वपि संस्कृतशिक्षणालयेषु काव्यप्रकाशस्याध्ययनमध्यापनञ्चानुभवामः। अध्यापका ग्रन्थमिममध्यापयन्तो ग्रन्थस्य गरिमाणमनुभवन्तः तद्व्याख्यानाय प्रावर्तन्तेति प्रतिभाति। भारते सर्वप्रान्तीयानां काव्यप्रकाशव्याख्यामुपलभामहे। यथा हि कुशलस्स्वर्णकारः तत्तत्प्रान्तभेदेन वर्तमानः स्वस्मै यथा यथा रोचते तथाविधान्युच्चावचान्याभरणानि सुवर्णान्निर्माति ग्राहकाणां मनांसि चावर्जयति, तथैव तत्तच्छास्त्रेषु तलस्पर्शिपाण्डित्यमावहन्तो विद्वदपश्चिमाः स्वस्वशास्त्रपद्धत्या ग्रन्थमिमं व्याख्यायाध्येतॄणां प्रतिभावतामध्यापकानाञ्च हृदयं समाकर्षन्ति। सुवर्णस्थाने काव्यप्रकाशः सुवर्णः। व्याख्याता चेन्नैय्यायिकः, व्याख्यापि न्यायानुसारिणी; स चेद्वैयाकरणः, व्याख्या च व्याकरणानुसारिणी; मीमांसकश्चेन्मीमांसानुसारिणीति पश्यामः। सर्वस्मिन्नपि शास्त्रे द्वित्रा एव प्रधानतया परिगण्यन्ते। तत्तच्छास्त्रे भाष्यकारपर्यन्तं समाना एव। तदनन्तरं केचनैव प्रख्यातनामानो बभूवुः। यथा उदयनाचार्याः, भट्टकुमारिलपादाः, श्रीमदप्पयदीक्षिताः, नागेशभट्टाः, वाचस्पतिमिश्राः, श्रीहर्ष इत्यादयः। तथालङ्कारशास्त्रनिकेतनस्य श्रीमम्मटाचार्याः स्तम्भभूताः। यद्यप्येतेषां काव्यप्रकाशस्यावलम्बो लोचनग्रन्थः, किन्तु लोचनस्य न तावान् प्रचारो जगति यथा काव्यप्रकाशस्य। एतेन नेदमुक्तं भवति यदन्ये ग्रन्थकर्तारो ग्रन्था वा दवीयांस इति। 'अपशवो वा अन्ये गो अश्वेभ्यः गो अश्वाः पशवः' इति 'न हि निन्दान्यायेन' मम्मटाचार्याणां काव्यप्रकाशस्य च श्रेयस्त्वे तात्पर्यमुन्नेतव्यम्। अक्षराण्यत्यल्पानि विषयाश्च बहवोऽतिगभीराः। विषयान् बहून् गभीरांश्च विलोक्य नानाव्याख्यातारो ग्रन्थमेनं व्याख्यातुं प्रावर्तन्त। पुण्यश्लोका इमे मम्मटभट्टाः।

पण्डितप्रवरैः **श्रीपरमानन्दचक्रवर्तिभिः काव्यप्रकाशविस्तारिका**-नाम्नी व्याख्या व्यरचि। व्याख्यायां पठ्यमानायां नूनं नैयायिकत्वं तेषां प्रतीयते। व्याख्यालक्षणेन परिपूरितेयं विस्तारिका। व्याख्यातुर्विषये यद्वक्तव्यं तत्सर्वं सविस्तरं श्रीमद्भिः डॉ० **श्रीगौरीनाथशास्त्रिभि**स्स्वीये प्राक्कथने सुविशदं न्यरूपि। न ततोऽधिकं किञ्चिल्लेखनीयमवशिष्यते।

प्रत्युल्लासं काव्यप्रकाशगतान् विषयान् संगृह्य निरूपयन् विशेषेण मीमांसा-शास्त्रसम्बन्धिनः पदार्थान् ग्रन्थकारेण निर्दिष्टान् छात्रोपकाराय विवृणोतु-मिच्छामि। क्वचिच्च सूत्रं वृत्तिग्रन्थञ्च विशदयितुमभिलषामि।

प्रथमोल्लासे काव्यसामान्यलक्षणपरे सूत्रे "तददोषौ शब्दार्थौ सगुणावन-लङ्कृती पुनः क्वापि" इत्यत्र तच्छब्देन 'काव्यं यशसेऽर्थकृते' इत्यत्र निर्दिष्टं काव्यं परामृशन्तः शब्देऽर्थे च काव्यत्वमङ्गीकुर्वन्ति मम्मटाचार्याः। तयो-श्शब्दार्थयोर्विशेषणानि त्रीण्युपात्तानि। लक्षणमिदं पर्यालोचयन्तोऽर्वाचीना लक्षणे दोषानुद्भाव्य स्वस्वाभिमतं लक्षणमभिदधते। तत्परवर्तिनो मम्मटानु-यायिनो मम्मटलक्षणं समर्थयन्ते। एवं खण्डनमण्डनरीतिश्चिरात् प्रसृता। अयञ्च स्वभावो नवीनानां यत्प्राचीनमतखण्डनं नाम। नूतनं किमप्याविष्कृत्य विद्वत्समाजे यथा लब्धप्रतिष्ठः स्याम्, तथा चेष्टितव्यमिति नवीनस्य प्रायशः प्रवृत्तिः। एवं प्रवृत्तिर्न दोषायेति विश्वसिमि, यतो ह्यनया विलक्षणा काचना-नितरसाधारणी चिन्तनाशक्तिः, तया च ग्रन्थप्रणयनम्, तदुपपादनम्, स्वशि-ष्येभ्यः प्रबोधनम्, तत्प्रसारणमित्यादिषु शिक्षासम्बन्धिषु व्यापारेषु विदुषां समयो व्यतीतो भवति। परमशोभनस्स कालश्चिरन्तनैरन्वभावि यत्रैवंविधेषु व्यापारेषु संलग्नाः संस्कृतसाहित्यस्य कलेवरं प्रवर्धयामासुः। सम्प्रति सा धारा न केवलं विरता, किन्तु लोपं गतेति महतः खेदस्य विषयः।

खण्डनमण्डनरीतिं किञ्चिदिव सम्प्रति विमृशामः। विश्वनाथः पण्डित-राजश्च काव्यलक्षणेऽस्मिन् विप्रतिपद्येते। शब्दैकनिष्ठत्वं काव्यस्य स्वीकुरुतः। मतमिदं नाम्यां स्वकपोलकल्पितम्, किन्तु प्राचीनमेव। शब्दार्थमयत्वमतमपि काव्यस्य प्राचीनमेव। प्राचीनैर्विचार्य निर्णीतं मतद्वयं परिगृह्य यद् यस्मै रोचते तत्तेन विशदीकृतम्। विशदीकरणावसरे परमतखण्डनव्यापार आपतति। अथवा स्वोद्दिष्टलक्षणसमर्थनाय परमतपर्यालोचनं कर्तव्यं भवति। 'वाक्यं रसात्मकं काव्यम्' इति लक्षणमुद्दिष्टं विश्वनाथस्य। रससम्बन्धेन विना काव्यं सुन्दरं न भवतीति प्रायस्सर्व एवालङ्कारिका अभ्युपयन्ति। मम्मटाचार्यैः स्वीये लक्षणे रससम्बन्धो न निर्दिष्ट इति तदीयं लक्षणं समालोचयति। किन्तु गुणानां

रसाव्यभिचारित्वेन गुणेषु सत्सु तदव्यभिचारिणो रसस्यापि सत्ता तत्र स्यादेवेति मन्वानाः 'सगुणौ' इति विशेषणं ददति मम्मटाचार्याः। 'अर्थो गिरामपिहितः पिहितश्च कश्चित्सौभाग्यमेति' इति खलु न्यायः। येन विना यन्न तिष्ठति तेन तदस्तीति प्रतीयते। सत्सु गुणेषु सति वा गुणे रसोऽस्तीति प्रतीयते। 'सगुणौ' इति विशेषणं शब्दार्थयोर्ददाना आचार्या काव्यनिर्मातॄन् कविवरान् बोधयन्ति—यदेवं भवन्तः काव्यानि निर्मिमताम्, यत्र प्रतीयमानार्थप्रतिपादकत्वं सिध्येत्। शास्त्रं हि नाम शासकम्। एवमभिप्रायेण लक्षणे प्रत्यक्षं रसपदं न निवेशितमिति मम्मटाभिप्रायः कल्पयितुं शक्यते। मनोहार्येव काव्यमुपादेयतममित्यालङ्कारिकाणां राजमार्गः। मञ्जुलैस्सरसैस्सरलैश्च शब्दपुञ्जैः सङ्ग्रथितेन काव्येन कविस्सहृदयानां मनांसि हरतीति लोकप्रसिद्धिः। तत्र शब्दश्रवणमात्रेण कश्चन शिरश्चालयति, अपरश्च तदर्थमवबुध्य परां निर्वृतिमादधाति। अर्थज्ञानेन विना शब्दमात्रेण तोषमवाप्नोति, अर्थेन च ज्ञातेनापरः। अर्थस्तु विना शब्देन, शब्दस्तु विनार्थेन न तिष्ठत इति दार्शनिकानां शास्त्रकाराणाञ्च पद्धतिः। अर्थस्य प्राधान्ये शब्दस्योपसर्जनता, शब्दस्य तथात्वेऽर्थस्योपसर्जनतेति स्वयं मम्मटाचार्या द्वितीयतृतीयोल्लासयोरन्तेऽभिदधते। इममभिप्रायं बोधयति 'शब्दार्थौ' इति पदम्। एवञ्च मनोहारकत्वं काव्यस्य क्वचिदर्थमादाय, क्वचिच्च शब्दमादाय, क्वचिच्चोभयमादाय भवतीति स्वीकृते सर्वमतसामञ्जस्यं सिध्यतीति 'शब्दार्थौ' पदस्य तात्पर्यम्।

'अनलङ्कृती पुनः क्वापि' इति 'अदोषौ' इति च विशेषणयोः ईषदलङ्कारवत्वे नित्यदोषा भाववत्वे च तात्पर्यमिति व्याख्यातारः। तेन च न कोऽपि दोषः। अथ वालङ्काराणां बहिरङ्गत्वात्काव्येषु क्वचित् तदभावेऽपि न हानिः। अनेन सूत्रेण काव्यप्रकाशगतस्समग्रो विषयस्सूचितः।

लक्षणगतशब्दार्थयोर्निरूपणं द्वितीयतृतीयोरुल्लासयोः, उत्तमकाव्यनिरूपणपरश्चतुर्थ उल्लासः, पञ्चमे मध्यमकाव्यं विवृतम्, षष्ठे चाधमकाव्यनिरूपणम्। दोषाणां निरूपणं सप्तमे। अष्टमे च गुणानाम्, नवमदशमयोश्शब्दार्थालङ्कारा इति।

द्वितीयोल्लासारम्भे वाचकलक्षकव्यञ्जकभेदेन त्रिविधान् शब्दान् वाच्यलक्ष्यव्यङ्ग्यभेदेनार्थांश्च त्रिविधान् निर्दिश्य 'तात्पर्यार्थोऽपि केषुचित्' इति सूत्रयन्त आचार्या अभिहितान्वयवादमन्विताभिधानवादञ्च वृत्तिग्रन्थे नाम्ना निर्दिशन्ति।

वाक्ये पदैरभिहितानां पदार्थानामन्वयं ये वदन्ति ते अभिहितान्वयवादिनः, ये चान्वितानामेवार्थानामभिधानं पदानि कुर्वन्तीति वदन्ति तेऽन्विताभिधानवादिनः। प्रथममतं प्राचीननैयायिकानां भाट्टानाञ्च, द्वितीयञ्च प्राभाकराणाम्। प्रथममते अन्वितो योऽर्थः तस्य वाचकत्वेन वाक्यान्तर्गतं किमपि पदं न समर्थम् सर्वाणि पदानि संहत्य तमर्थं ब्रुवत इत्यपि न साधु, तथाविधशक्तिग्रहासम्भवात्, वाक्यञ्च न तदर्थे शक्तम्। 'वृत्त्या पदजन्यपदार्थोपस्थितिरेव शाब्दबोधे कारणम्' इति नियमेनान्वितार्थोपस्थितिं प्रति वृत्तिः काचनापेक्ष्यते। सा च वृत्तिस्तात्पर्याभिधाना, अन्विताभिधानवादे च सा वृत्तिरभिधैवेति प्रघट्टकसारः।

अत्रायं विशेषः—भाट्टानां मतेऽर्थाभिधानाय पदानां तिस्र एव वृत्तयः सन्ति—अभिधा, लक्षणा, गौणी चेति। तात्पर्याख्याया वृत्तेः कण्ठत उल्लेखः क्वापि न दृश्यते। भाष्यकाराः श्रीशबरस्वामिनो वाक्याधिकरणे 'पदानि हि स्वं स्वं पदार्थमभिधाय निवृत्तव्यापाराणि। अथेदानीं पदार्था अवगताः सन्तो वाक्यार्थं गमयन्ति' इत्यभिदधानाः पदार्थानां वाक्यार्थगमकत्वं निर्दिशन्ति। भाष्यसन्दर्भस्यायमर्थः—वाक्ये प्रयुज्यमानानि पदानि तानि तानि, स्वस्वार्थमात्रप्रतिपादकानि, न विशिष्टरूपं वाक्यार्थमवबोधयितुं क्षमन्ते, तथापि तेषां पदानां न पदार्थमात्रप्रतिपादने तात्पर्यम्, प्रमाणान्तरसिद्धत्वात्। अभिधाव्यापारस्तु पदार्थेष्वेव पर्यवस्येत्, तात्पर्यन्तु न पर्यवसितम् तस्य वाक्यार्थपर्यन्तत्वात्। अत उक्तरीत्या पदैः प्रतीताः पदार्था एव सामान्यविशेषभावादिना परस्परं सम्बद्धं वाक्यार्थं गमयन्तीति वाक्यार्थस्य शब्दप्रमेयतया शाब्दत्वं सिध्यतीति। विना किमपि प्रयोजनं न हि वाक्यमुच्चार्यते। तदिदं सूत्रकारो जैमिनिः 'तद्भूतानां क्रियार्थेन समाम्नायः' इत्यादिसूत्रे 'क्रियार्थेन' इति पदं प्रयुञ्जानोऽभिव्यनक्ति। अन्यथा पदार्थमात्रप्रतिपादनं पदानामनर्थकं निष्फलं स्यात्। फलञ्चात्र वाक्यार्थ एव। तत्र तात्पर्ये पदानां परिकल्पिते आकाङ्क्षायोग्यतासन्निधिरूपैः कारणैः परस्परं सम्बद्धाः पदार्था वाक्यार्थमुद्रया भासन्ते। भासमानोऽयं वाक्यार्थः कया वृत्त्येति प्रश्नस्तिष्ठत्येव। तात्पर्याख्यां वृत्तिं तु भट्टपादा न क्वचिदाहुः। किन्तु

"अर्थो ह्यनन्वितावस्थः पदेनाभिहितो यतः।
अन्वितामात्मनोऽवस्थां लक्षितामेव लक्षयेत्॥"

इति वदन्तो वाक्यार्थावबोधाय लक्षणामेवाभ्युपयन्ति। अत्र 'लक्षितामेव' इत्यस्य तात्पर्येणावगतामित्यर्थः। वाक्यस्यैवं तात्पर्यमिति कथमवगम्यताम्?

इति प्रश्न उपक्रमोपसंहारादिप्रमाणैः समाधातव्यः। वाक्यार्थो लक्षणया वृत्त्या बोध्यत इत्युच्यमाने मुख्यार्थबाधादिकारणत्रयस्याभावेन लक्षणा कथमिति प्रश्न आपतति। तस्य समाधानम्—भट्टपादा लक्षणां प्रति कारणत्रयमिदं न स्वीकुर्वन्ति। ते हि लक्षणाया लक्षणमेवमभिदधते—

'अभिधेयाविनाभूते प्रवृत्तिर्लक्षणेष्यते।
लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता' ॥ इति।
( तं० वा० पृ० ३५४. पूना संस्करणम् )

अनया कारिकया लक्षणागौणीवृत्त्योः स्वरूपमभिहितम्। एवञ्च वाक्यार्थ-प्रतीतिर्लक्षणयैव भाट्टमते, न तु तात्पर्याख्यया वृत्त्या। पार्थसारथिमिश्रा अपि शास्त्रदीपिकायां वाक्यार्थस्य लक्ष्यत्वमेव प्रतिपादयन्ति ( शा० दी० पृ० १५४ निर्णयसागर संस्करणम् )

एतेषां त्रयाणामप्यर्थानां व्यञ्जकत्वं वाचकस्वरूपं च निर्दिश्य शब्दानां संकेतः कस्मिन्नर्थे इति प्रतिपादयन्तो मम्मटाचार्याः पक्षद्वयं प्रदर्शयन्ति—"जात्यादिर्जातिरेव वा" इति। प्रथमपक्षे सङ्केतितश्शब्दश्चतुर्विधः, द्वितीयपक्षे चैकविधः। तत्र प्रथमपक्षनिरूपणावसरे—

"परमाण्वादीनां तु गुणमध्यपाठात् पारिभाषिकं गुणत्वम्" इति वृत्तिग्रन्थः प्रवृत्तः।

शब्दानां जातिगुणक्रियासंज्ञानां प्रवृत्तिनिमित्तत्वं प्रदर्श्य तत्र महाभाष्यञ्च प्रमाणं दर्शयता ग्रन्थकृता जात्यादिपक्ष एव स्वाभिमत इति सूचितम्। अनन्तरं परमाण्वादीनां का गतिरिति प्रश्ने तत्समाधानाय 'परमाण्वादीनां तु' इति वृत्तिग्रन्थः। अणुशब्दः परिमाणवाचीति प्रसिद्धम्। तथैवादि-शब्दग्राह्यपरममहच्छब्दोऽपि। उत्कर्षे यदपेक्षयान्यत्परिमाणं नास्ति तत्परम-महत्। अपकर्षे यदपेक्षयान्यन्नास्ति तदणुशब्दवाच्यम्। अणुरेव परमाणु-शब्देनापि व्यवह्रियते। अतः 'परमाणुपरममहत्' शब्दौ परिमाणवाचकाविति सिध्यति। द्रव्यवचनोऽपि परमाणुशब्दो दृश्यते—पृथ्वीपरमाणुः, जलपरमाणु-रिति। द्रव्यवाचकत्वेनापि दृश्यमानत्वाज्जातिप्रवृत्तिनिमित्तकत्वमस्य भवितुमर्हति। अस्यां स्थितौ नैयायिकाः परमाणुं कथं गुणमध्ये पठन्तीति चेत् तस्य परिमाणवाचकत्वान्न दोषः।

कथं तर्हि पारिभाषिकं गुणत्वं तस्येति चेदत्र ब्रूमः—द्वाभ्यां परमाणु-भ्यामेकं द्व्यणुकम्, त्रिभिर्द्व्यणुकैश्चैकस्त्रसरेणुरुत्पद्यते। तत्र द्व्यणुकपर्यन्तं

पदार्थोऽप्रत्यक्षः, महत्त्वाभावात् उद्भूतरूपाभावाच्च। प्रत्यक्षं प्रति महत्त्वस्य कारणत्वात्। त्रसरेणौ महत्त्वस्योत्पन्नत्वात् सः प्रत्यक्षः। त्रसरेणुगतमहत्त्वं प्रति समवायिकारणं त्रसरेणुद्रव्यम्, असमवायिकारणं तु द्व्यणुकगतसंख्येति स्थितिः। यदि परमाणौ द्व्यणुके वा विद्यमानस्य परिमाणस्य कारणत्वमभविष्यत् तर्हि तस्यैवासमवायिकारणत्वं त्रसरेणुगतपरिमाणं प्रत्यभविष्यत्, न द्व्यणुकगत संख्यायाः। अस्यां स्थितावणोर्गुणमध्यपाठः कस्मै फलाय स्यादृते ज्ञानकारणत्वात्। किञ्च गुणत्वजातिः 'द्रव्यकर्मभिन्ने सामान्यवति या कारणता सा किञ्चिद्धर्मावच्छेद्या, कारणतात्वात्' इत्यनुमानेन गुणत्वजातिः साध्यते। यद्यपि गुणत्वजाती रूपादिषु संयुक्तसमवेतसमवायसम्बन्धेन प्रत्यक्षैव भवति, तथाप्यतीन्द्रियरूपादौ तत्प्रत्यक्षासंभवेन तत्साधारण्यं गुणत्वस्य न घटत इत्यनुमानं प्रमाणमाश्रितं नैयायिकैः। किञ्च "पारिमाण्डल्यभिन्नानां कारणत्वमुदाहृतम्" इति पारिमाण्डल्यस्याणुपरिमाणस्य कारणत्वं निराकृतम्। एवमादिभिः कारणैरणुर्नाम कश्चन गुणः कस्मै फलाय स्वीकार्य इति प्रश्नः समुदेति। तदर्थं मम्मटाचार्यः "पारिभाषिकं गुणत्वम्" इत्यभिदधे। एवं ब्रुवतो मम्मटस्य परमाणुर्द्रव्यम्, स च जातिप्रवृत्तिनिमित्तकः। अत्र यदि साङ्कर्यं जातिबाधकमुपस्थाप्येत तर्हि सांकर्यस्य जातिबाधकत्वं नाभिमतमित्याशयो व्यज्यते। अथवा पृथिवीत्वव्याप्यपरमाणुत्वजातेः स्वीकारे न काचिद्विप्रतिपत्तिरिति मम्मटाशयः। विषयस्यास्य विवेचने नैयायिकप्रवराः पण्डितराजा मत्सुहृदः श्रीबदरीनाथशुक्लमहाभागाः, तथाविधाः श्रीवेप्पत्तूरसुब्रह्मण्यशास्त्रिणश्च साहाय्यमाचरितवन्त इति तेभ्यः कृतज्ञतामाविष्करोमि।

द्वितीयपक्षस्तु मीमांसकानाम्। अत्र जातिशब्दः प्रकारोपलक्षकः। प्रकाररूपेण यो भासते तत्र शब्दानां शक्तिरिति भावः। अनन्तरमभिधाव्यापारलक्षणाव्यापारस्वरूपमुपादानलक्षणा लक्षणलक्षणेति च विभागं प्रदर्श्य तत्रोपादानलक्षणायाः 'गौरनुबन्ध्यः' इत्युदाहरणं भवेन्न वेति विचारितवन्तः। ज्योतिष्टोमे पञ्चमदिने सवनीयपश्वनुष्ठानानन्तरम् "मैत्रावरुणीं वशामालभेत" इति श्रुत्या विहित आनुबन्ध्ययागः क्रियते। तस्यैव 'गौरनुबन्ध्यः' इति विधायकं वाक्यान्तरम्। अत्र यागे गौर्द्रव्यम्, देवते च मित्रावरुणौ, गोशब्दस्य चाकृत्यधिकरणन्यायेन "विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे" इति गोत्वमर्थः। तच्च यागसाधनं न भवितुमर्हति, जातेः क्रियानिर्वर्तकत्वानुपपत्तेः। क्रियानिर्वर्तकत्वञ्च श्रुत्योपदिश्यते। अतस्तत्सिद्ध्ये परस्य जात्याश्रयस्य द्रव्यस्याक्षेपो लक्षणा क्रियत इति गौरनुबन्ध्य इत्युपादानलक्षणोदाहरणं भवत्विति शङ्कितु-

राशयः। समाधातुश्चायमाशयः—लक्षण।लक्षणशरीरे रूढिप्रयोजनान्यतरत्वस्य निवेशेन प्रयोजनस्यानुपलब्धिबाधात्, रूढ्यभावाच्च लक्षणाया अप्रवृत्तिः। जातेर्व्यक्त्या सहाविनाभावसम्बन्धाद् जातिर्व्यक्त्याश्रिता जातित्वादित्यनुमान-द्वारा व्यक्तेर्लाभान्न लक्षणाया अवसर इति। किन्तु शाब्दबोधे व्यक्तेर्बोधं प्रति लक्षणैवाश्रयणीया, अविनाभावस्तु संबन्धसामान्ये भवितुमर्हति। अत इदमुपा-दानलक्षणोदाहरणं भवतीति। उपादानलक्षणायाः यष्टयः प्रविशन्ति इति, लक्षण-लक्षणायाः 'गङ्गायां घोषः' इत्युदाहरणं प्रदर्श्यानयोरुपचारामिश्रितत्वहेतुना शुद्धात्वमुपपादितम्। उभयत्रौपचारिकप्रयोगाभावेन शुद्धात्वमित्यर्थः। एतेनो-पचारमिश्रितत्वं गौणीत्वमित्युक्तं भवति। एवं शुद्धागौण्योर्लक्षणयोर्भेदं सोदाहरणं सविभागञ्च प्रदर्श्य गौण्या लक्षणान्तर्भावो मतत्रयप्रदर्शनपुरस्सरं निरूपितः। अत्रैव गौण्या वृत्त्यन्तरत्वमाश्रयतां मीमांसकानां मतप्रदर्शनाय भट्टपादानां कारिका 'अभिधेयाविनाभूते' त्यादिः प्रदर्शिता। गौण्या वृत्तेर्लक्षणान्तर्भाववादिनां यन्मतत्रयं प्रदर्शितम्, तत्र तृतीयं मतं ग्रन्थकृदभिमतमिति सर्वे एव व्याख्यातारः कथयन्ति। "साधारणगुणाश्रयत्वेन परार्थ एव लक्ष्यत इत्यपरे" इत्यत्र 'अपरे' इति पदं न परे-अपरे इति विगृह्य स्वमतान्तर्गतमिति व्याचक्षते। साधारण-गुणा गोगतजाड्यादयः, तदाश्रयत्वं गवि वाहीके चेति गोपदेन वाहीक एव परार्थो लक्ष्यते - गोगतजाड्यादिसदृशगुणाश्रयो वाहीक इति बोधः। अत्र लक्ष्यो वाहीक इत्यत्र न संशयः, किन्तु स्वगतगुणविशिष्टो लक्ष्यते ? उत केवलो वाहीकः ? वृत्तिग्रन्थे 'परार्थ एव' इत्येवकारस्य व्यवच्छेदकत्वाद् जाड्यादि-गुणानां व्यवच्छेदः तेन क्रियत इति केवलं वाहीकस्यैव लक्ष्यत्वम्। तेन गुणानां प्रतीतिस्तु व्यञ्जनयेति केचिदाशेरते। जाड्यादिगुणविशिष्टस्य लक्ष्यत्वेऽपि योग्यतया ते गुणास्स्वगता एव लक्षणया गृह्यन्ते गोनिष्ठगुणानां व्यञ्जनया प्रतीतिर्भवितुमर्हति। वृत्तिग्रन्थगतैवकारस्य व्यवच्छेदस्तु पूर्वं प्रदर्शितमतद्वयस्य भवितुमर्हतीत्यन्ये।

गौण्या वृत्तित्वं साधयतां मीमांसकानामयमाशयः—महर्षिजमिनिर्वेदेषु शास्त्रलोकतदुभयविरुद्धवदवभासमानानि वाक्यानि समुपलभ्य तेषामप्रामाण्य-माशङ्क्य परिजहार। तदर्थं 'गुणवादस्तु' इति सामान्यतया सूत्रयित्वा गुणवादं प्रति निमित्तानि षट् 'तत्सिद्धि-जाति-सारूप्य-प्रशंसा-भूम-लिङ्गसमवाया इति गुणाश्रयाः' इति सूत्रे पर्यजीगणत्। तत्रैकस्योदाहरणं प्रदर्श्य प्रकृतेन सह तत्समन्वयः क्रियते। यथा 'गौर्वाहीकः' इत्युदाहरणं गौणीलक्षणायाः, तथा 'यजमानः प्रस्तर' इति वैदिकमुदाहरणं गौणीवृत्तेः। यजमानशब्दः कर्मजन्य-

फलोपभोक्तृकर्तृवाचकः। प्रस्तरशब्दस्तु दर्भमुष्टिवाचकः। दर्भाणां लवनावसरे यः प्रथमो मुष्टिः स प्रस्तर इति याज्ञिकानां संज्ञा। भिन्नार्थयोरनयोः सामानाधिकरण्यं दृश्यते। तदुपपादनाय गौणीवृत्तिराश्रिता। अत्र च निमित्तं 'तत्सिद्धिः'। तत्कार्यकरत्वमित्यर्थः। क्रतौ यजमानस्य कार्याणि भवन्ति—उद्देशत्यागः, अनुमन्त्रणमन्त्रपाठः, यागसम्पादनम् इत्यादयः। तत्र चेतनकर्तृक-कार्याणि विहाय तदन्यानि कार्याणि लक्षयित्वा तादृशकार्ययोगः प्रस्तरेऽस्तीति यजमानकार्यसमानजातीयकार्यकारी प्रस्तर इति यजमानपदं प्रस्तरस्तावकम्। अत्र लक्ष्यमाणगुणः—यजमानकार्यं यागनिर्वर्तनम्, तच्च 'प्रस्तरे हवींष्यासादयति' इति विहितं हविर्धारणं प्रस्तरेऽप्यस्ति। अतस्तत्कार्यकारित्वं गौण्या वृत्त्या बोध्यते। तथा च महाभागोऽयं प्रस्तरः, येनायं यजमानकार्यसमानकार्य-कारीति स्तुतिबुद्धिर्भवति। एवञ्च भट्टपादकारिकाया अयं निष्कर्षः—स्ववाच्य-सम्बन्धवत्त्वं लक्षणा। कारिकागतमविनाभावपदं सम्बन्धान्तरस्याप्युपलक्षकम्। यथा—'गङ्गायां घोष' इत्यत्र गङ्गापदशक्यप्रवाहसम्बन्धोऽस्ति तीरे। अतो गङ्गापदात्तीरबोधे लक्षणावृत्तिः। अभिधया प्रवाहबोधे जाते एकसम्बन्धि-ज्ञानमपरसम्बन्धिनं स्मारयतीति विधया तत्सम्बन्धवत्ताबोधः। तेन तीरविशे-ष्यकगङ्गासम्बद्धतीरत्वप्रकारकबोधस्य शाब्दत्वं सिध्यति। 'गङ्गायां घोष' इत्यादावुभयविधः शाब्दबोधोऽनुभवसिद्धः—कदाचित् शक्यसम्बन्धः सम्बन्ध-त्वेन रूपेण भासमान एव प्रकारताघटकः, गङ्गासम्बन्धितीरे घोषः, सिंह सम्बन्धी देवदत्त इति; कदाचिच्च स एव सम्बन्धः शक्यसम्बन्धत्वेन रूपेण न भासते, अपि तु तन्निष्ठसंयोगत्वादिना—गङ्गानिष्ठसंयोगवति तीरे घोष इति। एवञ्च तत्तत्प्रकारताभेदेन बोधे वैलक्षण्यात् कार्यवैलक्षण्यानुरोधेन कारण-वैलक्षण्यस्यावश्यकत्वाद् यत्र सम्बन्धिता साक्षात् परम्परासाधारण्येन प्रकारे प्रविष्टा गङ्गासम्बन्धिनि घोषः, गङ्गासम्बन्धितीरे घोष इति तादृशशाब्दत्वाव-च्छिन्नं प्रति लक्षणापदाभिधेयः स्वशक्यसम्बन्धत्वेन ज्ञातः कारणमिति। तदिद-मुक्तम्—'अभिधेयाविनाभूते प्रवृत्तिर्लक्षणेष्यते' इति।

यत्र तु स एव सम्बन्धो न सम्बन्धत्वेन रूपेण भासते किन्तु तन्निष्ठगुण-वत्तादिना भासमान एव बोधे प्रकारीभवति तादृशबोधं प्रति गौणीपदाभि-धेयस्वशक्यनिष्ठगुणवत्ता तत्त्वेन ज्ञाता कारणम्। तदुक्तम्—"लक्ष्यमाणगुणै-र्योगाद्वृत्तेरिष्टा तु गौणता" इति।

तदेवं सारोपसाध्यवसानादिना लक्षणाविभागं प्रदर्श्य 'लक्षणा तेन षड्विधा' इत्युपसंहृत्य पुनः प्रकारत्रयं व्यञ्जनकृतम्—अव्यङ्ग्या, गूढव्यङ्ग्या, अगूढ-

व्यङ्ग्येति सोदाहरणं प्रतिपाद्यात्र व्यङ्ग्यस्य प्रतीतिः—नाभिधया, नापि लक्षणया, किन्तु व्यञ्जनयैवेति दर्शयित्वा व्यङ्ग्यस्य प्रयोजनस्व लक्षणाविषय-त्वेऽनवस्थादोषमुपपाद्य प्रयोजनसहितस्य—शैत्यपावनत्वादिविशिष्टतीरस्य 'गङ्गायां घोषः' इत्यादौ लक्षणाविषयत्वे किं व्यञ्जनयेति शंकाया उत्तरत्वेन—

'ज्ञानस्य विषयो ह्यन्यः फलमन्यदुदाहृतम्' इति कारिका प्रवृत्ता ।

अस्या अर्थः— शैत्यपावनत्वादिविशिष्टे तीरे घोषः' इति लक्षणाजन्य बोधे विशिष्टवैशिष्ट्यभावेन सतोरपि तीरशैत्यपावनत्वयोर्भेदो विद्यत एव । लक्षणाजन्यज्ञानस्य विषयः तीरम्, तद्विशेषणभूतं शैत्यपावनत्वादिकम् । उभयोर्भेदो विद्यत एव । तदनयोस्स्वरूपत एव विद्यमाने भेदे कारिकायाः किं प्रकृते प्रयोजनम् इति चेदत्र वदामः—अनया कारिकया नानयोर्भेद उच्यते । किन्तूभयोः कालो भिन्न इति कथ्यते । तथा हि—कारणं यथा कार्यनियत-पूर्वक्षणवृत्ति भवति, तथा कार्येणापि भिन्नकालवृत्तिना भवितव्यमिति पद्धतिः । कार्यकारणयोरेकक्षणवृत्तित्वाङ्गीकारे कारणत्वमपि न सिध्येन्न कार्यत्वमपि । फलञ्च साध्यमित्यत्र न सन्देहः । साध्यञ्चेत् तस्य साधनेन केनचित् भवितव्यम् । तत्र घटादिविषयैः सह चक्षुरादिष्विन्द्रियेषु संयुक्तेषु 'अयं घटः' 'इदं नीलम्' इत्यादीनि ज्ञानानि समुद्भवन्ति । यथा आलोकसहकृतं चक्षुः उद्भूतरूपं महत्त्वमित्यादीनि भवन्ति प्रत्यक्षज्ञानं प्रति कारणानि, तथा विषयविधया विषयस्यापि प्रत्यक्षज्ञानकारणतास्ति । तत्र ज्ञाने समुत्पन्नेऽपि तन्न ज्ञातमित्यङ्गी-क्रियते मीमांसकैः । नैयायिकैश्च प्रथमसमुत्पन्ने ज्ञाने न प्रामाण्यं स्वीक्रियते । यदा 'ज्ञातो घटः' इति प्रतीतिरुपजायते ज्ञातताविषयिणी, तदैव ज्ञाततया घटज्ञानमनुमीयते, तत एव घटादिर्ज्ञायत इति, एवं 'घटमहं जानामि' 'घटेन जलमाहरामि' इत्याद्यनुव्यवसायात्मके ज्ञाने जाते प्रथमसमुत्पन्ने ज्ञाने प्रामाण्यं गृहीतं भवतीति द्वयोर्ज्ञानयोः सरणिः । एवञ्च ज्ञानकारणीभूतो विषयो भिन्न-कालः, ज्ञानफलभूता ज्ञातता वा संवित्तिर्वा ( अनुव्यवसायः ) भिन्नकाला इत्यन्यशब्दौ कालपराविति कारिकायां स्वीकार्यौ । एतेन 'प्रत्यक्षादेर्नीलादि-विषयः, फलं तु प्रकटता संवित्तिर्वा' इति वृत्तिग्रन्थः सङ्गच्छते । प्रत्यक्षादि-ज्ञानस्य नीलादिविषयः कारणम्, स च भिन्नकालः, साध्यं तु फलं प्रकटता संवित्तिर्वा भिन्नकालेति वृत्तिग्रन्थार्थो निष्पद्यते ।

अत्रायं विशेषः—ज्ञानं स्वयं प्रकाशम्, तच्च निरालम्बनमिति साधयतां मतं द्वाभ्यामपि निरसनीयम् । निरसनप्रकारस्तूभयोर्भिन्नः । प्रत्यक्षस्य बहिः

प्रवृत्तौ सामर्थ्यमेव नास्तीत्यङ्गीकुर्वन् बौद्धः प्रतीयमानोऽर्थो ज्ञानात्मकः, न बाह्य इति साधयति। ज्ञानमेव भासते, अर्थस्तु जडो न भासते, अतो ज्ञानं स्वप्रकाशं नीलाद्याकारविशिष्टं प्रत्यक्षं प्रतीयते। एवञ्च स्वप्रकाशबुद्धेरेव ग्राह्यत्वेन ग्राह्यग्राहकयोरैक्यस्याभ्युपगन्तव्यत्वात् तत्रैवोपक्षीणा प्रत्यक्षप्रमा न तद्भिन्नबाह्यार्थकल्पनक्षमेति बाह्यार्थसद्भावो निष्प्रमाणक इति तस्य साधनप्रकारः।

ज्ञानन्तु भासते न तु ज्ञानमेव भासते, अर्थस्यापि भासमानत्वात्। अर्थाधीनमेव ज्ञानं प्रत्यक्षं भवति। ज्ञानेच्छाकृतीनां सविषयत्वात् विषयेण विना ज्ञानानुत्पत्तेः। विना कारणेन नैकस्याप्युत्पत्तिरिति ज्ञानस्योत्पत्तौ यथेन्द्रियसन्निकर्षादिकमावश्यकम्, तथा विषयस्याप्यावश्यकता। स च तदुत्पत्तौ कारणम। तथा सति पूर्ववर्तित्वं तस्य बलादभ्युपगन्तव्यम्। ग्राह्यं ग्राहकेण गृह्यत इति वदन्तो बौद्धा ग्राह्यग्राहकभावं ज्ञानस्य स्वीकुर्वन्ति—ग्राह्यज्ञानं ग्राहकज्ञानमिति। ग्राहकज्ञानं स्वांशमेव गृह्णाति इत्युभयोरभेदः, तेन ज्ञानादन्यो बाह्यः पदार्थो नास्तीति ते साधयन्ति। 'न हि निपुणतरोऽपि स्वस्कन्धमारोढुं समर्थः' इति रीत्या स्वयं स्वांशं गृह्णातीति न युक्तम्। स्वयं ग्राहकम् स्वांशस्तु ग्राह्यः। ग्राह्यस्य स्वांशस्य ग्रहणावसरे स्वयं ग्राहकमेव नास्ति, कथं गृह्णीयात्? ग्राहकत्वञ्च ग्राह्यनिरूपितम्, ग्राह्यमेव नास्ति कथं ग्राहकत्वं सिध्येत्? अतो ज्ञानं सालम्बनमङ्गीकर्तव्यम्। आलम्बनमेव ज्ञानस्य विषयो जनकञ्च। तदिदमुक्तम् 'ज्ञानस्य विषयो ह्यन्यः' इति। एवं प्रत्यक्षेण गृहीतस्य घटस्यार्थक्रियाकारितापि प्रत्यक्षमनुभूयते—घटेन जलमाहरामि' 'घटेन जलं पिबामि' इति। इयमेव संवित्तिः। तदिदमुक्तम्—'फलमन्यदुदाहृतमिति। इयं नैयायिकसरणिः।

मीमांसकास्तु—पूर्वोक्तविषयेन्द्रियसन्निकर्षादिना ज्ञानमुत्पद्यते, किन्तु तदा तन्न ज्ञायते। तदा तज्ज्ञायते, यदार्थस्य प्रत्यक्षं भवति। अर्थस्यैव प्रत्यक्षं न ज्ञानस्य। अर्थप्रतीत्यनन्तरमनुमानेन तज्ज्ञायते। अर्थविषया हि प्रत्यक्षा बुद्धिः। अर्थ एव साकारः, ज्ञानन्तु निराकारम्। अर्थे ज्ञाते सति ज्ञाततालिङ्गकानुमानाद् बुद्धिमवगच्छति—'ज्ञातो घटः' इति। घटो विषयतासम्बन्धेन ज्ञानविशिष्टः, स्वरूपसम्बन्धेन ज्ञाततावत्त्वादित्यनुमानम्। ज्ञातता नाम ज्ञानजन्यो ज्ञेयनिष्ठोऽतिशयविशेषः। स च मानसप्रत्यक्षविषयः। ज्ञाततैव प्रकटतेत्युच्यत इति वदन्ति। इयञ्च प्रकटता नैयायिकानां संवित्तिस्थानीया।

वैलक्षण्यमिदम्—ज्ञानं प्रत्यक्षमिति बौद्धो वदति, तद्विपरीतं कथयन्ति मीमांसकाः। बौद्धैः स्वीकृतात् पदार्थादंशतोऽपि ग्रहणं मीमांसका नेच्छन्ति। अतो नैयायिकमतात्किञ्चिद्वैलक्षण्यमाश्रितवन्तो मीमांसकाः।

बौद्धमतखण्डनं तु अर्थप्रत्यक्षानन्तरमेव तज्जन्यविषयगतातिशयविशेषेण ज्ञानमनुमेयं भवतीति साधिते स्वयमेव सिध्यति। तदिदमुक्तम्—'ज्ञानस्य विषयो ह्यन्यः' इत्यादिकम्। एवञ्च विशिष्टे लक्षणायां स्वीकृतायां लक्षणाजन्यं ज्ञानं शैत्यपावनत्वादिविशिष्टगङ्गातीरे घोष इत्याकारकं भवेत्। तत्र ज्ञानस्य विषयकोटावेव शैत्यपावनत्वादिकं फलमपि निपतति। तदा विषयात्तीरात् फलं भिन्नकालं न जातमिति मीमांसक-नैयायिकशास्त्रविरोधः, फलस्य ज्ञानविषयत्वात्। एवं विशिष्टे लक्षणां निरस्य ये विशेषाः शैत्यपावनत्वादयस्तेषां प्रतीत्यर्थं व्यञ्जनैव वृत्तिः स्वीकार्येत्यभिधाय लक्षणामूलध्वनिर्निरूपितः। अनन्तरमभिधामूलध्वनिसिद्धये नियामकानि संयोगादीनि परिगणय्य तत्तदुदाहरणेषु च सङ्गमय्य व्यञ्जकशब्दप्रदर्शनेन द्वितीयोल्लासः समापितः।

तृतीय उल्लासेऽर्थव्यञ्जकताया निमित्तानि वक्तृबोद्धव्यकाकादीनि तदुदाहरणानि च प्रदर्शितानि। एतावता काव्यशरीरस्य शब्दार्थमयत्वं साधु निरूपितम्।

चतुर्थ उल्लास उत्तमकाव्यं साङ्गोपाङ्गं विवेचितम्। प्रथमं द्वितीय उल्लासे लक्षणामूलध्वनिर्निर्दिष्टः। अनन्तरं तृतीय उल्लासेऽभिधामूलध्वनिः। तेनैव क्रमेण चतुर्थ उल्लासे दण्डकलितवदावृत्तिन्यायेन प्रथमं लक्षणामूलध्वनिं विभज्य तदुदाहरणानि च प्रदर्श्यानन्तरमभिधामूलध्वनेर्विभागस्तदुदाहरणानि च निरूपितानि। तत्र ध्वनिर्द्विविधः—अविवक्षितवाच्यध्वनिः, विवक्षितान्यपरवाच्यध्वनिश्चेति। प्रथमो लक्षणामूलः, द्वितीयश्चाभिधामूलः। लक्षणामूलो द्विविधः—अर्थान्तरसंक्रमितवाच्यध्वनिः, अत्यन्ततिरस्कृतवाच्यध्वनिश्चेति। एतेषामुदाहरणानि दर्शयित्वा विवक्षितान्यपरवाच्यध्वनेर्विभागः—असंलक्ष्यक्रमव्यङ्ग्यः संलक्ष्यक्रमव्यङ्ग्यश्चेति। असंलक्ष्यक्रम एकविधः। व्यङ्ग्यभानाय नियतः कश्चन क्रम इष्यते—विभावानुभावसञ्चारिभावानामवगमः, तदनन्तरं तैर्व्यङ्ग्यरसाद्यवगमः, अयं क्रमो यत्र न ज्ञायते तत्रालक्ष्यत्वं क्रमस्य, यत्र च स क्रमो लक्ष्यते, तत्र संलक्ष्यक्रमत्वमित्यर्थः। असंलक्ष्यक्रमव्यङ्ग्या रसादयो भवन्ति रस–भाव–रसाभास—भावाभास–भावशान्ति–भावोदय–भावशबलता इति। एतेषु प्रथमो रसः। अस्य स्वरूपं विवृणवते मम्मटाचार्याः। "विभावानुभाव-

सञ्चारिभावसंयोगाद्रसनिष्पत्तिः" इति भरतसूत्राधारेण रसस्वरूपं विवेचितम्। तत्र चत्वारि मतानि प्रदर्शितानि–भट्टलोल्लट–श्रीशङ्कुक-भट्टनायक-अभिनवगुप्ताचार्यनामभिः। उत्पत्त्यनुमितिपरिणामविवर्ता इति क्रमेण केचन संज्ञाः प्रददति। तेन मीमांसक–नैयायिक–सांख्याद्वैतदर्शनानामिमानि मतानीति व्यवहरन्ति। अपरे चैवं संज्ञाकरणे मूलं दृढतरं नोपलभ्यत इति साधयन्ति। कतिपये आरम्भवादः, अनुमितिवादः, भोजकत्ववादः, व्यक्तिवाद इति च परिगणयन्ति। तत्र अपच्छेदाधिकरणन्यायेन पूर्वं पूर्वं दुर्बलम्, उत्तरमुत्तरञ्च प्रबलमिति साधयन्ति। अन्ये च सर्वाणि मतानि तत्तदधिकारिभेदेन तुल्यानीत्यभिप्रयन्ति। भवतु यथा तथा वा। बुद्धितत्त्वस्य चिन्तनाशक्तिसंवर्द्धकानीमानि मतानीति मे मतिः।

दार्शनिकेष्वपि परस्परं भूयांसो मतभेदा भवेयुः। इमे चास्माकं बुद्धेः परिपोषकाः। एतेषु परिशील्यमानेषु परमां मनसश्शान्तिं ते जनयन्तीत्यनुभवः प्राचाम्। एकैकस्यापि जनिमातस्थुषो मानवस्य मनसश्शान्तिरावश्यिकीत्यत्र मन्ये न कोऽपि विप्रतिपद्येतेति। कामं विरुद्धानि नानाप्रस्थानानि भवेयुः। शरीरम् इन्द्रियाणि मनः बुद्धिम् एतदतिरिक्तमहंपदवाच्यं जीवम् ईश्वरञ्च पृथक्पृथगात्मत्वेन साधयन्तो बौद्धद्वैतविशिष्टाद्वैतशुद्धाद्वैताद्वैतवादिनो दार्शनिकाः प्रख्यातास्सन्ति, एतेषु बहुष्वेकस्य पन्थानमपरो नानुसरति, तथैवालङ्कारिकैरपि नैकविधानि प्रस्थानानि प्रवर्तितानि। तैर्निर्दिष्टे पथि सञ्चरन्तः शब्द एव काव्यं नार्थः, शब्दश्चार्थश्चेत्युभयं काव्यम्, अलङ्कार एव काव्यस्यात्मा नान्यः, गुण एव तादृशो नान्यः, रीतिरेव तस्यात्मा, रसस्यैवात्मत्वम्, ध्वनेरेव तथात्वम् इति स्वस्वाभिलषितं प्रसाधयन्ति। तत्राप्यास्वादविषयीभूतो रसोऽनुकार्यरामदुष्यन्तादिगत एवोत्पद्यमानः प्रतीयते, अनुकर्तृनटगतत्वेनानुमीयमानो हृदयाह्लादको भवति, सहृदयगतत्वेन भुज्यमान एवास्वादयोग्यो भवतीत्यादीनि सन्ति मिथो विरुद्धानि मतानि। एवं सन्ति वेदेष्वपि विरुद्धानि प्रस्थानानि वरुणस्यापत्यं पुमान् भृगुः पितरं वरुणमुपसृत्य पृच्छति–मह्यं ब्रह्मविद्यामुपदिशेति। सोऽप्युपदिशति प्रथममन्नं ब्रह्मेति, अनन्तरं प्राणम्, मनः, विज्ञानम्, आनन्दमिति क्रमेण ब्रह्मेति तस्मै निजगाद। इमे पञ्चकोशाः कथ्यन्ते। अन्नप्राणादीनामेकैकस्य ब्रह्मत्वं विरुद्धमपि तपसः चिन्तनात्मकस्य संवर्द्धनायायं पन्थाः स्वीकृतो वेदेनापि। तैत्तिरीयोपनिषदि भृगुवल्ल्यास्तृतीयोऽध्यायो द्रष्टव्यः। एवं वेदा वा दार्शनिका वा आलङ्कारिका वा विरुद्धानि मतानि प्रदर्शयन्तो नैवमभिप्रयन्ति-यन्मानवा भ्रान्तिकलुषचेतसो मिथो विवदमाना रागद्वेषादिभिरा-

विष्टाः परस्परं निन्दन्त ईप्सितस्य वस्तुनोऽधिगमाय मार्गं निश्चेतुमशक्नुवानाः कालं यापयन्त्विति । अद्यत्वे शास्त्रार्थसभासु विलोकयामः—यत्केनचन कस्मिंश्चन पक्षे समुत्थापिते तन्निरसितुं प्रवृत्तस्यापरस्य ओष्ठौ स्फुरतः, रक्ते लोचने भवतः, शरीरं कम्पते, धनुराकारतया भ्रुवोः प्रदर्शनम्, शरीरेण कूर्दनम्, वाचस्स्खलनम्, पक्षोत्थापकस्य गुरोरपि निन्दनञ्चेत्यादीननुभावान् । एतेषामनुभावानामुद्दीपनाय स्वपरिपोषकाणां कतिपयानामवस्थापनमप्यनुभवामः । क्वेयं विदुषां समवाये पवित्रतमा शान्तिप्रदा च शास्त्रचर्चा ? क्वेमे रौद्ररसानुभावाः ? शान्तेरवाप्तये खलु शास्त्राणि प्रवर्तितानि चिरन्तनैः । आपणे विरुद्धान्यविरुद्धानि च वस्तूनि प्रसार्यन्ते विक्रयणायापणिकैः । न हीदमापणिकानामुद्देश्यं स्यात् यद्ग्राहका इमानि वस्तूनि विरुद्धानि संवीक्ष्य कलहमाचरन्त्विति । यस्मै यद्रोचते स तत्क्रीणात्वित्येव खलु तेषामभिमतं स्यात् । तथैव शास्त्राणि सर्वाणि परिशील्य तत्तत्त्वविवेकेन मनसश्शान्तिमवाप्य, तया च परमं प्रबोधमवाप्नुवन्त्विति हि शास्त्रकाराणामभिमतम् ।

तत्र भरतसूत्रं पर्यालोचयामः यदवलम्ब्येमे वादास्सम्प्रवृत्ताः । 'विभावानुभावसञ्चारिभावसंयोगाद्रसनिष्पत्तिः' इति सूत्रम् । इदं सूत्ररत्नं परीक्षितुं रत्नतत्त्वपरीक्षका इव विमर्शकाः प्रवृत्ताः स्वं स्वं मतमाविरकार्षुः । स्वभावोऽयं रत्नतत्त्वपरीक्षकाणां यद्यो यथा निश्चिनोति रत्नस्य महिमानं मूल्यञ्च न तथैवान्योऽपि निश्चिनोतीति । अवश्यं तत्र निर्णये भवत्येव न्यूनाधिकभावः । निर्णयप्रकारभेद एव न्यूनाधिकभावं प्रति प्रयोजकः, न वस्तुतत्त्वं तत्प्रयोजकम् । तत्तु सर्वदैकरूपमेवास्ते । प्रकाराणां भेदेन मिथः कामं विरोधस्स्यात्, किन्तु तेन वस्तुनः कोऽपि न विरोधः । चूषणक्रियया चूतफलमास्वाद्य त्वचं बीजञ्च निरस्यति कश्चित् । अपरश्च कर्तनक्रियया सत्वचं फलमास्वाद्य बीजं प्रक्षिपति । अन्यस्तु कर्तनेन त्वचमपाकृत्य फलमास्वाद्य बीजं निराकरोति । एवं प्रक्रियाभेदे सत्यपि आस्वाद्यस्य फलस्य न भेदः । चूतफलेषु कामं भिन्नजातीया भवेयुः चूषणैकयोग्यम्, त्वक्सहितभक्ष्ययोग्यम्, त्वग्रहितभक्ष्ययोग्यमिति, किन्तु तद्रसास्वादस्तु न भिन्नरूपः । तत्र रसास्वादकर्तारः काव्येषु त्रयः—अनुकार्यो रामादिः, अनुकर्तारो नटाः, सामाजिका वा देवदत्तादयः ।

तत्र भट्टलोल्लटप्रभृतयो भवन्तु मीमांसकमार्गानुसारिणः अतथाविधा वा, इमेऽनुकार्यरामादिगतत्वेन रसमभिप्रयन्ति । दाशरथी रामः कौमारावस्थात एव राज्यभ्रंश-विपिननिवास-पितृवियोग-निशिचरपीडा-सीतावियोग-वानरसख्य-भीषणसंग्रामादिजनितां दुःखपरम्परां क्रमशोऽनुभवन् शोकेन महता सन्तप्त

आसीदिति कथावस्तु भगवता वल्मीकजन्ममुनिना वर्णितं वयं जानीमः। अन्ततः कथावस्तुनः परिणाममपि विद्मः। तदिदं कथावस्तु पठतां शृण्वतां पश्यतां वा हृदयमद्यापि द्रावयति, वेपथुं जनयति, रोमाञ्चमापादयति, नेत्राभ्यामश्रूणि निर्गमयति, क्रूरकर्माणं दशकण्ठमिन्द्रजितं वा दूषयितुं मनः प्रवर्तयति, भरतं लक्ष्मणञ्चाभिनन्दयति अञ्जनानन्दनञ्च श्लाघयितुं प्रवृत्तिरुपजायते इति प्रत्यक्षं नस्समेषां सहृदयानाम्। कथैव खल्वियम्। कलौ युगेऽस्मिन् रामस्य सीताया वा क्वावसर? तत्रापि गृहस्य वेदिकायां नाटकशालायां वा वर्तनमस्माकं कथावस्तु पठतां शृण्वतां पश्यतां वा निश्चितमेव। तथापि कुतोमी भावा निष्पद्यन्ते? कुशलस्य कवेः प्रवक्तुः नटस्य वा नैपुण्यातिशयेन वयमेतादृशीमवस्थां प्राप्ता इति नूनमङ्गीकर्तव्यम्। तत्राप्यद्य ते कवयो न सन्ति, सन्ति चैतेषां काव्यानि, प्रवक्तारो, नटाश्च। काव्यान्यस्मान् रोदयन्ति, हर्षयन्ति च प्रवक्तारो नटाश्च। शब्दार्थमयेषु काव्येषु रोदनहर्षयोर्जनकत्वं कुशलस्य कवेस्सम्बन्धात्, प्रवक्तृषु नटेषु च तज्जनकत्वं साधु काव्यज्ञशिक्षया तदभ्यासेन च वक्तव्यम्। सामाजिकाना हृदयानि समावर्ज्य कञ्चित्कालं यावत्तेषां मनांसि निश्चलानि विधातुं खलु चेष्टन्ते कवयः प्रवक्तारो नटा वा। श्रोतारो द्रष्टारश्च सामाजिकास्तेषां त्र्याणां वर्णने प्रवचनेऽभिनये च विद्यमानमनितरसाधारणं कौशलं निशम्य निशाम्य वा सुखदुःखमोहमयेषु सांसारिकविषयेषूच्चावचेषु निमग्नस्य चञ्चलस्य मनसः स्थिरीकरणाय पठने श्रवणे दर्शने वा यथारुचि प्रवर्तन्ते। क्रमशो यदा समाकृष्टचेतसो भवन्ति सहृदयाः, तदा नूनमयं कविः प्रवक्ता नटो वाऽस्मन्मनस्समाकर्षणे पटुरिति बुध्यन्ते। तत्र विशेषतो नाट्ये नटा अनुकर्तारो रामदुष्यन्तादीनां चरितं यथायथमभिनयेन प्रदर्शयितुं सर्वात्मना यतमानास्साक्षाद्रामदुष्यन्तादीनिवात्मनः प्रकटयन्ति। इमांश्च तेषु तेषु घट्टेषु रामादिसमानरूपतां प्राप्नुवतोऽनुभूय सहृदया अनुकार्यरामादीनेव साक्षादुपस्थितान् प्रतिपद्यन्ते। आरोपस्थलेऽपि काचन वास्तविकी सामग्री स्वीकर्तव्यैव भवति। न हि कश्चन साधारणः कविरपि तिन्त्रिणीदलनेत्रायां पद्मदलविशालनेत्रात्वं समारोप्य वर्णयेत्। एवं कदाचिद्वर्ण्यमानायामपि न तत्र बोद्धा तादृशीं बुद्धिमावहेत्। अनुकार्ये दाशरथौ रामे सीतालम्बनकश्शोको विभावादिसम्पातेन प्राप्तपरिपोष आसीदिति यच्छाब्दं ज्ञानं तदेव रामादिसमानाकारमनुकर्तारं पश्यतां सहृदयानां प्रत्यक्षात्मकं जायते। इदन्तु स्वीकर्तव्यं भवति—यद् ये शोकं नाम कञ्चिद्भावं कदापि नान्वभवन् रामकथाञ्च नाशृण्वन्, ते कुशलेन नटेनाभिनीयमानं नाट्यं पश्यन्तोऽपि न समाकृष्टचेतसो भवन्ति। यश्च नटः शोकेनात्यन्तमपरिचितो रामचरितमभिनेतुं

रङ्गं प्रविशति, तदभिनयं पश्यन्तोऽपि सहृदयाः न समाकृष्टचेतसो भवन्तीति। चित्तस्य समाकर्षणं नाम न सुकरम्। विविधाभिर्वृत्तिभिराक्रान्तमिदं भवति चित्तं नाम। प्रवाहधर्मिणीयं चित्तवृत्तिस्सहृदयानां यावन्न स्थिरीक्रियते ताव-त्सहृदया अपि साधारणा एव भवेयुः। तत्र च नाट्ये नटस्य कौशलमेवैकं साधनमभ्युपेयम्। एवं तत्कौशलेन स्थिरीकृतचित्तवृत्तिस्सामाजिकोऽनुकार्य मनुकर्तरि समारोप्य सन्तृप्तहृदयो भवति। एवञ्च यश्च रसोऽनुकार्यरामाश्रित-स्तमेव नाट्ये कुशलो नटोऽभिनयविशेषेण सामाजिकान् ग्राहयतीति भट्टलोल्लट-प्रभृतय आशेरते।

युक्तमिदं मे प्रतिभाति—आहिताग्निर्यजमानो विविधान् दर्शपूर्णमासादीन् सप्ततन्तूननुतिष्ठन् ऋत्विजो वृणीते। वृतास्तेऽध्वर्युहोतृप्रभृतयो यथाधिकारं सश्रद्धं स्वानि कर्माण्याचरन्तो मन्त्रांश्चोच्चारयन्ति। मन्त्रैश्च देवतानां रूपाणि वीर्याणि महिमानश्च प्रतिपाद्यन्ते। यदि च होताऽध्वर्युर्वा यथायथं मन्त्रार्थमव-बुध्य देवतानां गुणान् कीर्तयेत्, यजमानोऽपि प्रणिहितमनाः कर्माणि कुर्यात् तर्हि सामाजिका मीमांसकयाज्ञिका यज्ञमण्डपे हविर्ग्रहणाय प्रत्यक्षमागतानिव देवानिन्द्रादीनवगच्छेयुः। तेन चानिर्वर्णनीयां काञ्चन निर्वृतिं लभन्ते। चित्त-वृत्तिनियन्त्रणायैव खल्विमानि कर्माणि प्रवर्तितानि। विविधधाराभिश्चित्त-वृत्तयः कामं प्रवहेयुः, तथापि ता निरुध्य 'यज्ञो वै यजमानः' इत्युक्तदिशा यज्ञत्वेन यजमानं भावयन् होता, 'अग्निर्वै होता' इत्येवं होतारमग्नित्वेन विभावयन् यजमानश्च कर्माणि कुरुतः, तर्हि नूनं प्रेक्षकाः कर्मठा यज्ञे समाकृष्ट-चेतसः प्रसन्ना भवन्त्येव। यजमानस्येव ऋत्विजां कर्मसु कर्तृत्वे सत्यपि यज-माने कर्मजन्यफलभोक्तृत्वरूपं कर्तृत्वम्, ऋत्विक्षु तु नियतभृतिरूपफल-भोक्तृत्वरूपं कर्तृत्वम्। एकत्रामुष्मिकं फलम्, अपरत्र चैहिकम्। प्रेक्षकाणान्तु नोभयात्मकं फलम्. तथापि 'अनाहूतोऽध्वरं गच्छेत्' इत्यनुशासनेन लोका यज्ञं द्रष्टुं गच्छन्ति। कस्मै प्रयोजनाय? चित्तप्रशमनाय, चित्तस्य द्रढीकरणाय वेति वक्तव्यं भवति। तत्र 'अहं कार्याणि करोमि भृतिं लभे' इति ऋत्विक्, 'मया भृतिर्दीयतेऽनेन कर्माणि क्रियन्ते' इति यजमानश्च भावयतो यदि, तर्हि प्रेक्षकाणां मनांस्यावर्जयितुं न शक्नुयाताम्। अतः सामाजिकानां चेतांसि निश्चलानि विधातुं कर्मानुष्ठातृभिर्यथायथं कर्माणि कर्तव्यानि भवन्ति। एवं सति सामाजिकानां विलक्षणा काचन शान्तिः तृप्तिर्वा मनस उपजायत एव। तथैवानुकार्यरामादिगतत्वेन रसे विद्यमानेऽपि नटानामनुकर्तॄणां रामसीतादि-भावनाहितचेतसां तेषु च रामसीतादिसमानाकारतामाकलयतां सामाजिकानाञ्च

रसास्वादोऽप्रतिहत एव । अनुकर्तॄणां नटानां रामसीतादिभावनाविष्टत्वे नृत्त-गीतवाद्यानामेकतानतारूपस्य लयस्यानुसरणमपि शिक्षातिशयेन अभ्यासाधिक्येन च नानुपपन्नम् । सामाजिकैरपि नटाभिनयसामर्थ्यात् 'रामस्सुखी' 'रामस्सीताविषयकशोकवान्' 'दुष्यन्तः शकुन्तलाविषयकरतिमान्' इत्येवमादि-चित्तवृत्तिविशिष्टैरानन्दोऽनुभूयत एव । कञ्चित्कालं बाह्यजगत्सम्पर्केण विहीनास्सामाजिका रामैकतानमतयस्सन्तः सांसारिकदुःखसम्पर्कशून्या अवतिष्ठन्त इत्यस्यानन्दस्य चमत्कारजनकत्वमप्यव्याहतमेवेति ।

श्रोत्रियपरिकल्पितत्वेन मतमिदं रसविमर्शकाः परिगणयन्ति, किन्तु 'पशु-मारणकर्मदारुणोऽप्यनुकम्पामृदुरेव श्रोत्रियः' इति कविशिरोमणेर्वचनं तान् प्रति स्मारयितुमिच्छामि । श्रोत्रियोऽपि रससम्पर्कविहीनत्वेन परिगण्यमानोऽपि इष्टकामयीं काञ्चन भित्तिं रसस्यन्दिनीं निर्मम इत्येतदपलपितुं न शक्यते । तदुपरि स्नुहीं सुधारसञ्च संलिप्य यद्यद्रोचते तत्तत्सम्पाद्यतां कामम्, तेन मूल-भित्तेर्न काचिद्धानिः ।

इदमेव मतं किञ्चिदिव परिवर्त्य श्रीशङ्कुकेन स्वीयं मतं प्रदर्शितम् । अनुकार्यगतं रसमनुकर्तरि हेतुभिरनुमिनोति । अनुमातारः सामाजिकाः । ते जानन्त्येव यदिदानीं रामदुष्यन्तादयोऽनुकार्या न सन्ति, तेषां नेपथ्यानि धृत्वा नटा एवाभिनयन्तीति । नटस्य कौशलेन सामाजिकानां चित्तवृत्तिः चित्रतुर-गन्यायेन तान् नटेऽनुकार्यस्थायिभावमनुमातुं प्रवर्तयति । तं तं स्थायिनमुद्दिश्य नटेन प्रयुज्यमानान् विभावानुभावसञ्चारिभावान् अनुभवन् सामाजिकः 'अयं (नटः) रामः, सीताविषयकशोकवान्; 'अयं दुष्यन्तः शकुन्तलाविषयकरतिमान् तत्तदनुकूलविभावादिमत्त्वात् इति प्रतिपद्यते । पूर्वस्मिन् मते सामाजिको नटं राम इति पश्यति, अस्मिंश्च मते तं राम इत्यनुमिनोति । 'प्रत्यक्षपरिगलित-मप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिकाः' इति खलु चिरन्तनानामुक्तिः । नटे रामादेरारोपो वा भवतु अनुमानं वा, पदार्थस्त्वेकरूप एव । देवदत्ते प्रसह्य-कारित्वादिगुणान् प्रेक्ष्य सिंहत्वमारोप्य सिंहो देवदत्त इति व्यवहरति कश्चन । अपरश्च तैर्गुणैस्सिंहत्वं तत्रानुमाय सिंहो देवदत्त इति कथयति । उभयत्रौप-चारिकप्रयोगस्तुल्य एव । नाट्यसम्बन्धी रसो नाट्यरस इति प्रथममते, नटा-श्रयकत्वेन नाट्याश्रयकत्वं रसस्येति द्वितीयमते । अनुकार्यगतत्वेऽपि रसस्य नाट्यसम्बन्धित्वेन नाट्यरसत्वं नानुपपन्नं प्रथममते । द्वितीयमते चानुकर्तृ-गतत्वेऽपि रसस्य नाट्याश्रयकत्वेन नाट्यरसत्वं नानुपपन्नम् । उभयत्र स्थायि-नोऽवभास आवश्यकः । नाट्यसम्बन्धित्वेन नाट्याश्रयकत्वेन नाट्यहेतुकत्वेन वा सोऽवभासताम्, स्थाय्यवभासस्तस्य सर्वैरिष्यत एव ।

भट्टनायकमतानुयायिनो रसस्य प्रतीतिमुत्पत्तिमभिव्यक्तिं वा अनङ्गी कुर्वाणा अभिधायकत्वं भावकत्वं भोगकृत्त्वञ्चेति व्यापारत्रयं स्वीकृत्य तृतीयव्यापारेण रसस्य भोगो भवति सहृदयानामिति निरूपयन्ति । अस्मिन्मतेऽभिधायकत्वव्यापारस्य श्रव्यकाव्याश्रितत्वेन दृश्यरूपे नाट्येऽनुपयोगः, द्वितीयव्यापारस्तु साधरणीकरण उपयुज्यते, तृतीयव्यापारेण रसस्य भोग इति स्थितिः । तत्र भोगः साक्षात्कारविशेषोऽनुभवस्मरणप्रतिपत्तिभ्यो विलक्षणः । वैलक्षण्ये च तिस्रोऽवस्थाः कारणत्वेन स्वीक्रियन्ते—द्रुतिः विस्तारः विकासश्चेति । इमा वस्थाः गुणत्रयाधीनाः । द्रुतिः रजोगुणाधीना, विस्तारश्च तमोगुणाधीनः, विकासश्च सत्त्वाधीनः । यदा विकासस्तदैव भोगः स्वस्वरूपं लभते । अस्यामवस्थायां सत्त्वस्य प्राचुर्येण स्वात्मचैतन्यरूपां परां निर्वृतिं प्राप्नुवतस्सामाजिकस्य विगलितवेद्यान्तरतयाऽवस्थितिर्भवति—'अहं रामस्सीताविषयकशोकवान्' 'अहं दुष्यन्तश्शकुन्तलाविषयकरतिमान्' इत्येवं लोकोत्तरमानन्दमनुभवन् सामाजिको भवति । इयञ्चावस्था नटेन प्रकाश्यमानानां विभावादीनामनुवर्तनं यावदवतिष्ठते ।

इयमेव पार्यन्तिकी स्थितिरानन्दवर्द्धनाचार्याणामभिनवगुप्तपादानाञ्च मतेऽपि । भावकत्वभोगकृत्त्वव्यापाराभ्यां यत्साध्यते तत् ध्वननव्यञ्जनाव्यापारेणैकेनैव सिध्यतीति व्यापारद्वयं तदर्थमनावश्यकमिति स्वीयं मतं ते प्रतिपादयन्ति । व्यञ्जनाव्यापारस्त्वालङ्कारिकाणां प्राणाः । तस्य सिद्धावेवालङ्कारशास्त्रस्य शास्त्रत्वं सिध्यति । तदयमत्र निर्गलितोऽर्थः—प्रथममतावलम्बिभिः दृढेन स्नुहीकर्दमेनेष्टकास्संयोज्य भित्तिर्निर्मिता । द्वितीयमतेन च तामेव भित्तिमवलम्ब्य स्वोद्दिष्टं सम्पादितम् । तृतीयेन तु मतेनेष्टकानां सन्धिषु अधुनातनेन 'सिमेंट' इति शब्दवाच्यकर्दमेन लेपः कृतः । तत्रैव सुधारससंलेपनेन द्रढीकृता भित्तिश्चतुर्थमतेन । सर्वेष्वपि पक्षेषु सहृदयानां रसप्रतीतिः केनापि रूपेणाक्षुण्णा । श्रव्यकाव्येषु सालङ्कारैस्सगुणैश्च शब्दैरर्थैश्च समर्प्यमाणानां विभावादीनां योगात्, नाट्ये च प्रवीणैर्नटैस्समर्प्यमाणानां तेषां योगात् सामाजिकानां रसप्रतीतिः । इयं क्वचित्प्रात्यक्षिकी, क्वचिदानुमानिकी, क्वचिच्च भोगकृत्त्वव्यापारजन्या, ( अत्रापि प्रत्यक्षत्वं नापैति ) क्वचिच्च ध्वननव्यापारोत्थेति भिन्ना भवति । प्रतीतित्वञ्च सर्वत्राविशिष्टम् । सर्वेषु पक्षेषु चित्तवृत्तिनिरोधेनानन्दावाप्तिरेव मुख्यमुद्देश्यम् । स चानन्दस्सर्वेषु पक्षेषु समानतया तावत्पर्यन्तं तिष्ठति, यावन्नटेन विभावादयः प्रदर्श्यन्ते । रङ्गान्नटेऽपगते यथाजाता एव भवन्ति सामाजिकास्तपस्विनः ।

मीमांसकास्तु भवन्ति समन्वयपक्षपातिनः। व्यापारसामान्यं साध्यं साधनम् इतिकर्तव्यताञ्चापेक्षते। व्यापारस्तु भावनाभिध आख्यातवाच्यः। 'यजेत' इत्यादौ आख्यातवाच्यभावनायास्साध्याकाङ्क्षायां स्वर्गपशुपुत्रादिकं निर्दिष्टं फलमन्वेति, साधनाकाङ्क्षायां धात्वर्थो यागहोमादिः सम्बध्यते, इतिकर्तव्यताकाङ्क्षायामङ्गक्रियाकलापोऽन्वेति। तथा च वेदो भावकः प्रभुसंमितैश्शब्दैः फलार्थिनः पुंसोऽङ्गसहितेन यागादिना करणेन स्वर्गादिरूपमानन्दं यथा भावयति, तथैव कान्तासंमितैश्शब्दैः काव्यं नाट्यं वा भावकं प्रत्यक्षानुमानभोगकृत्त्वध्वननव्यापारैस्साधनैः, गुणालङ्कारौचित्यादिरूपयेतिकर्तव्यतया सामाजिकस्य रसमानन्दं भावयति। तत्र यागो दानं होमः प्रणयनम्, निर्वाप इत्यादीनि श्रौतेषु कर्मसु भिन्नानि साधनानि, इतिकर्तव्यताश्च प्रयाजाज्यभागानूयाजदयो भिन्नाः, साध्यानि स्वर्गपशुपुत्रादीन्यपि भिन्नानि, किन्तु तत्तज्जन्यं सुखन्त्वेकरूपमेव, तथैव काव्ये नाट्ये च करणानामितिकर्तव्यतानां साध्यानाञ्च भेदेऽपि सुखमेकमेव। मञ्चे हंसतूलिकाभिः परिकल्पिते शयने शयानः कश्चन यादृशं सुषुप्तिजन्यं सुखमनुभवति, मन्ये तादृशमेव सुखमनुभवेत् तृणैर्घासैश्च परिकल्पितशयने, प्रस्तरमये शयने च शयानः। सुषुप्तिजन्यं सुखन्तु सर्वत्राविशिष्टम्। विमर्शकानां क्वचित्काचिन्न्यूनता परिस्फुरेदेव। तेन च मिथो निन्दाव्यापारोऽपि प्रवर्तेत। स्वं स्वं मतमुपपादयन् सर्वोऽपि परं निन्देदेव। किन्तु प्रेक्षकैस्तत्र समां दृष्टिमवलम्ब्य वस्तुतत्त्वं परीक्षितव्यम्, न तु स्वयमपि निन्दाव्यापारे प्रवर्तितव्यम्। गाः अश्वांश्च स्तोतुं प्रवर्तमानो वेदोऽप्यजादीन् प्राणिनोऽपशुत्वेन निन्दतीति नास्माभिरप्यजादयो निन्दनीयाः। 'न हि निन्दा निन्दितुं प्रवृत्ता अपि तु स्तुत्यं स्तोतुम्' इति तस्य तात्पर्यं परिकल्पनीयम्। एवमेव रसविषये पूर्वजैः प्रवर्तितेषु मार्गेषु चतुर्षु ततोऽप्यधिकेषु वा समन्वयात्मिका दृष्टिरवलम्बनीयेति।

एवमसंलक्ष्यक्रमव्यङ्ग्यलक्ष्याणां रसभावरसाभासभावाभासादीनामुदाहरणानि प्रदर्श्य संलक्ष्यक्रमव्यङ्ग्यध्वनेर्विभागान् उदाहरणानि च निरूप्य चतुर्थ उल्लासस्समापितः।

पञ्चम उल्लासो मध्यमकाव्यनिरूपणपरः। गुणीभूतव्यङ्ग्यं काव्यं मध्यमम्। वाच्यापेक्षया व्यङ्ग्यस्य गुणीभावे हेतवोऽ गूढत्वादयः। तेषां प्रत्येकमुदाहरणानि प्रदर्शितानि। गुणीभूतव्यङ्ग्यमपि काव्यं चमत्कारकारि भवति। अत्र वाच्यस्यापि क्वचिच्चमत्काराधायकत्वेन व्यङ्ग्यस्याप्राधान्यमिति गुणीभूतव्यङ्ग्यत्वव्यवहारः। रसभावतदाभासभावसन्धिभावोदयभावशबलतानां चतुर्थ

उल्लासेऽसंलक्ष्यक्रमव्यङ्ग्यध्वनिलक्ष्यतया निर्देशः कृतः, किन्तु पञ्चम उल्लासे तेषां गुणीभूतव्यङ्ग्यतयापि निर्देशः क्रियते। तदस्य सङ्गतिः कीदृशी ? इति प्रश्ने 'प्राधान्येन व्यपदेशा भवन्ति' इति न्यायेनैकत्र लक्ष्ये एकस्य रसस्य प्राधान्येऽपरस्य च तत्रैवाङ्गत्वे प्राधान्यमादाय ध्वनित्वव्यवहारः, उपसर्जनत्व-मादाय गुणीभूतत्वव्यवहारः, एकस्य भावस्य रसश्चेदङ्गम् तत्र भावमादाय ध्वनित्वव्यवहारः रसञ्चादाय गुणीभूतत्वव्यवहार इति न किञ्चिदनुपपन्नम्। प्राधान्यमप्राधान्यञ्च सहृदयवेद्यम्। यथा 'व्रीहिभिर्यजेत' इत्यत्र यागाङ्गतया विहितानां व्रीहीणां यागाङ्गत्वेऽपि 'व्रीहीन् प्रोक्षति' इत्यत्र व्रीहीणां प्राधान्यमव्याहतम्; तथैव प्रकृतेऽपि प्राधान्यमप्राधान्यञ्चैकस्य न विरुद्धम्। रसवत् प्रेय ऊर्जस्वि समाहित इति चतुर्णामेवालङ्कारतया परिगणनम्। यत्र रसो गुणीभावमाप्नोति तत्र रसवदलङ्कारः, यत्र भावस्तथा तत्र प्रेयोऽलङ्कारः, यत्र रसाभासभावाभासौ तथा स्याताम् तत्रोर्जस्वि, भावशान्ति-श्चेत्तथा तत्र समाहित इत्येवं परिगणनं प्राचां दृश्यते भावोदयभाव-सन्धिभावशबलतानान्तु नालङ्कारकोटौ परिगणनं दृश्यते। अतः कथमेषा-मलङ्कारतया परिगणनमिति प्रश्ने मम्मटभट्टा उत्तरयन्ति—'तथापि कश्चिद् ब्रूयादित्येवमुक्तम्' इति। अहमिमान् अलङ्कारेषु पर्यगणयम् मद्वचने चेन्नास्ति विस्रम्भः, तर्हि 'कश्चित्' अन्यः प्रेक्षावनपि एवं ब्रूयात् रसवदादिन्यायोऽत्रापि सङ्गतो भवेदिति। ध्वनेर्यावन्तो भेदाः ते यथायोगमत्रापि भवन्तीति निरूप्य व्यङ्ग्यस्य त्रैरूप्यं समष्ट्या प्रतिपादितम्। वस्त्वलङ्काररसभेदेन। वस्त्वलङ्कारयोः क्वचिद्वाच्यत्वमपि भवति, रसस्तु व्यङ्ग्य एव। लक्षणामूलध्वनौ तु व्यङ्ग्येन विना लक्षणैव न प्रसरति, प्रयोजनप्रतिपिपादयिषयैव लाक्षणिकप्रयोगस्य प्रवृत्तत्त्वात्। अभिधामूलध्वनौ अभिधायां क्वचिदर्थे संयोगाद्यैर्नियन्त्रितायां सत्यामर्थान्तरस्य वस्तुनोऽलङ्कारस्य वा व्यङ्ग्यत्वं निर्विवादमित्यादिकं प्रति-पाद्यानन्तरम् अभिहितान्वयवादिनामन्विताभिधानवादिनामपि मते व्यङ्ग्य स्वीकर्तव्यमेव, तस्याप्यभिधेयत्वकथनं तेषां निर्युक्तिकमेवेति निरूपयामासुः।

तत्राभिहितान्वयवादिभाट्टमीमांसकमते—पदस्य पदार्थेऽभिधा, अनन्तरं पदार्थस्य संसर्गावबोधिका शक्तिः लक्षणारूपा, न तु तात्पर्याख्या वृत्तिः। अभिहितान्वयवादिनो नैयायिका अपि सन्ति। तेषां मते पदानां पदार्थे अभिधैव व्यापारः, वाक्यार्थस्तु संसर्गमुद्रया भासते। वाक्यगतैः पदैरभि-हितानां पदार्थानां मिथस्संसर्ग एव तात्पर्यं परिकल्पनीयम्, अन्यथा असङ्ग-तार्थावबोधकत्वं स्यात्। अभिधा च सङ्केतितार्थे प्रकरणादिना नियन्त्रिता।

वाक्यार्थे च भासमाने न पदानां सङ्केत इति न तत्राभिधाया व्यापारः। वाक्यार्थश्च विशेषरूपः। तस्य च बोधनाय वृत्त्यन्तरमेव स्वीकृतम्। तत्र तत्र विधिनिषेधरूपयोर्व्यङ्ग्ययोरर्थयोश्च प्रतीयमानयोः कृते वृत्तिः काचनावश्यिकी। यदा हि द्वितीयकक्षां प्रविष्टस्यार्थस्य बोधनाय नाभिधायास्सामर्थ्यम्, तदा तृतीयकक्षां प्रविष्टस्य बोधनाय सा कथं समर्थेति प्रघट्टकार्थः। अतश्चाभिहितान्वयवादेऽपि व्यङ्ग्यार्थावबोधाय व्यञ्जना स्वीकार्या। एमन्विताभिधानवादेऽपि। तथाहि—अमीषां मते पदानामन्वितेऽर्थे सङ्केत इति तत्रैवाभिधा विरता, पुनः व्यङ्ग्यार्थस्य बोधने सा न व्याप्रियते, 'शब्दबुद्धिकर्मणां विरम्य-व्यापाराभावात्' इति न्यायात्।

अन्विताभिधानवादिमतनिरूपणाय 'येऽप्याहुः' इत्युपक्रम्य 'शब्दवृद्धाभिधेयांश्च' इति कारिकाद्वयं समुद्धृतं मम्मटभट्टैः। इदञ्च कारिकाद्वयं भट्टपादानां श्लोकवार्तिके ( पृ० ६८०, श्लो० १४०, १४१ ) सम्बन्धाक्षेपपरिहारावसरे तैर्लिखितम्। तत्रत्यः प्रसङ्गोऽयम्—शब्दानामर्थैस्सह न कोऽपि सम्बन्धः। शब्दाश्च वियति वर्तन्ते, अर्थाश्चावनौ। न चैषां संयोगादयस्सम्बन्धा भवितुमर्हन्ति इति कैश्चन वादिभिराक्षेपे कृते, तमाक्षेपं परिहर्तुमुपक्रम्य भट्टपादाः संयोगादिषु सम्बन्धेष्वनुपयुक्तेष्वपि वाच्यवाचकभावस्सम्बन्धो नानुपयुक्तः। अतश्शब्दार्थयोस्सम्बन्धो वाच्यवाचकभाव इत्यभिधाय प्रसङ्गात्सृष्टिमहाप्रलयौ निराकृत्य परमते सृष्टिमहाप्रलयकर्तृत्वेनाभिमतं प्रजापतिमीश्वरं वा परिशील्य तत्रानुपपत्तीः प्रदर्श्य जगदनादित्वम् तेन च वेदनित्यत्वं स्वाभिप्रेतं व्यवस्थाप्य शब्दार्थसम्बन्धस्याप्यनादित्वं प्रसाधितवन्तः। भवतु शब्दोऽर्थः तयोस्सम्बन्धश्चानादिः, किन्तु सम्बन्धग्रहणोपायस्तत्र च प्रमाणं किमिति प्रश्ने—

'वृद्धानां दृश्यमाना च प्रतिपत्तिः पुनः पुनः।
उपाय इति तद्धानिरसिद्धावगतिं प्रति'॥

इत्यनेनोपायमुक्त्वा, वृद्धव्यवहार एवोपाय इति कुतः? हस्तनिर्देशादेरपि तदुपायत्वेन परिगणना भवत्विति शङ्कायां तदुत्तरत्वेन—

'हस्तसंज्ञाद्युपायो हि सिद्धो नाद्यक्रियासु नः।
न ह्यसौ ज्ञातसामर्थ्यो विनान्यैर्व्यवहर्तृभिः'॥ इति

कथयित्वा, वृद्धव्यवहारे सम्बन्धग्रहणस्य प्रमाणं दर्शयन्ति—'शब्दवृद्धाभिधेयांश्च' इत्यादिना। अनेन सन्दर्भेण प्रमाणत्रयाधीनं शब्दतदर्थसम्बन्धमर्थापत्त्या साक्षादवबुध्यन्ते, तत्र च प्रत्यक्षानुमानयोस्सम्बन्धज्ञानोत्पादे नोपयोग इति प्रतिपादितं भवति। एवञ्च शब्दार्थयोः संज्ञासंज्ञिलक्षणस्सम्बन्धोऽकृत्रिम

इति सिध्यति । शब्दार्थसम्बन्धग्रहणाय शैशवाद्यवस्थाभेदेन उपाया भिन्नाः, प्रमाणानि च भिन्नानि । शैशवावस्थायां बालः पितृभ्यां शिक्ष्यमाणो घटपटादिशब्दानां व्यवहारोपयोगिनां तत्तदर्थैस्सम्बन्धमवबुध्याव्यक्तमधुरैश्शब्दैर्व्यवहरति । अस्यामवस्थायां प्रत्यक्षदर्शनमर्थानां व्युत्पित्सोर्बालस्य भवति, न चात्रानुमानमर्थापत्तिर्वा प्रसरति । एवं केषाञ्चन पदतदर्थानां गृहीतसम्बन्धो बालः कौमारावस्थां यौवनावस्थां वा प्राप्त उत्तममध्यमवृद्धयोः नूतनैः शब्दैरर्थैश्च व्यवहारमनुभवन् मध्यमवृद्धस्य तत्तच्छब्दार्थसम्बन्धज्ञानमनुमिन्वन् स्वयमर्थापत्त्या प्रमाणेन शब्दतदर्थसंबन्धमवबुध्यते । उभयत्र न कार्यान्वितपदार्थे शब्दस्य सम्बन्धावबोधः, सिद्धेऽप्यर्थे शब्दस्य सम्बन्धग्रहणमुपजायत एव । तेनाभिहितान्वयवादे शब्दार्थसम्बन्धग्रहणोपायं तत्र प्रमाणञ्च वक्तुमिदं पद्यद्वयं प्रवृत्तमिति प्रसङ्गोऽवबोधयति । पद्यद्वयमिदमन्विताभिधानवादिनः पक्षेऽपि शब्दस्यार्थेन सह विद्यमानस्य संबन्धस्य ग्रहणोपायं वृद्धव्यवहारं सूचयितुं समर्थम् । किन्तु तदीयं पक्षमुपपादयितुं न प्रवृत्तम् ।

अत्र वृत्तिग्रन्थे 'येऽप्याहुः' इत्युपक्रम्य पद्यद्वयमिदं निर्दिश्य 'इति प्रतिपादितदिशा' इत्यादिना 'कार्यान्वितपदार्थे पदानां शक्तिः' इति वदतामन्विताभिधानवादिनां शब्दार्थसम्बन्धग्रहणप्रकारमुपपाद्य 'इत्यन्विताभिधानवादिनः' इत्युपसंहृत्य 'तेषामपि मते' इत्यादिना व्यङ्ग्यभूतार्थावबोधनायाभिधामात्रं न पर्याप्तम् व्यञ्जनावृत्तिरवश्यमेष्टव्येत्युक्तम् । 'येप्याहुः' इत्यस्य 'इत्यन्विताभिधानवादिनः' इत्यनेनान्वयः प्रत्यक्षः । 'येऽप्याहुः' 'तेषामपि मते' इत्यनयोर्मध्यपतितत्वेन पद्यद्वयस्यान्विताभिधानपक्षप्रतिपादकत्वं निश्चित्य केचन मम्मटाचार्याणां न्यूनतां पश्यन्ति । तदिदं स्वाज्ञानविजृम्भितमेव । पद्यद्वयमिदं प्रदर्श्य मम्मटाचार्याः इति प्रदर्शितदिशा' इति लिखन्तोऽवद्योतयन्ति-यत् 'येऽप्याहुः' इत्यस्य 'इति प्रतिपादितदिशा' इत्यनन्तरं पाठः, इति भट्टपादप्रदर्शितदिगवलम्बनेन 'येऽप्याहुः' 'तेषामपि मते' इति । अतो न काचिन्न्यूनता मम्मटाचार्याणाम् ।

एतदनन्तरं मीमांसकसंमतत्वेन 'नैमित्तिकानुसारेण निमित्तानि कल्प्यन्ते' इति मतमुत्थाप्य निराकृतं ग्रन्थकृद्भिः । मतमिदं कस्मात्कदा कथमाविर्भूतमित्यग्रे निरूपयामः । मतस्यास्यायमाशयः—तत्तत्कर्मणामुपक्रमेऽवसाने कर्ममध्येऽपि विशेषविहितस्थले आचमनं क्रियते याज्ञिकैः । आचमनं नाम नामत्रयं नमोऽन्तम् 'अच्युताय नमः' 'अनन्ताय नमः' 'गोविन्दाय नमः' इत्युच्चार्य पृथक्पृथग्जलप्राशनम् । हस्तोष्ठसंयोगजनितोच्छिष्टदोषपरिहाराय

जलेनोष्ठौ त्रिःपरिमृज्य केशवादिद्वादशनामभिः विहिताङ्गुलीभिस्तत्तदङ्गस्य स्पर्शनम्। एतावति कृते एकमाचमनं सम्पन्नं भवति। तदिदमाचमन नित्यं नैमित्तिकञ्चेति द्विप्रकारं दृश्यते। नित्यन्तु नियमेन कर्तव्यतया विहितम्, नैमित्तिकन्तु प्राप्ते निमित्ते कर्तव्यतया विहितम्। नित्याचमनस्य नात्र प्रसङ्गः। नैमित्तिकं कीदृशमिति विचारयामः—ऋत्विग्यजमानौ यदा जञ्जभ्यमानौ भवतः, तयोः क्षुते जाते, उपवीते उत्तरीये वा स्रस्ते, ताभ्यां कण्डूयने वा क्रियमाणे आचमनं विहितं नैमित्तिकम्। अत्राचमनं नैमित्तिकम् तस्य जृम्भाक्षवणप्रभृतीनि निमित्तानि। यदि यजमानं ऋत्विजं वा पदे पदे आचमनं कुर्वन्तं पश्यामः तर्हि तत्र नैमित्तिकानुसारेण निमित्तानि कल्पयामः। तथैवार्थावबोधं प्रति शब्दो निमित्तम् वाच्यलक्ष्यव्यङ्ग्यरूपा अर्था नैमित्तिकाः। सति निमित्त इमेऽवभासन्ते, नासति। नैमित्तिकेषु त्रयाणां द्वयोरेकस्य वावबोधस्तदा तत्र निमित्तमावश्यकम्। यदि तत्र शब्दो निमित्तं नाश्रीयते तर्हि अवबुद्धस्यार्थस्याशाब्दत्वं स्यात्। तस्य शाब्दत्व-सिद्धये शब्दः स्वीकर्तव्यः। एवञ्च नैमित्तिकवाच्यलक्ष्यव्यङ्ग्यरूपार्थानुसारेण स एव शब्द आवर्त्यते। न चात्र 'सकृदुच्चरितश्शब्दस्सकृदेवार्थं गमयति' इति न्यायविरोधः, शब्दस्यासकृदुच्चार्यमाणत्वात्, नैमित्तिकानुसारेण निमित्तानामावृत्तेस्सत्त्वात्। न चापि 'शब्दबुद्धिकर्मणां विरम्यव्यापाराभावः' इति न्यायविरोधः, निमित्तशब्दानामभिधाव्यापारस्य भिन्नत्वात्। व्यञ्जना-वादिनोऽपि 'अधमपदेन व्यज्यते' 'गङ्गापदेन लक्ष्यते' इति कथयन्तस्तत्त-दर्थावबोधाय नियतं कञ्चन शब्दमाश्रयन्त एव। अतः नैमित्तिकाचमनानु-सारेण निमित्तानि यथा जृम्भाक्षवणादीनि कल्प्यन्ते तथैव नैमित्तिकार्थबोधा-नुसारेण निमित्तं शब्द आवर्त्यत इति अभिधां विहाय व्यापारान्तरस्य नाव-श्यकतेति। मतमिदं मम्मटभट्टैस्सुचारु निरस्तमेव। ज्ञातसम्बन्धस्यैव शब्द-स्यार्थावबोधकत्वमिति साध्वी सरणिः। द्वितीये तृतीये चार्थे शब्दस्य संकेतग्रह आवश्यकः। स सङ्केतः क्व कदा गृहीतः? विना सङ्केतग्रहेण शब्दोऽर्थमभि-दधातीति दुर्वदमिदम्। किञ्च, पूर्वं निमित्तं पश्चाच्च नैमित्तिकमिति पूर्वतन्त्र-सिद्धान्तः। दर्शनपथमागतस्य चन्द्रस्य सूर्यस्य वोपरागः स्नानतर्पणादीनां प्रयो-जकः। जनानां स्नानतर्पणादीन् विज्ञाय तदनन्तरं चन्द्रोपराग निमित्तं न कोऽपि प्रेक्षावान् कल्पयेत्। अपच्छेदाधिकरणे एकत्र निमित्तद्वयमेकदैव वा क्रमेण वावगत्य किं नैमित्तिकद्वयमनुष्ठेयम् उतैकमिति सन्दिह्य येन नैमित्तिकेने-तरस्य गतार्थता भवति तस्यैव नैमित्तिकस्यानुष्ठानमिति सिद्धान्तः कृतः।

बलाबलाधिकरणे पूर्वपूर्वस्य प्राबल्यम् अपच्छेदन्याये चोत्तरोत्तरस्य प्राबल्यमिति द्वयोर्भेदः। एवञ्च निमित्तानुसारेणैव नैमित्तिकपरिकल्पनमित्येव न्यायानुगुणम्, न तु नैमित्तिकानुसारेण निमित्तपरिकल्पनमिति सिद्धम्। यद्यपि कार्यात्कारणमनुमीयते इत्यस्ति न्यायः, तथापि शब्दार्थयोः कार्यकारणभावाभावेन नैमित्तिकानुसारेण निमित्तकल्पनाया अशक्यत्वात्। शब्दार्थयोर्वाच्यवाचकभावस्सम्बन्धः क्लृप्तः। लक्ष्यलक्षकभावो वा व्यङ्ग्यव्यञ्जकभावो न क्लृप्तः। तत्र लक्षणां व्यञ्जनां वा परित्यज्य वाच्यवाचकभाव एव यदीष्यते तर्हि शब्दस्य तत्रार्थे तीरादौ वध्यादौ वा सङ्केतग्रह आवश्यकः। न हि गङ्गापदं तीरे वा शैत्यपावनत्वादौ वा गृहीतसङ्केतिकम्। अतोऽय पक्षोऽविचारितरमणीयः।

एतदनन्तरं पक्षान्तरं भट्टमतोपजीविनामुत्थाप्य निराचक्रुः। तस्यायं निष्कर्षः—यथा व्याधेन प्रयुक्त इषुरेकेनैव व्यापारेण वेगेन द्वित्राणि कार्याणि सम्पादयन् दृष्टस्तथा शब्दोऽप्येकेनैव व्यापारेण दीर्घदीर्घतरेण वाच्यलक्ष्यव्यङ्ग्यरूपानर्थानवबोधयतु, किं व्यापारान्तराश्रयणेन। अस्मिंश्च पक्षे 'सकृदुच्चरितश्शब्दः' 'शब्दबुद्धिकर्मणाम्' इति न्यायविरोधो न प्रसरति। अत्र 'किमिव वचनं न कुर्यात् नास्ति वचनस्यातिभारः' ( शा० भा० पृ० १७० चौख० संस्करणम् ) 'शब्दप्रमाणका वयम्, यच्छब्द आह तदस्माकं प्रमाणम्' ( शा० भा० पृ० १८६ चौख० सं० ) इत्यादि शाबरीरुक्तीरवलम्ब्य प्रवृत्तं 'यत्परश्शब्दः स शब्दार्थः' इति न्यायमुदाहरन्त इमे स्वपक्षं साधयन्ति—शब्दो यादृशार्थप्रतिपादनतात्पर्यपरः स शब्दार्थः। 'गङ्गायां घोषः' इत्यत्र गङ्गाशब्दः प्रवाहतीरशैत्यपावनत्वरूपत्रिविधार्थप्रतिपादनपर इति तस्य शब्दस्य त्रिविधोऽप्यर्थः। स चैकेनैव व्यापारेण सिध्यतीति किं व्यापारान्तरेणेति। तदिदं मतमप्याचार्यैस्साधु परिशील्य निराकृतम्।

मतद्वयमिदं मीमांसायां कथं समुद्भूतम, यच्च निर्युक्तिकमिति विचारयामः—तृतीयाध्यायद्वितीयपादस्य प्रथमाधिकरणे ( लिङ्गाधिकरणे ) भाष्यकाराः श्रीशबरस्वामिनोऽधिकरणविषयवाक्ये संशयसमुत्थापनावसरे मतमिदं निर्दिशन्ति। अङ्गानां विनियोजकप्रमाणेषु षट्सु श्रुत्यादिषु लिङ्गं द्वितीयं प्रमाणम्। लिङ्गं नाम मन्त्राणामर्थप्रत्यायनसामर्थ्यम्। 'बर्हिर्देवसदनं दामि' इति मन्त्रे बर्हिश्शब्दस्यार्थे निर्णीते तल्लवनक्रियायां मन्त्रमिमं सामर्थ्यं विनियुङ्क्त इति वक्तुं शक्नुमः। बर्हिश्शब्दः कुशान् काशान् उलपराजिमित्यादीन् दशविधान् दर्भान् अवगमयति। तदत्र संशयो भवति—एष्वर्थेषु

मुख्यगौणत्वेन किं विभागो वर्तते ? उत न ? यदि वर्तते तर्हि मुख्ये एवार्थे मन्त्रं विनियुङ्क्ते लिङ्गम् ? उत गौणेऽप्यर्थे ? अत्र को मुख्योऽर्थः ? को वा गौणः ? इति विचारस्समापतितः। अर्थेषु मुख्यगौणभेद एव नास्ति, सर्वे मुख्या एवेति पक्षे प्राप्ते भाष्यकाराः मुख्यत्वगौणत्वप्रयुक्तं भेदं व्यवस्थाप्य, मुख्ये गौणे चार्थे मन्त्रस्य विनियोग इति प्राप्तं पक्षं निराकृत्य मुख्य एवार्थे विनियोग इति सिद्धान्तितवन्तः। अत्रत्याः शाबर्यः पङ्क्तयो ध्यानमर्हन्ति—( पूर्वपक्षे ) 'यद्येवं सर्व एव मुख्यः, सर्वो हि शब्दाद्गम्यते। यथैव हि 'अग्निर्ज्वलति' इत्युक्ते ज्वलनसम्प्रत्ययः, एवमेव 'अग्निर्माणवकः' इति शब्द एव ( अग्निशब्द एव ) उच्चारिते माणवके सम्प्रत्ययः। अथोच्येत—यस्मिन्निरुपपदाच्छब्दात् सम्प्रत्ययः स मुख्यः, यस्मिन् सोपपदात्स गौण इति। नैतद्युक्तम्—यस्य हि शब्दस्य रूपं कस्यचिदर्थस्य निमित्तम्, सोपपदस्यापि तदेव रूपम् निरुपपदस्यापि। न च शक्यं निमित्ते सति नैमित्तिकेन न भवितुम्.........

..............अग्निशब्द एवायं ज्वलनवचनः, अग्निशब्द एव माणवकस्याभिधातेति। तस्मान्न गौणो मुख्य इति कश्चिद्विशेषः'॥ ( शा० भा० पृ० १६७ चौखा० सं० ) ( सिद्धान्ते ) 'अस्त्यत्र विशेषः—माणवको नाग्निशब्दात्प्रतीयते। कथमवगम्यते ? उक्तम् 'अन्यायश्चानेकार्थत्वम्' इति ( जै० सू० १. ३. २३. )। कथं न विपर्ययः ? उच्यते—अनादृत्यैव माणवकप्रत्ययं ज्वलनमग्निशब्दात्प्रतियन्तो दृश्यन्ते, न त्वनादृत्य ज्वलनप्रत्ययं माणवकमग्निशब्दात्प्रतियन्ति। कुत एतत् ? यो योऽग्निसदृशो विवक्ष्यते, तत्र तत्राग्निशब्दो नियत इति, अत एव विगतसादृश्यादपयन् उपलक्ष्यः। अतोऽग्निसादृश्यमस्य प्रवृत्तौ निमित्तम्। न च ज्वलनेऽप्रतीते तत्सादृश्यं प्रतीयते। तस्माज्ज्वलनस्याग्निशब्दो निमित्तम्, न माणवकस्य। तस्माज्ज्वलने मुख्यो न माणवके' इति। तन्त्रवार्तिकन्यायसुधादावयं विषयस्सुनिरूपितः, तत एव सोऽवगन्तव्यः।

अत्रेदं विशेषेण वक्तुमिच्छामि—यन्मतद्वयमिदं भाष्यादौ पूर्वपक्षतया प्रवृत्तम्। पूर्वपक्षिणा यत्कथ्यते न तत् मतत्वेन परिगणयितुं शक्यते। यच्च सिद्धान्ततयोपक्षिप्यते तदेव मतम्। मीमांसकेषु सूत्रकारो भाष्यकारो वार्तिककारो वा तदनुयायी वा न सिद्धान्ततया वदति, यदभिधयैव वृत्त्या सर्वेषामर्थानां भानमिति। तत्कथं प्रदीपकारा वदन्ति 'भट्टमतोपजीविनः' इति। ममेदं प्रतिभाति—यत् तत्तदधिकरणेषु ये पूर्वपक्षाः सिद्धान्ता वा त उभये अपि महर्षेः जैमिनेः पूर्वं ऋषीणां तत्तद्गोष्ठीषु प्रचलन्त आसन्। तेषामेवोत्तरत्र

लोकानां स्मरणार्थं तान् विषयान् जैमिनिः स्वस्मृतिशक्त्या सूत्ररूपेण ग्रथितवान्। तदिदमवगत्य भाष्यकारो भाष्यं रचयामास। विषयमिमम् अध्वरमीमांसकुतूहलवृत्तेश्चतुर्थभागभूमिकाया सुविशदं न्यरूपयम्। अतः प्रदीपकारादीनां 'भट्टमतोपजीविनः' इति कथनं सङ्गतमेव। अतश्च 'यत्परः शब्दः स शब्दार्थः' इति न्यायस्य पूर्वपक्षी तात्पर्यं वदति—यत्, वाच्यलक्ष्यव्यङ्ग्यत्वेनाभिमतेष्वर्थेषु यदर्थपरश्शब्दः स सर्वोऽपि तस्य शब्दस्यार्थः। क्वचिदेकः क्वचिद्द्वौ क्वचिच्च त्रयः। यत्र द्वौ वा त्रयो वार्थाः तत्र तदर्थबोधनपरत्वेन प्रवृत्तस्य शब्दस्य त एवाभिधेया इति। अत्र सिद्धान्ती दोषानुद्भाव्य कथयति—'भूतं भव्यायोपदिश्यते' इति न्यायो भावार्थाधिकरण ( पू. मी. २-१-२ ) सिद्धः। अयमेव 'सिद्धं साध्यायोपदिश्यते' इति क्वचित्पठ्यते। सर्वत्र प्रधानतया स्वर्गादिकं फलं साध्यम्। तदर्थं वेदवाक्यानि 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यादीनि साधनतया यागदानहोमादीन् विदधति। फलं साध्यं रागतः प्राप्तञ्च, अतस्तस्य क्वापि न विधेयता। 'यजेत' इत्यत्र धातुं प्रत्ययञ्च विभज्याख्यातप्रत्ययार्थं भावनां ( कृतिम् ) स्वीकृत्य तस्या एव प्रथम विधिविषयत्वम्—भावयेदिति। तस्यास्साध्यं किमित्याकाङ्क्षायाम् वाक्ये श्रूयमाणं फलं तत्त्वेनान्वेति, यदि फलं न श्रुतं तर्हि विश्वजिन्न्यायेन स्वर्गः फलं परिकल्प्य तत्साध्यत्वेनान्वेतीति स्थितिः। साधनाकाङ्क्षायां तत्तद्धात्वर्थस्साधनतयान्वेति—यागेन स्वर्गं भावयेत् इति बोधो भवति। अर्थात् स्वर्गजननानुकूलमपूर्वं यागेन सम्पादयेदिति निष्पन्नम्। यागादीनां क्रियात्मकत्वेन सिद्धत्वाभावात् कथं साधनत्वमिति शङ्कोदियात्, तथापि फलजननावसरे तेषां सिद्धत्वमस्तीति न दोषः। सर्वोऽपि पदार्थः स्वसिद्धये साध्यावस्थामवाप्नोत्येव। अतो यागस्सिद्ध इति कृत्वा तस्य साधनत्वमेष्टव्यम्। एवं यागादिसाधनाय द्रव्यं देवता अन्याश्च क्रिया विधीयन्ते। एतत्साहाय्येन यागादिर्निष्पाद्यते, निष्पन्नस्य च तस्य फलसाधनत्वम् इति क्रमः। सर्वत्र विधिः स्वसमभिव्याहृतधात्वर्थमात्रविधाने लाघवमनुभवति। यथा—'अग्निहोत्रं जुहुयात्' इति। सह धात्वर्थविधानेनान्यत्रापि स्वस्य यदि व्यापारस्तर्हि पूर्वापेक्षया किञ्चिद्गौरवमनुभवति। यथा—'अग्निहोत्रं जुहुयात्स्वर्गकामः' इति। अत्र विहितस्य यागस्य स्वर्गफलसम्बन्धबोधनाय विधेर्व्यापार इति गौरवम्। यत्र विधिः स्वसमभिव्याहृतधात्वर्थात्प्रच्याव्य पदान्तरोपात्तपदार्थविधाने व्यापृतो भवति तत्र द्वितीयविध्यपेक्षया किञ्चिद्गौरवमधिकं विधेः। यथा—'दध्ना जुहोति' इति। अत्र होमस्याग्निहोत्रवाक्येन विहितत्वात् विहितस्य च पुनर्विधानासम्भवात्

दधिकरणत्वविधान एव तस्य व्यापारः। एवं पदान्तरोपात्तपदार्थविधानानन्तरं तस्य फलसम्बन्धबोधनेऽपि यदि विधेर्व्यापारः तर्हि तृतीयविध्यपेक्षया किञ्चिद्गौरवमापतति। यथा—'दध्नेन्द्रियकामस्य जुहुयात्' इति। अत्र न होमस्य विधानम् तस्य प्राप्तत्वात्। नापि दध्नः, तस्यापि गुणविधिना प्राप्तत्वात्। किन्तु तस्य फलसम्बन्धमात्रविधानम्। यत्र स्वसमभिव्याहृतधात्वर्थस्य भिन्नपदोपात्तस्य च पदार्थस्य विधानम् तत्र पञ्चमो विधिप्रकारः। पूर्वापेक्षया विधेर्व्यापारे गौरवमत्र प्रतीयते। यथा—'सोमेन यजेत' इति। सोमविशिष्टयागस्यात्र विधानम्, तेन च मत्वर्थलक्षणा। तथा च सोमवता यागेन भावयेदिति लक्षणाघटितबोधः। अत्र च केवलं द्रव्यस्य वैशिष्ट्यम्। यदि द्रव्येण सह देवतायाः फलसम्बन्धस्य च विशिष्टविधानं भवेत् तर्हि पञ्चमप्रकारादपि गौरवं षष्ठस्य विधेः। यथा—'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः' इति। अयं विधिरत्यन्तं गुरुभूतः परिगण्यते। अस्यां स्थितौ वाक्ये यावन्तोऽर्थाः प्रतीयन्ते तावत्सु सर्वेषु विधेर्व्यापारः 'यत्परश्शब्दः' इति न्यायेन साधयितुं न शक्यते। हतस्य सर्पस्य पुनर्हननमिव स्यात्। अतो य एवाप्राप्तः तस्यैव विधानं विधिना इत्यत्रैव न्यायतात्पर्यं वक्तव्यम्। योंऽशः काष्ठस्य न दग्धः, तत्रैवाग्नेर्व्यापार इति यथा। 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति' इति श्येनयागे श्रुतम्। अयञ्च यागो ज्योतिष्टोमविकृतिः। ज्योतिष्टोमे ऋत्विजः, तेषां प्रचारः, तेषामुष्णीषवत्त्वं सर्वं विहितम्। तत्सर्वमत्रातिदेशेन प्राप्तम्, केवलं लौहित्यमात्रं विधेयम्। तच्च लौहित्यमुष्णीषस्य। उष्णीषोद्देशेनात्र लौहित्यविधाने एकप्रसरताभङ्गस्स्यादिति भयेन विहितस्याप्युष्णीषस्य लौहित्यविशिष्टतया पुनर्विधानमनुमन्यते। एवञ्च यदेव विधेयम्, तत्रैव तात्पर्यं परिकल्पनीयम्, न तु प्रतीतमात्र इति सिद्धम्। अत्र शबरस्वामिनः काश्चन पङ्क्तयो ध्यानमर्हन्ति। 'द्रव्यदेवतासंयोगोऽत्र विधीयते भूतिकामस्य ब्रह्मवर्चसकामस्य च। कथम्? न हीदमेवोच्यते—श्वेतमालभेतेति। यदि ह्येतावदेवोच्येत, ततः श्वेतालम्भसम्बन्धो विधीयते। यथा—पटं वयेदिति पटवानसम्बन्धो विधेयोऽवगम्यते। पटं दीर्घं वयेदिति पटस्य दीर्घता विधीयते, दीर्घशब्दप्रयोगात्। एवमिहापि' इति। (शा. भा. २.३.५. पृ० १२६) अनन्तरं बलाबलाधिकरणविरोधः प्रदर्शितो मम्मटभट्टैः। अत्रत्यो विषयो व्याख्यातृभिस्सुविशदं विवृत इति नाहं तं विषयं विवृणोमि। अनन्तरं वाच्यस्य व्यङ्ग्यस्य च मिथो विद्यमानो भेदः, तत्र प्रमाणानि एव लक्ष्यव्यङ्ग्ययोर्भेदकप्रमाणानि, वेदान्तिनां महिमभट्टस्य च मतपरीक्षणम् इत्यादयो विषया ग्रन्थकारैर्विवेचिताः पञ्चमोल्लासे।

छात्राणामुपकाराय षष्ठोल्लासान्तविषयसङ्ग्रहव्याजेन मीमांसासम्बन्धिनः पदार्थान् व्यवृणवम् । विवरणमिदं कियत उपकाराय सम्पद्येत इति नाहं जाने । आर्यमिश्राणां डा० श्रीगौरीनाथशास्त्रिणामादेशः पालनीय इत्येवास्मिन् कार्ये प्रावर्तिषि । विवरणस्यौचित्यानौचित्यविषये विद्वन्मणय एव प्रमाणम् । तानहमभ्यर्थयेऽत्र यत्किञ्चिदनौचित्यं तदीश्वरो विषमिव कण्ठे न नियच्छन्तु । यथाहं जानीयां तथावबोधयन्तु, येनाहं तदवबुध्य विमलमतिस्स्यामिति शम् ।

भाद्रपदकृष्णाष्टमी, सं० २०३२
वाराणसी

विदुषामाश्रवः
पि. एन्. पट्टाभिरामशास्त्री





# काव्यप्रकाशस्य षष्ठोल्लासान्तस्य

## विषयानुक्रमणी







काव्यप्रकाशविस्तारिकया

विभूषितः

# काव्यप्रकाशः

## प्रथम उल्लासः

ग्रन्थारम्भे विघ्नविघाताय समुचितेष्टदेवतां परामृशति–

---

## काव्यप्रकाशविस्तारिका

॥ ओँ नमः । श्रीगणेशाय नमः ॥

प्रियायाः पद्मायाः प्रणयकुपितायाः स्तुतिपरः
प्रसादं निर्मित्सुर्जलधिजनिवाणीपरिवृढः ।
परस्याः कौटिल्यात् कटुनि वचसि प्रोद्यति [च] तत्-
प्रदीप्तायां तस्यां जयति विनमद्वक्त्रकमलः ॥ १ ॥

कार्या कदर्यैरिव नो भवद्भिर्नवेति हेला कृतिनः[१] कृतौ नः ।
निवारितान्तःकलुषां किशोरतां दधत्कलाभून्न पुनः पुरातनः ॥ २ ॥

न्यायाचार्यमनङ्गीकृतपरपक्षं बहुज्ञमीशानम् ।
गुरुमिह नत्वा काव्यप्रकाशविस्तारिकां तनुमः ॥ ३ ॥
प्रखलद्द्रोणजबाणैः क्षतविद्वतमुत्तरोदरगम् ।
रक्षतु परीक्षितं मे वचनं विबुधः सुदर्शनेनाशु ॥ ४ ॥

अविगीतशिष्टाचारपरम्पराप्रिप्राप्तप्रारिप्सितसमाप्तिप्रतिबन्धकदुरित-ध्वंसहेतुभूतमङ्गलाचरणपरां प्रथमकारिकामवतारयति वृत्तिकृद्—ग्रन्थे-त्यादि । सम्बन्धप्रयोजनज्ञानाधीनशुश्रूषाजन्यश्रुतिविषयसन्दर्भो ग्रन्थः । सम्बन्धोऽभिधेयाभिधानान्वयः[२] । सुखदुःखाभावतदुपायानां यत्किञ्चि-देकं प्रयोजनम् । इदमत्राभिधेयमिदञ्च प्रयोजनमिति ज्ञानाहितायां शुश्रूषायां ग्रन्थं शृण्वन्तीति[३] ग्रन्थश्रवणे तथाविधशुश्रूषाया आव-

---

१. कृतिभिः च०, ज्ञ० ।

२. अभिधेयाभिधेयकस्वरूपः च० ।

३. शृणवानीति च० ।

श्यकत्वम्। तदुक्तम्—'सिद्धार्थम्' इत्यादि। सिद्धो ज्ञातोऽर्थः प्रयोजनं यस्य। वक्ष्यमाणवाक्यस्य घटानयनमर्थो जलाहरणञ्च प्रयोजनमित्यभिधायोच्चारिते घटमानयेति वाक्ये सत्यामपि तथाविधशुश्रूषायां तस्या न कारणत्वम्, अनेवंविधस्थलीयैवंविधवाक्यश्रुतिसामान्यसामग्र्या सन्निकर्षादिनाऽन्यथासिद्धत्वात्।

आरम्भ आद्या कृतिः। सप्तम्यर्थो निमित्तता। आरम्भनिमित्तमित्यर्थः। ग्रन्थ आरब्धव्य इत्यारम्भनिश्चये मङ्गलाचरणान्निमित्तनैमित्तिकभावो निष्प्रत्यूहः। न चारम्भस्य निमित्तस्य निश्चये नैमित्तिकस्य मङ्गलस्य कदाचिदकरणात् प्रत्यवायः स्यादिति वाच्यम्, वैदिकस्थल एव तथा नियमात्, अस्य च लौकिकत्वात्। "चर्मणि द्वीपिनं हन्ति" इत्यादिवत्। प्रारिप्सितप्रतिबन्धकं दुरितं विघ्नः। विघातो विशिष्टो ध्वंसः। समाप्त्ययोगव्यवच्छेदो वैशिष्ट्यम्।

ग्रन्थस्य वाङ्मयस्याधिकारितया वाग्देवताया औचित्यं भक्तिश्रद्धातिशयेनाराधितत्वमिष्टत्वम्। देवतापदेन गुर्वादिव्युदासः। यद्यपि तन्नमस्यादिभिर्विघ्नवारणं भवत्येव;(2a) तथापि न तन्मङ्गलम्, शिष्टाचारविरहात्। परामृशति—जयव्याप्यविशिष्टनिर्माणाधानवत्तया जानाति। एतद् विवेचयिष्यामः। ज्ञानसामान्यार्थकस्य परापूर्वमृशतेर्ज्ञानविशेषपरत्वान्न लक्षणाप्रसङ्गः। कश्चित्तु—"पञ्चाङ्गकं वाक्यं ग्रन्थः। तदुक्तम्—

विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम्।
निर्णयश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम्॥ इति।

विषयः पक्षः, विशयः संशयः" इत्याह, तन्न; महाभारतादौ पूर्वपक्षोत्तरपक्षाभावेनाव्याप्तेः[1]।

अन्ये तु—"आम्नास्यमानविषयं महावाक्यं ग्रन्थः। आम्नास्यमानोऽभ्यस्यमानो विषयो ज्ञाप्यः। वाक्यान्तरनिराकाङ्क्षसाकाङ्क्षादिमद्वाक्यकदम्बकं महावाक्यम्, तेन ग्रन्थावयवमहावाक्ये नातिप्रसङ्गः, तस्य वाक्यान्तरे साकाङ्क्षत्वात्। आरभ्यतेऽस्मिन्नित्यारम्भोऽव्यवहितपूर्वकालः। परामृशति—आराधनेन सम्मुखीनां कृत्वा स्वार्थनिर्वाहाय प्रयो-

---

१. पक्षान्तराद्यभावेन च०।

**नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम् ।**
**नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति ॥१॥**

जयतीत्यर्थः" इत्याहुः, तन्न; अयं घट इत्यादिवाक्येऽतिव्याप्तेस्तदर्थस्याभ्यस्यमानत्वात्[1], अनभ्यस्तार्थके ग्रन्थेऽव्याप्तेश्च । आरम्भपदेन च न पूर्वकालाभिधानम्, रूढ्या योगप्रतिबन्धात्, आद्यकृतावेव रूढिमत्त्वात्[2], चरमवर्णोत्पत्तिदशायामेव ग्रन्थत्वे तदव्यवहितपूर्वकाले मङ्गलानाचरणेनासम्भवाच्च । न च ग्रन्थपदं तदाद्यावयवपरम्, तथाप्यसम्भवात् । प्रयोजनकारणाभिधानेन व्यवधानात् । तेन सहैकवाक्यताविरहेण तत्र ग्रन्थत्वविरहात्, तस्य जिज्ञासाया एवोत्थापकत्वात्, काव्यलक्षणमारभ्यैव ग्रन्थत्वात् । अत एव समाप्तौ "पूर्णश्चेदं काव्यलक्षणम्" इत्यभिहितम् । परामृशतेस्तथाऽर्थकल्पने परिभाषयोक्तम्[3] । ज्ञानमात्रार्थत्वात् तस्य । यत्तु देवतापदेन जडरूपवाङ्मयदेवतानिरसनम्, तदप्यसत्; विघ्नविघातप्रयोजनेनैव व्युदस्तत्वात् । ततस्तदसम्भवात् । मिश्रास्तु—परामृशतेः स्मरणमर्थः । 'ऋद्ध्यै[4] विघ्नं वारयति वासुदेवः स्मृतो विभुः' इति श्रुतेर्देवतास्मरणस्यापि मङ्गलत्वमिति वदन्ति । तदपि न सत्; वक्ष्यमाणकारिकायाः स्मरणानर्थकत्वात्, अवतारणिकाया अस्यास्तदर्थगोचराकाङ्क्षोत्थापकत्वनियमात् । अन्यथाऽनवतारकत्वात् । जयव्याप्यवत्त्वस्यैव तदर्थत्वादिति ।

नियतीत्यादि । कवेर्भारती जयतीति सम्बन्धः । हेतूत्थापकं विशेषणमाह—निर्मितिमादधतीति । निर्मीयत इति निर्मितिः (२b) काव्यम् । आदधती समर्पयन्ती । अर्थात् कवितरि । अयं यशोधनादिकञ्च लभतामित्यभिप्रेत्य स्वां निर्मितिं कवितरि निक्षिपन्तीत्यर्थः । तेन भक्तवात्सल्याद् देवताविषयकभावो ध्वनितः । अत एव कवेर्भारतीत्युक्तेरन्यतो[5] वैलक्षण्येनाराध्याराधकत्वसम्बन्धप्रकटनम् । ब्रह्मास्वादसजातीयास्वादानुभावकशब्दग्रथने देवताया एव सामर्थ्ये कविषु निक्षेपमात्रमिति भावः ।

---

१. तदर्थस्याप्यभ्यस्यमानत्वात् च०, भ० ।
२. आद्यकृतेरेव रूढित्वात् च०, झ० ।
३. परिभाषाऽऽपत्तेः च० ।
४. अह्नाय विघ्नं ङ० ।
५. षष्ठ्याऽन्यतो बोध्यबोधकत्वसम्बन्धेन च० ।

जयतीत्युत्कर्षाश्रयो भवति, तद्धेतुं निर्मितिमुत्कर्षयति—नियतीत्यादि। नियतिरदृष्टम्, ब्रह्मनिर्मितौ तत्कृतो नियमः[1]। चन्द्रादिष्वेव चन्द्रादिपदप्रयोगादाह्लादकत्वाद्यवगम इति। अत्र तु मुखादिष्वपि प्रयोगात् तथैवावभास इति। अत्राप्यदृष्टा [भ्यु] पगमेऽपि नियमप्रच्यवनाधिक्यम्। तदाहुरग्निपुराणे व्यासपादाः—

अपारे काव्यसंसारे कविरेकः प्रजापतिः।
यथाऽस्मै रोचते विश्वं तथैव परिवर्तते॥ इति।

यत्तु ब्रह्मनिर्मितौ चन्दनादीनां शीतादिकालभेदेन दुःखसुखादिवैचित्र्यम्, अत्र तु सर्वदैवास्वादायोगव्यवच्छेद इत्याहुः, तन्न; ह्लादेत्यस्य तत्समानार्थत्वाद् वैयर्थ्यापत्तेः। एतद्विशदीकरणायैव तदित्यपि न वाच्यम्, एतदर्थस्यागूढत्वात्। गूढार्थविवेचनेनैव हि विशदनं स्यात्। एकविशेषणार्थस्य विशेषणान्तरेण विशदनस्यासाम्प्रदायिकत्वा[पाता]त्[१]।

दुःखमयत्वं निरस्यति—ह्लादेत्यादि। ह्लादः सुखम्। एकशब्दो मात्रार्थः। मयट् स्वार्थे, तज्जनकत्वेन तत्त्वोपचारात्। सुखमात्रस्य जनिकाम्, न तु दुःखमोहयोः। अन्येषां भावानां सुखदुःखमोहात्मकत्वात्। "सर्वे त्रिगुणात्मका भावाः' इति साङ्ख्यवचनात्। अत्रैकपदेन दुःखादेर्व्यवच्छेदनम्, न तु द्वित्वादेः, तेन सङ्ख्यानभिधानात्। असंज्ञायामप्येकपदेन कर्मधारयः। अनन्या काव्याभिन्ना प्रतिभा तत्परतन्त्राम्, तदन्वयव्यतिरेकानुविधायिनीम्। रसादिवासनाविशेषरूपायाः प्रतिभायाः काव्यत्वेन परिणाम इत्यनन्यपारतन्त्र्यम्। अत एव स्वेच्छया विहरतः क्रौञ्चमिथुनस्य व्याधेन वध्यमानमेकमवलोक्य सकरुणस्याद्यकवेर्वाल्मीकेः प्रोद्बुद्धः शोकः पृथ्व्यां प्रथमावतीर्णः श्लोकत्वेन परिणत इतीतिहासः। श्लोकश्च 'मा निषाद' इत्यादि। शोचनादेव श्लोकः। अत्रावधानादेर्निमित्तकारणस्यापेक्षणेऽपि परिणामवादेऽसमवायिकारणानुप( 3 a )गमात् समवाय्यसमवायिनिमित्तहेतुत्रयसापेक्षब्रह्मनिर्मितितो व्यतिरेकः। न च तत्रापि परिणामः, अन्यथोपपत्तेः। अत्रेतिहास एव प्रमाणम्।

---

1. 'नियमो नियमविशेषः' इत्यादिमहेश्वरोद्धृतटीकाग्रन्थपाठः।

१. विशदनेऽसाम्प्रदायिकत्वाच्चाहुः क०।

नियतिशक्त्या नियतरूपा सुखदुःखमोहस्वभावा परमाण्वाद्युपादानकर्मादिसहकारिकारणपरतन्त्रा, षड्रसा, न च हृद्यैव तैः, तादृशी ब्रह्मणो निर्मितिर्निर्माणम्। एतद्विलक्षणा तु कविवाङ्निर्मितिः। अत एव जयति।

---

नवेति। नवरसा रुचिरा च सेति समासः। बहुव्रीहेरेव संख्यापूर्वकत्वान्न द्विगुत्वम्, तेन नवरसीपदप्रयोगप्रसञ्जनं निरस्तम्। नवभी रसै रुचिरामिति तत्पुरुषस्य बहुपदारम्भो न साधुः। भारती जयव्याप्यभूतैवम्भूतनिर्माणा भवतीति वाक्यार्थः। परामृशतीत्यत्र व्याख्यातोऽस्माभिः।

एवं परामर्शस्य स्तुतिरूपत्वान्मङ्गलत्वम्। उत्कर्षप्रतियोगिप्रदर्शनाय व्यतिरेकमुखेन विवृणोति—नियतीत्यादि। शक्त्येति कृतेत्यस्य विवरणम्, कारणतायाः शक्तित्रयत्वात्। शक्तिश्च पदार्थान्तरम्। सुखदुःखेत्यादि। मोहो मिथ्याज्ञानजन्यः संस्कारो भ्रमो वा। तद्धेतुत्वात् तत्त्वम्। ह्लादेत्यस्य विवृतिरियम्। उपादानं समवायि। आदिपदात् कपालादिग्रहणम्। कर्म क्रिया। अत्राप्यादिपदात् संयोगादिगुणलाभः। असमवायिकारणत्वन्तु गुणकर्मणोरेवेति वचनात्। सहकारि निमित्तम्। [1]कारणपदमुपादानादिषु प्रत्येकमन्वेति। कपालावयवस्यापि समवेतसमवायसम्बन्धाद् घटसमवायित्वम्। कपालरूपं समवायिकारणप्रत्यासन्नम्, दण्डत्वदण्डरूपे नियतपूर्ववर्तिनी निमित्ते इति, तत्तद्व्यवच्छेदाय कारणपदम्, तेषामन्यथासिद्धत्वात्। नवेत्यादिविवरणं षडित्यादि। षड्रसेत्यत्र बहुव्रीहिणा कारिकायामपि नवेत्यादौ तत्समासप्रकटनम्। तैः षड्भी रसैस्तिक्तकटुकषायाम्ललवणमधुरैः। न च हृद्यैव तैरित्यहृद्यत्वायोगव्यवच्छेदः, आस्वादयितृभेदेन [2]तत्त्वादर्शनात्। शृङ्गारादीनां तु रसानां निरतिशयसुखरूपत्वेन स्वर्गवत् सर्वं प्रत्यविशेषात्। जयतिप्रतिपाद्यकविनिर्मित्युत्कर्षस्य विशेषानुपादानेनाखिलनिर्मितेरेव प्रतियोगित्वभानमपि[3] ब्रह्मण एव भवतीत्याह—ब्रह्मण इति। कर्मप्रसिद्धनिर्माणपदेन विवृण्वता क्तिप्रत्ययस्यापि [4]कर्माङ्गित्वमभिहितम्, क्रियायां विशेषणायोगात्। आदधतीत्यस्य विशेषणस्य हेतुगर्भत्वं प्रकटयति—अत एवेति। यत एवं निर्माणमाधत्ते तत

---

१. कारणादिपद क०। २. तत्त्वातत्त्वदर्शनादिति ख०, च०।
३. प्रतियोगित्वभानम्, सा च, च०। ४. कर्माभिधानम् च०।

जयत्यर्थेन च नमस्कार आक्षिप्यते, इति तां प्रत्यस्मि प्रणत इति लभ्यते। इहाभिधेयं सप्रयोजनमित्याह—

---

एवेत्यर्थः। अत्र हि ब्रह्मनिर्मित्यपेक्षया भारतीनिर्मितौ ब्राह्मयपेक्षया च तस्यामाधिक्यं भासत इति लक्ष्यक्रमो व्यतिरेकालङ्कारध्वनिः।

(३b) अलक्ष्यक्रमभावध्वनिस्तु प्राक् प्रदर्शित एव। वस्तुध्वनिमाह—जयत्यर्थेत्यादि। जयत्यर्थ उत्कर्षः, स च विशेषानुपादानात् सर्वप्रतियोगिको भवतीति भारत्यां सर्वोत्कृष्टत्वभाने तदपेक्षया सर्वत्रापकर्षभानम्, समानसंविद्वेद्यत्वनियमात्। सद्यःपातिनि स्वस्मिन्नप्याराध्यापेक्षयाऽपकर्षज्ञानं वृत्तमेवेत्याह—नमस्कार आक्षिप्यत इति। आक्षिप्यते व्यज्यते। अस्यार्थस्य वृत्त्यन्तरासाध्यत्वाद् व्यङ्ग्यत्वमेवेति प्रथमत एव प्रकृतशास्त्रप्रतिपाद्यव्यञ्जनोपयोगो दर्शितः। केचित्तु—आराध्यस्य गुणानुवादमात्रेण यदि कुतश्चिद् वैगुण्यान्न फलसिद्धिस्तदा विफल एवैतावान् प्रयास इत्यत आह—जयत्यर्थेत्यादि। आक्षिप्यते अनुमाप्यते। कार्यमुद्दिश्य देवतास्तुतिप्रवृत्तस्याव्यभिचरितमेव हि तन्नमस्करणम्। संवलितयोः[1] स्तुतिनमस्कारयोरव्यभिचारिणी फलनिष्पत्तिरित्याहुः, तन्न; संवलनेऽपि वैगुण्यसम्भावनासम्भवात्। एवं शङ्कापिशाच्याश्च दुर्वारत्वाद् नानुमानमपि। प्रत्येकं मङ्गलत्वेन स्तुतिमात्रप्रवृत्तौ बाधाद् व्यभिचाराच्चेति। नन्वात्मत्वेनात्मविशेष्यकप्रणत्यभिगम एव भक्तिप्रतिभासः, न तु सर्वत्वेन। सर्वः प्रणतोऽहं प्रणत इति प्रतीत्योर्वैजात्यस्यानुभविकत्वात् तत्प्रतीतिः कथमित्यत आह—इति तां प्रतीत्यादि। इति व्यञ्जनयैवेत्यर्थः। सर्वान्तर्गतोऽहमप्यपकृष्ट इत्यर्थो व्यञ्जनयैव लभ्यत इति भावः।

नन्वहं प्रणत इत्यनेन कस्य प्रणतिरवगम्यताम्, कर्तुर्व्याख्यातुर्वा? नाद्यः; तस्याहंपदानुच्चारणाद् उच्चारयितुरेवास्मदर्थत्वात्। न द्वितीयः; जयत्यर्थस्य श्रोतुरेव नतेरभिगमकत्वादिति। मैवम्; सूत्रविवरणयोरेककर्तृकत्वेन विकल्पानुपपत्तेः, अन्यथा मालारूपकलक्षणे 'माला तु पूर्ववद्' इति सूत्रकृतः पूर्वपदस्याभिधानं विरुध्येत, तस्य मालोपमार्थत्वात्। तस्याश्च वृत्तिकृतैव लक्षितत्वादिति सङ्क्षेपः।

---

१. सम्भृतयोः च०।

**काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।**
**सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे ॥२॥**

---

ग्रन्थशुश्रूषाहेतुसम्बन्धप्रयोजनज्ञानजनिकां द्वितीयकारिकामवतारयति—इहेत्यादि । इह ग्रन्थपूर्वकाले । यत्तु सर्वस्या एव कारिकाया वक्तुर्बुद्धिस्थत्वादिहपदेन द्वितीयकारिकाभिधानमित्युक्तम् [मित्ययुक्तम्], तन्न युक्तम्; द्वितीयकारिकाया अप्रकृतत्वेन श्रोतुस्तदुपस्थित्यनुपपत्तेः । सप्रयोजन-मित्यभिधानक्रियापेक्षया साहित्यम् ।

काव्यमित्यादि । काव्यमत्राभिधेयम् । विशिष्टस्य (4a) काव्यत्वेन दोषगुणालङ्काराणामभिधानम् । प्रयोजनं यशःप्रभृति, काव्यस्योत्पादनेन परीक्षणेन च कर्तुः सामाजिकस्यापीति भावः । केचित्तु काव्यपरीक्षणमेवाभिधेयम्, काव्यमिति परीक्ष्यतया अभिधेयमिति शेष इत्याहुः, तन्न; परीक्षणीयस्याभिधेयत्वे काव्यप्रयोजनाभिधानस्यार्थान्तरतापत्तेः । न च काव्यपरीक्षायाः काव्याङ्गत्वेन तत्फलेनैव फलवत्त्वमित्यभिधानं साधु, विकल्पासहत्वात् । तथाहि—किमिदमङ्गत्वम्, अवयवत्वं निर्वाहकत्वं वा ? नाद्यः; सदसद्विवेचनरूपायाः परीक्षायाः काव्यावयवत्वविरहात् । न द्वितीयः; तत्परीक्षायास्तदनिर्वाहकत्वात् । निष्पन्नस्यैव विविच्यमानत्वात् । वक्ष्यमाणप्रतिभादेरेव काव्यनिर्वाहकत्वात् । किञ्च, निर्वाहकस्य निर्वाह्येणैव फलेन फलवत्त्वम्, न तु निर्वाह्यस्य फलेनेति न किञ्चिदेतत् । यशस इत्यादिषु चतुर्थी तादर्थ्ये । यशोऽर्थमित्यर्थः । अर्थो धनम् । "कृते इत्यव्ययं तादर्थ्ये । अर्थायेत्यर्थः"[1] । व्यवहार आचारः । वेदनं वित् । भावे क्विप् । शिवेतरदशिवं कार्यलक्षणया रोगादिरुच्यते । रोगादितज्जनकदुरितयोरभेदप्रतिपत्तिर्लक्षणायाः प्रयोजनम् । तेन तथाविधदुरितध्वंसोऽपि काव्यस्य फलं कार्यकारणयोरभेदेन तद्ध्वंसयोरप्यभिन्नत्वात् । अन्यथा रोगादिक्षतय इत्यभिधाने ज्योतिषागमावधृतस्य[१] तथाविधदुरितस्य ध्वंसाय देवतास्तवादौ कोऽपि न प्रवर्तेत । तस्य तत्फलत्वानुपदेशादिति । सद्यस्तत्क्षणम्, काव्यश्रवणानुपदमेव, न त्वदृष्टादिवत्कालान्तरभावे देहान्तरोत्पादनद्वारा ।

---

1. प्राचीनटीकाकृतः श्रीधरस्य मन्तव्यमिदमुद्धृतम् (का० प्र० विव०, ३ पृ०)

१. ज्योतिरागम च० ।

कालिदासादीनामिव यशः, श्रीहर्षादेर्धावकादीनामिव धनम्, राजादिगतोचिताचारपरिज्ञानम्, आदित्यादेर्मयूरादीनामिवानर्थनिवारणम्, सकलप्रयोजनमौलिभूतं समनन्तरमेव रसास्वादनसमुद्भूतं विगलितवेद्यान्तरमानन्दं प्रभुसम्मितशब्दप्रधानवेदादिशास्त्रेभ्यः सुहृत्सम्मितार्थतात्पर्यवत्पुराणादीतिहासेभ्यश्च

परा निरतिशया, निर्वृतिः सुखम्, आस्वादाख्यं तदर्थे। कान्ता कमनीया स्त्री, सम्मितत्वं सादृश्यम्। योजनं युक् क्वदभिहितस्य भावस्य द्रव्यवत् प्रकाशेन युक्तोपदेशायेत्यर्थः। फलप्रदर्शनया (?) विहिते कर्मणि प्रवर्तकम्, निषिद्धान्निवर्तकम्, [1]अनिषिद्धे प्रवर्तकञ्च वाक्यमुपदेशः। स च पूर्वद्वयरूपो युक्तः, इतरस्त्वयुक्त इति युक्पदेन तद्वारणम्।

ननु काव्यस्यैतानि क्व फलानि दृष्टानीत्यत आह—कालिदासादीनामिवेत्यादि। करोतीति क्रिया यशःप्रभृतिकर्मणि सम्बध्यते। यथा कालिदासादीनां यशः करोति तथाऽन्येषामपीति योजना। एवमुत्तरत्र। धावकनामा कविः स्वकृतां रत्नावलीनामनाटिकां विक्रीय श्रीहर्षनाम्नो राज्ञः सकाशाद् बहु धनमवापेति (4b) पुरावृत्तम्। राजादीत्यादिपदाद् गुर्वादिग्रहणम्। आचारः साधुरसाधुश्चेति। परस्य वारणायोचितपदम्। अर्थ्यत इत्यर्थो धनादिः। अनर्थो रोगादिः। मयूरनामा कविः श्लोकशतेनादित्यमुपश्लोक्य कुष्ठरोगान्निस्तीर्ण इति जनश्रुतिः। परेत्यस्य विवरणं सकलेत्यादि। मौलिभूतं श्रेष्ठम्। सद्य इत्यस्य विवृतिः समनन्तरमेवेति। व्याख्यातमेतत्। निर्वृतिपदार्थमाह—आनन्दमिति। तत्सगोत्रमिति, तस्य मोक्षकालीनत्वात्। तदुक्तम्—"आनन्दं ब्रह्मणो रूपं तत्तु मोक्षे प्रतिष्ठितम्" इति। तत्र किं मानमित्याह—रसेत्यादि। रस्यते आस्वाद्यत इति रसः, आस्वादनमास्वादः साक्षात्कारः। रस एवास्वादः, तथा सन् सम्भूतः प्रादुर्भूतः, प्राप्तप्रकाशः। स्वप्रकाशतयाऽऽस्वाद्यमेव स्वस्मिन् प्रमाणमित्यर्थः। ननु विषयोपरक्तचेतसां सा[2] कथं भवेदित्याह—विगलितेत्यादि। विगलितो ज्ञानाद् भ्रष्टो वेद्यान्तरः स्वातिरिक्तो यत्र। स्वसौन्दर्यबलात् सर्वानेव विषयान् परिभूय स्वस्मिन्नाकृष्टचित्तमित्यर्थः।

१. अविहितान्निवर्तकश्च, च०। २. सा निर्वृतिः च०।

शब्दार्थयोर्गुणभावेन रसाङ्गभूतव्यापारप्रवणतया विलक्षणं यत् काव्यं लोकोत्तरवर्णनानिपुणकविकर्म तत् कान्तेव सरसतापादनेनाभिमुखीकृत्य रामादिवद्वर्तितव्यं न रावणादिवदित्युपदेशश्च

काव्यपदं विवृणोति—कविकर्मेति । शब्दार्थयोः काव्यत्वेनार्थेऽपि कविकर्मत्वं काव्यलक्षणे विविच्य वक्ष्यामः । कटादेर्व्यावर्तनाय लोकोत्तरेत्यादि । लोकोत्तरा शब्दान्तरासाध्या वर्णना विभावादिप्रत्यायनम्, तत्र निपुणं तदेकशिल्पिकर्मान्तरं नैवेत्यर्थः । शब्दान्तरादर्थान्तराच्च व्यतिरेकमाह प्रभ्वित्यादि । विलक्षणमिति प्रतिपदान्तेनान्वेति । प्रभोराज्ञयाऽनभिमतेऽपि कर्मणि यथा प्रवृत्तिस्तथा कथममुष्मात् कर्मण इदं फलं भविष्यतीत्यनुपपत्तिमनपेक्ष्यैव वेदाधीनकार्यताज्ञानेनेत्यर्थः । अत एव शब्दस्तत्र प्रधानम् । आदिपदात् स्मृतिपरिग्रहः । प्राचीनवृत्तवर्णनमितिहासः । स च सुहृदिव हिताहितफलप्रदर्शनया विहितनिषिद्धकर्मणोः प्रवृत्तिनिवृत्तिजनकः । तत्र नीतेरुद्देश्यतया तत्प्रत्यायकः शब्दः शक्तो भाक्तो वेति न तत्र ग्रहः । अर्थस्य प्राधान्यात् तदाह—अर्थेत्यादि । तात्पर्यमुद्देश्यत्वम् । आदिपदादाख्यानग्रहणम् । विलक्षणं वैधर्म्याश्रयम् । तत्र हेतुः—शब्दार्थयोरित्यादि । गुणभावहेतुः—रसाङ्गेत्यादि । रसस्य स्वाङ्गभूतोऽवयवभूतो विभावादिस्तत्प्रवणतया तत्सिद्धौ नियततया[१] ।

अयमर्थः—शब्दार्थयुगलात् काव्याद्विभावादीनामुपनयनम् । ततो विभावादिभिर्विभावादिव्यापारेण भावनायां (5a) प्रवर्तिते पुरुषे विभावानुभावसञ्चारिरित्यादिस्थायिभावविषयको ज्ञानसुखात्मकः पानकरसवत् समूहालम्बनरूपश्चमत्कारापरपर्यायो रसः स्वयमेव प्रकाशत इति प्रक्रिया । तत्र स्वप्रकाशविश्रामधामनि स्वप्रकाशे रसे शब्दार्थयोरतिदूरतो विश्रान्तिरिति तयोर्गुणीभावः । समूहालम्बने च विभावादेरवयवत्वमेवेति । यदेवंभूतं तदेव काव्यमितरस्याभासत्वमिति यत्तत्पदाभ्यामभिहितम् । कुत इत्याह–उपदेशं चेत्यादि । तस्यैवोद्देशक्षमत्वादित्यर्थः । उपदेशस्वरूपमाह–रामादिवदित्यादि । सत्कर्माचरितवतो रामस्यासन् सम्पदः सर्वाः । अतथाभूतस्य रावणस्य विपद इति हिताहितव्युत्पत्तिः, ततो विहिताचरणेन निषिद्धानाचरणेन च स्यादेव चतुर्वर्गफलमिति काव्यस्योपादेयत्वम् । हिताहितव्युत्पत्तिर्धर्मशास्त्रादस्तीत्यत [२]आह–कान्तेवेति ।

१ तत्सिद्धौ निरततया च०, झ० । २. अस्तीत्याह क० ।

यथायोगं कवेः सहृदयस्य च करोतीति सर्वथा तत्र यतनीयम् ।

एवमस्य प्रयोजनमुक्त्वा कारणमाह—

शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात् ।
काव्यज्ञशिक्षयाऽभ्यास इति हेतुस्तदुद्भवे ॥ ३ ॥

शक्तिः कवित्वबीजरूपः संस्कारविशेषः, यां विना काव्यं न

---

साधर्म्यमाह सरसतेत्यादि । सरसत्वमौत्कण्ठ्यवत्त्वम् । आस्वादानुभवश्चाभिमुखीकरणं विस्मारितान्यकरणीयत्वभावनम् । कवेः काव्यजनकप्रतिभादिमतः । सहृदयस्य रसवासनाशीलस्य । यथायोगमिति । योग्यतया व्यवहारोपदेशौ सामाजिकस्य, न कवेः, तस्य तयोः सिद्धत्वात् । अन्यथा तद्वर्णनानुपपत्तेः । अन्यानि सर्वाणि द्वयोः, कवितुरपि स्वकाव्यभावनेनास्वादानुभवात् । काव्यस्येष्टसाधनत्वमभिधाय कृतिसाध्यतामाह सर्वथेत्यादि । तत्र काव्ये उत्पादनायास्वादनाय च यत्नः कर्तव्य इत्यर्थः । तृतीयकारिकावतारणिकेयम् ।

ननु यत् कृतिसाध्यं तत् कारणसापेक्षम्, कानि तत्कारणानि, इत्यत आह—शक्तिरित्यादि । शक्नोति पुमान् काव्यनिर्माणायास्वादानुभवाय च ययेति शक्तिर्वासना । सैव प्रतिभा । देवताराधनजन्यमदृष्टमिति केचित्, तन्न; अदृष्टस्य साधारणकारणत्वात् । असाधारणस्यैवावेक्षणीयत्वात्[१] । अवेक्षणाद् विचारणात् । इतिना त्रितयपरामर्शः । हेतुः फलायोगव्यवच्छिन्नं कारणम्, स्वरूपयोग्यत्वन्तु[२] प्रत्येकमेव । तस्योद्भवस्तदुद्भवः, उद्भवो जन्म आस्वादोद्बोधश्च । उभयमपि काव्यसम्बन्धि कवित्वं काव्यं सदसद्विवेचनरूपं सामाजिकत्वञ्च[३] । "सङ्ख्यावान्[४] पण्डितः कविः" इत्यनुशासनात् । बीजरूपो बीजतुल्यः । जलादिकमिव व्युत्पत्त्यादिकं सहकार्यान्नाद्यङ्कुरस्येव कवित्वस्य जननात् । आत्मनो विशेषगुणविशेषः संस्कारविशेषो वेगादिव्यावृत्तो[1] भावनाख्यः । अतीन्द्रियस्य तस्य कारणतायामन्यथाऽनुपपत्ति(5b)प्रमाणयति—यां विनेत्यादि । अनुमितिश्च[५] काव्यं

---

1. एतच्च न्यायवैशेषिकमतमनुसृत्य ।

१. अपेक्षणीयत्वात् ख० ।  २. तुर्नास्ति ख० ।
३. चेति नास्ति ख० ।  ४. शिक्षावान् ख० ।
५. अनुपपत्तिश्च क० ।

प्रसरेत्, प्रसृतं वोपहसनीयं स्यात्। लोकस्य स्थावरजङ्गमात्मनो लोकवृत्तस्य। शास्त्राणां छन्दोव्याकरणाभिधानकोषकलाचतुर्वर्ग-गजतुरगखड्गादिलक्षणग्रन्थानां काव्यानाञ्च महाकविसम्बन्धिनाम्, आदिग्रहणादितिहासादीनाञ्च विमर्शाद् व्युत्पत्तिः। काव्यं कर्तुं

---

संस्कारजन्यं तदितराजन्यत्वे सति जन्यत्वादित्येवंरूपा। न प्रसरेद् न जायेत। आस्वादोपयोगितामाह—प्रसृतं वेति। कविशक्त्या जातं वा। उपहसनीयमिति[१]। यां सामाजिकशक्तिं विनाऽऽस्वादसम्पादनविरहेणोपहासः। पुरुषोपहासे काव्यमेव कारणमिति। करणेऽनीयर्। अनास्थायां वाकारोक्तिः। यथा—'किं तेन वा सुतेनास्य यो न चक्रे पितृक्रियाम्' इत्यत्र। केचित्तु वाकारस्य कष्टसृष्ट्या सम्भवमर्थं व्याचक्षते, तदसत्; शक्तिं विनाऽपि कार्यसम्भवे तस्याः कारणता न स्यात्, व्यभिचारात्। काव्याभासमात्रं तत्र काव्यमिति चेत्, न; काव्यं प्रति कारणताग्रहे तदाभासोपहासप्रसञ्जनानौचित्यात्[२]। किञ्च, प्रसृतं वेत्यत्र काव्यस्यैव विशेष्यस्यावृत्तिः स्यात्, न तदाभासस्य; तस्याप्रकृतत्वात्। लोकपदस्य शक्यार्थमाह—स्थावरजङ्गमात्मन इति। स्वाधीनक्रियाशून्यः स्थावरः, तदितरो जङ्गमः। लक्ष्यार्थमाह-लोकवृत्तस्येति। [३]वृत्तानन्तत्वेन वर्णनानन्त्यं लक्षणाप्रयोजनम्। अन्यथैकेन धर्मिवर्णनेन काव्यं संक्षिप्येत। 'स्थावरजङ्गमात्मलोकवृत्तस्य' इति [४]समस्तपाठस्तु सुगमार्थकः। [५]काव्ये वर्णादिनियमबोधकं शास्त्रं छन्दः। प्रकृतिप्रत्ययविभागव्युत्पादकं शास्त्रं व्याकरणम्। अभिधानानि नामानि तेषां कोषः सङ्ग्रहः—नामानुशासनम्। कला नृत्यगीतचित्रादिका। [६]चतुर्वर्गो धर्मार्थकाममोक्षवर्गचतुष्टयम्। एते स्वरूपतो विशेषतश्च लक्ष्यन्ते एभिरिति करणे ल्युट्। भावपक्षे[1] व्यधिकरणबहुव्रीहिः। आदिपदात् स्त्रीपुरुषलक्षणादि[2]। काव्यज्ञानं

---

1. भावपक्षे इति लक्षणशब्दस्य भावार्थत्वे, न कारणार्थत्व इति यावत्।

2. सामुद्रिकापरपर्यायमिति यावद् यस्य पुराणादिषु बहुलमुपलम्भः।

१. उपहसनीयमिति नास्ति ख०। २. अनौचित्यम् क०।

३. वृत्तानन्त्येन ख०। ४. समस्तपाठस्तदुपगमार्थकः ख०।

५. काव्यवर्णनादि ख०। ६. चतुर्वर्ग इति नास्ति ख०।

विचारयितुश्च ये जानन्ति तदुपदेशेन करणे योजने च पौनः-पुन्येन प्रवृत्तिरिति त्रयः समुदिताः, न तु व्यस्ताः; तस्य काव्यस्योद्भवे निर्माणे समुल्लासे च हेतुः, न तु हेतवः।

---

काव्यकारणमित्यन्योन्याश्रयमुद्धरति--महाकवीत्यादिना। कालिदासादयो महाकवयः। ततश्छायासङ्क्रान्तिः स्यात्। अवेक्षणार्थमाह--विमर्शादिति। विमर्शनं मुहुर्मुहुरनुसन्धानम्। निपुणतां विवृणोति—व्युत्पत्तिरिति। सा च दृढतरः संस्कारः। विचारयितुं सदसद्विवेचयितुम्। उपदेशेन शिक्षा व्याख्याता। करणं निर्वाहणम्। कर्तुरुपदेशात् झटित्यास्वादोद्-बोधकः प्रबन्धावयवविन्यासो योजनम् विचारयितुरुपदेशादि[1]। अभ्यासार्थः—पौनःपुन्येन प्रवृत्तिरिति। पूर्वपूर्वकृतिध्वंससह[2]कृतोत्तरोत्तरा कृतिः। त्रयः शक्तिव्युत्पत्त्यभ्यासाः। समुदिताः दण्डादिन्यायेन परस्पर-सापेक्षाः, [3]न तु व्यस्तास्तृणारणिमणिन्यायेन प्रत्येकं कार्योर्जकाः। कुत एतदित्यत आह[4]–हेतुरित्यादि। एकवचनोपादानेनैतल्लभ्यत ( 6a ) इत्यर्थः। यथा गौतमसूत्रे "जात्याकृतिव्यक्तयः पदार्थः" इत्यत्रैकवचनेन त्रिष्वेव पदशक्यत्वम्, न प्रत्येकमवसीयत इति।

अत्र नव्याः—'प्रतिभैव काव्यस्य कारणम्, नापरौ। ताभ्यां विनाऽपि बालकेन काव्योत्पादनात्' इत्याहुः। यत्र त्रयः समुदिताः, न तु व्यस्ताः, तत्राप्येक एव प्रतिभारूपो हेतुः, न तु [5]त्रयो हेतव इति [6]वृत्तिग्रन्थमपि सङ्गमयन्ति। अत एव [7]वक्ष्यमाणग्रन्थे 'कारणमुक्त्वा स्वरूपमाह' इत्युक्तं कारणमिति, न तु कारणानीति ग्रन्थस्वरसमपि वर्णयन्ति, तन्न; कारणा-भिधानपरकारिकायामकारणयोस्तयोरनुपादानप्रसङ्गात्। [8]प्राचीनप्रणय-नानुरोधेन तयोरप्युपादानमिति चेत्, प्रतिभाया अपि कारणत्वं न स्यात्। पूर्वमकवौ व्युत्पत्त्यभ्यासानन्तरं [9]कवयितरि पुंसि व्यभिचारात्। प्रति-भासत्त्वे पूर्वमपि कवित्वप्रसङ्गात्। कालविशेषोऽपि तत्र सहकारीति

---

१. उपदेशात् क०। २. कृतोत्तरा ख०।
३. न त्विति नास्ति ख०। ४. इत्याह क०।
५. हेतवस्त्रयः ख०। ६. इति ग्रन्थमपि क०।
७. वक्ष्यमाणकारणग्रन्थे ख०। ८. प्राचीनप्रणयानुरोधेन क०।
९. कवितरि क०।

एवमस्य कारणमुक्त्वा स्वरूपमाह—

**तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि ।**

चेत्, सर्वमपहस्य तस्यैव कारणत्वप्रसङ्गात् । तस्य साधारणत्वेनासाधारणापेक्षायामिष्वेव [१]समत्वात् । तथापि व्यभिचारात् कथं कारणत्वमिति चेत्, प्रतिभावत् प्रागभवीययोस्तयोरपि सम्भवात् । अत एव "जन्म जन्म यदभ्यस्तं दानमध्ययनं तपः । तत्तत् परत्र सङ्क्रान्तम्" इत्युक्तम् । अत एव च "प्रपेदिरे प्राक्तनजन्मविद्याः" इत्याह कालिदासोऽपि । डिम्भेऽपि कृतिं विना कार्यानुत्पत्तेः । इदानीन्तनकृतौ प्रागभवीयकृतिध्वंसानामनन्तानां सहकारित्वेनाभ्यासत्वमक्षतमेव ।

कारणमुक्त्वा स्वरूपमाहेति । अत्र कारणपदस्य सामग्रीपरत्वेनैकवचनोपादानमिति त्रीण्येव कारणानीति सर्वमवदातम् । एवमिति प्रकरणसङ्गतिः । अस्य काव्यस्य, स्वरूपं साधर्म्यम् ।

इष्टतावच्छेदकप्रकारकेष्टज्ञानस्य प्रवृत्त्यौपयिकत्वेनेष्टतावच्छेदकं रूपमाह—तददोषावित्यादि । तत् काव्यम् । शब्दार्थौ काव्यमिति सम्बन्धः । अत्र केचित्[1]—"काव्यत्वं शब्दार्थयोर्व्यासज्य[२] वर्त्तताम्, प्रत्येकं परिसमाप्य वा । नाद्यः; व्यासज्यवृत्तिजातेरनङ्गीकारात् । नान्त्यः; प्रत्येकं काव्यताप्रसङ्गात् । तेन शब्दवृत्त्येव काव्यत्वम् । विशिष्टविभावाद्यर्थोपस्थापकस्यैव [३]तस्यायं विषय इत्यर्थस्याप्यपेक्षणमिति द्वन्द्वे [४]तुल्यकल्पतयोपादानम् । अत एव "विशेष्यतयाऽभ्यर्हितस्य पूर्वनिपातः; विशेषणतया गौणस्य परनिपातः" इति वदन्ति, तन्न; अदोषसगुणसालङ्कारयोः[५] शब्दार्थयोः काव्यत्वस्योपाधेः प्रत्येकं परिसमाप्यैव वृत्तेः, प्रत्येकं काव्यपदप्रयोग(6b)प्रसङ्गस्य[६] मिथुनपदवद् [७]युगपदुभयोरुपस्थापननियमेन वार्यमाणत्वात् । न च कविकर्म काव्यमिति समाख्याऽनुरोधेन शब्देष्वेव

1. केचिदिति चण्डीदासमतानुवादः । तस्य चानूद्यमानत्वं रसगङ्गाधरे—'अपि च काव्यपदप्रवृत्तिनिमित्तम्' इत्यादिग्रन्थे ।

१. समानत्वात् ख० । २. व्यावर्त्यतां ख० ।
३. तस्यायमतिरायः ख० । ४. तुल्यकक्षातया ख० ।
५. गुणालङ्कारयोः क० । ६. प्रसङ्गस्य च च० ।
७. युगपदुभयोपस्थापन ख० ।

काव्यत्वम् , नार्थेषु । तेषां तत्कृत्यसाध्यत्वादिति वाच्यम् , [१]लोके कारण-कार्यसहकारिणां काव्ये नाट्ये च विभावानुभावसञ्चारिणां तेषां कवि-व्यापारं विना न विभावत्वादिप्राप्तिरित्यर्थेष्वपि समाख्याया अक्षतेः । किञ्च, विभावाद्यर्थोपस्थापकेषु च शब्देषु तदुपस्थापितेष्वर्थेषु वा काव्यत्व-मिति विनिगमनाविरहेण द्वितयवृत्त्येव । अपि चास्वादव्यञ्जकत्वमेव काव्यत्वप्रयोजकं रूपम् , तत्तु शब्देष्वर्थेषु चाविशिष्टम् , तेष्वपि व्यञ्जना-वृत्त्यङ्गीकृतेरिति न शब्दमात्रं काव्यम् । काव्यं पठतीत्यादिप्रयोगस्तु काव्य-पदस्य शब्दपरत्वात् । शब्दार्थाविति । शब्दार्थयोरुपादानपौर्वापर्यं तु ज्ञान-पौर्वापर्यात् । इह हि लोके काणत्वखञ्जत्वमूर्खत्वादिदोषाभाववतः पाण्डित्य-सौन्दर्यादिगुणवतो वस्त्रालङ्कारादिपरिच्छदशालिनो[२] दर्शनेन चेतसि कश्चन प्रकर्ष आधीयते, तदन्यतमविरहे च न तथा, तद्वत् श्रुतिकटुत्वा-पुष्टत्वादिदोषरहिताभ्यां माधुर्यौजःप्रभृतिगुणवद्भ्यामनुप्रासोपमाद्यल-ङ्कारालङ्कृताभ्यामेव[३] शब्दार्थाभ्यां सहृदयहृदयधाम्नि चमत्कारापरपर्यायो ब्रह्मानन्दरसास्वादः प्रकाश्यते । एतद् यत् किञ्चित् । एकरूपप्रच्यवे [४]तु नेत्यदोषादिविशेषणत्रितयोपन्यासः । अत एव [५]यदेवानन्दं करोति तदेव काव्यमित्युक्तम् । काव्यस्यानन्द एवासाधारणं प्रयोजनम् । यशःप्रभृतीना-मन्येषां पुनरन्यतोऽपि सम्भवात् । शब्दार्थाविति द्वन्द्वप्रतिपादितसाहित्यं रसनक्रियापेक्षया ।

अत्र साम्प्रदायिकाः—अदोषत्वं न विशेषणम् , किन्तु यथाशक्त्या [६]दोषहानसूत्रणपरम् , निःशेषदोषोत्सारणस्य गीर्वाणगुरोरप्यशक्यत्वाद् आस्वादवति दुष्टेऽपि काव्यत्वदर्शनाच्च । दोषाणामपकर्षकतामात्रेण स्वरूपाप्रच्यावकत्वात् । मणिषु कीटवेधादीनामिव । किञ्चादोषत्वं यत्-किञ्चिद् दोषाभावो वा? यावद्दोषाभावो वा? नाद्यः; अव्यावर्तकत्वात् । यत्किञ्चिदभावस्य सर्वत्र सुलभत्वात् । नापरः; असम्भवात् । सर्वदोषो-त्सारणस्याशक्यत्वात् । अन्ततः पदांशदोषस्यापि सम्भवादित्याहुः, तन्न; अदोषपदेन दोषसामान्याभावस्य विवक्षितत्वात् । न चैवं न्यक्कारो ह्ययमेवेत्यादिषु[७] (7a) ध्वनिकारप्रदर्शितोत्तमकाव्येष्वप्रसङ्गः[८],—विधेया-

१. लोकेषु ख० । २. परिच्छेदशालिनः क० ।
३. एवेति नास्ति ख० । ४. प्रचारे तु यदित्यदोषादि···च० ।
५. यदानन्दं क० । ६. दोषहीन ख० ।
७. इत्यादौ ख० । ८, काव्येषु प्रसङ्गः ख० ।

विमर्शदोषसत्त्वादिति वाच्यम् , दोषसामान्याभावस्य तत्राप्युपपादयिष्यमाणत्वात् । तथाहि—

न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः
सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः ।
धिग् धिक् शक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः ॥

इत्यत्र वक्ष्यमाणरीत्या प्रतिपदजीवातुव्यङ्ग्यवैचित्र्योत्कर्षसहस्रस्योत्कटतयाऽपकर्षकत्वविरहेणादोषत्वात् ।

तथाहि—अयं रिपुसम्बधो न्यक्कारो निन्दा, अन्येषां पराभवादिः, मम त्वरिसम्बन्ध एव न्यक्कारः । अरय इति नैको द्वौ वा, पूर्वमेकोऽपि नासीत् , सम्प्रति तु युगपदेव बहवो जाताः । तत्रापि तेषां मध्येऽसौ प्रधानत्वेनाभिमतः[1] प्रसिद्धस्तापसोऽपरिशीलितास्त्रः । अत्रैव मनुष्यादकोटिपूर्णायां लङ्कायामेव । एवकारेणात्यन्तासम्भावनावगमः । निहन्ति आप्राणत्यागात् प्रहरति । हननस्य [2]वृत्ताविरतवर्तमानता । रक्षन्तीति राक्षसाः, आस्तां परेषां स्वेषामपि रक्षणे अक्षमाः । कुलं गोष्ठी । [3]बालयुववृद्धस्त्रीषु नैकमपि त्यजति । अहो जीवतीति सोत्प्रासकाका, रावण इति स्वनामसङ्कीर्तनेन च जीवनस्य निन्दावगमादनुतापातिशयः । [4]जगद्रावयतीति रावणस्तस्याप्येवमित्यनुतापातिशयः । [5]धिग् धिगिति द्विरुक्त्या निन्दातिशयः । शक्नोति सर्वत्रेति शक्रः, तमपि जयतीति ताच्छील्ये क्विप् । प्रबोधितवता मादृशानाश्वास्य प्रकृतौ स्थापितवता । प्रबोधनं प्रबोधितमिति ण्यन्तान्निष्ठा[6] तद्वता इत्यर्थो न साधुः । तथा सति प्रबोधनावत्त्वस्य प्रबोधयितृनिष्ठत्वेन प्रबोध्यमानेऽसम्भवात् । कर्मणि क्तवतोरसाधुत्वात् । कुम्भाविव कर्णौ यस्य तेन । स्वर्गस्य सर्वदेवालयस्य ग्रामटिकाया इव यद्विलुण्ठनं हठात् सर्वस्वापनयनम्[7], अल्पार्थे टिकप्रत्ययः । वृथोच्छूनैः वृथाऽहङ्कारवद्भिरेभिः पूर्वदशातोऽपरिहीनैः । भुजैर्विंशत्या, अतो वैरिभुजेभ्योऽधिकैरित्यर्थः ।

---

१. अभिमत इति नास्ति ख० ।　२. वृत्तादिवद्वर्तमानता ख० ।
३. बालजीव क० ।　४. जगद्द्रिद्रा ख० ।
५. सचिरं धिक् ख० ।　६. इणन्तान् ख० ।
७. सर्वस्वानयनं ख० ।

अत्र वीररससञ्चार्यसूयाख्यभावरूपास्वादप्रकर्षकप्रतिपदजीवातुव्यङ्ग्य-वैचित्र्यमहिम्ना न्यक्कारोऽयमिति प्रतिकूलरचनाज्ञानेऽपि, अयं न्यक्कार इत्यनुकूलवाक्यार्थज्ञानं स्यादेव। दर्पणे मुखमिति सत्यपि विशेषदर्शने भ्रमवत्। एतद् ज्ञानन्तु भ्रमैव। तथैव कवितात्पर्यादव्युत्पत्त्यैव वैपरीत्ये-नोपन्यासात्। (7b) एतच्च प्रत्येकपदजीवातुज्ञानं मुहुर्मुहुर्भावनातः परिनिष्ठितभावकानामेव, न प्राथमिकानाम्, तेषां भावनाविरहादिति तेषामास्वादापकर्षकत्वात् तान् प्रति दोषतैवेति दोषलक्ष्यत्वेन काव्यमिदं दर्शितम्। नन्वेवं सामाजिकभेदेन काव्यत्वमकाव्यत्वञ्च स्यादिति चेत्, स्यादेव; काव्यत्वस्योपाधेः सप्रतियोगिकत्वस्यादूषकत्वात्। जातेरेव तथानियमात्। तथा च वक्ष्यति—"वक्त्राद्यौचित्यवशाद् दोषोऽपि गुणः क्वचित्, क्वचिन्नोभौ न गुणो न दोषः" इति। "कीटा-नुविद्धरत्नादिसाधरण्येन काव्यता। दुष्टेष्वभिमता यत्र रसाद्यनुगमः स्फुटः" इति हृदयदर्पणकारोक्तिरपि सङ्गच्छते। यथा कीटानुविद्धे रत्ने प्रोज्वलप्रभातिशयेन कीटानुवेधतिरोधानादुपादेयता न परिहीयते, तथा पदव्यङ्ग्यवैचित्र्याद्युत्कर्षकसामग्रीवशादास्वादोत्कर्षसाम्राज्येन दोषस्या-किञ्चित्करतया काव्यस्य काव्यता न व्याहन्येत इत्यर्थात्। अत एव 'यत्र रसाद्यनुगमः स्फुटः' इत्युक्तम्। स्फुटत्वमुत्कर्षकसामग्रीवशादुत्कर्ष-साम्राज्याच्च प्रदीप्तत्वम्[1]। सगुणाविति काव्यस्य गुणवत्त्वं स्वव्यङ्ग्या-स्वादसमवायसम्बन्धेन, न साक्षात्; तेषां रसैकधर्मत्वात्। यथा 'रक्तः पटः' इत्यत्र परम्परासम्बन्धेन रागः पटे। एतेन गुणानां रसमात्रधर्मत्वेन शब्दार्थयोः सगुणत्वविशेषणमनुपपन्नमिति निरस्तम्। काव्ये गुणाभि-व्यञ्जकशब्दार्थवत्त्वस्य न स्वरूपाधायकत्वम्, अपि तूत्कर्षप्रयोजकत्व-मेवेति तस्य लक्षणेऽविशेषत्वमिति यदुक्तम्, तन्न सुचारु; तद्विशिष्टस्यैवा-स्वादक्षमत्वस्योक्तत्वात्। एवं दोषाभावालङ्कारयोरपि। अनलङ्कृती पुनः क्वापीत्यस्य सालङ्कारत्वमर्थः। तेन नाननुगमः। तथा च वृत्तौ वक्ष्यति सर्वत्र सालङ्काराविति।

ननु गुणालङ्कारयो रसघटितत्वं रसस्य विभावादिनिर्वाह्यत्वम्, तेषाञ्च काव्यघटितत्वमित्यन्योन्याश्रयात्माश्रयचक्रकापत्तिरिति चेत्, "व्यक्तः स तैर्विभावाद्यैः" इत्यादिरसलक्षणे विभावादिव्यापारवत्त्वेन

१. स्फुटत्वमुत्कर्षकसामग्र्या प्रदीप्तत्वम् च०।

विभावादीनामुपन्यासात्, न तु[1]काव्यनाट्यानुप्रवेशेन। अथैवम् "अद्रावत्र प्रज्वलत्यग्निरुच्चैः प्राज्यः प्रोद्यन्नुल्लसत्येष धूमः" इत्यादीनामपि काव्यत्वं स्यात्, ओजोगुणानुमानालङ्कारसद्भावात्[2]। न चेष्टापत्तिः, आस्वाद-विरहात्। तस्यैव काव्यत्वप्रयोजकत्वात्। न चाद्रिविषयको भावः, तदनु-[3]भावाद्यभावात्। मैवम्; अस्य पद्यस्य विभावाद्यर्थानुपस्थापकस्य काव्यताविरहात्। विभावादीनाम्[4]अर्थानां (8a) शब्दानां चोभयेषामपि काव्यत्वोपगमात्। मौनिश्लोके तु मौन्यनुच्चारितेऽपि जन्मान्तरोच्चारिते काव्यत्वमविरुद्धम्। सर्वानुच्चारिते पुनर्नास्त्येवेति।

केचित्तु 'सगुणौ' इत्यनेन लक्षणांशसूचनं गुणस्यास्वादानतिरिक्तत्वात्। एतदुक्तं भवति—"आस्वादजीवातुः पदसन्दर्भः काव्यम्" इत्याहुः[1], तन्न; आस्वादजीवातुतावच्छेदकरूपापरिचये तस्य ज्ञातुमशक्यत्वात्। आस्वादस्य फलत्वेन तत्राप्रवृत्तेरदोषादिविशेषणत्रितयमन्तरेणास्वाद-जीवातुतावच्छेदकस्य निर्वक्तुमशक्यत्वात्, तदङ्गीकारे च तस्यैव तद्धेतो-र्लक्षणत्वापातात्।

अन्यस्तु "काव्यं रसात्मकं वाक्यम्" इत्याह, तदतितुच्छम्; 'न्यक्कारो ह्ययमेव' इत्यादावव्याप्तेः। आकाङ्क्षादिमत एव वाक्यत्वे[5]न न्यक्कारोऽय-मित्यत्र विधेयस्य विधेयतयाऽनवगमेनाकाङ्क्षाविरहात्। मिश्रास्तु[2] अदोषपदस्य स्फुटदोषराहित्यमर्थः। स्फुटत्वञ्च कविप्रतिभातिरोधाना-भावः। प्रतिभावतां वाक्ये कश्चन विशेषो यः सामाजिकांश्चित्रार्पितानिव कृत्वा दोषान् न ग्राहयन्तीत्याहुः, तदपि न सत्; काव्यमात्रस्य प्रतिभाजन्य-त्वेन कुत्रापि तत्र दोषग्रहो न स्यात्। एवञ्च न्यक्कार इत्यादौ दोष-लक्ष्यत्वाभिधानं विरुध्येत। ध्वनिकारादिभिस्तत्रोत्तमकाव्यताङ्गीकृतेः प्रतिभाजन्यत्वस्य दुरपह्नवत्वात्। यदग्निपुराणे व्यासचरणैरुक्तम्—

1. एतच्च दीपिकाकृतश्चण्डीदासस्य मतम्।
2. मिश्रग्रन्थस्यात्र बाहुल्येनोद्धारः। विषयोऽयमुपोद्घातेऽनुशीलित एव।

१. काव्यताद्यनु० क०।
२. पदमिदं नास्ति ख०।
३. तदभावश्च तदनुभावाद्यभावात् ख०।
४. अर्थानामिति नास्ति ख०।
५. वाक्यत्वेनेति नास्ति० ख०।

दोषगुणालङ्कारा वक्ष्यन्ते। क्वापीत्यनेनैतदाह यत् सर्वत्र सालङ्कारौ क्वचित्तु स्फुटालङ्कारविरहेऽपि न काव्यत्वहानिः। यथा—

यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपा-
स्ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः।
सा चैवास्मि तथापि तत्र सुरतव्यापारलीलाविधौ
रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते ॥२॥

( शीलाभट्टारिकायाः-क० व० स० ५०८ )

---

अदोषं गुणवत् काव्यमलङ्कारैरलङ्कृतम्।
रसान्वितं कविः कुर्वन् कीर्तिं प्रीतिञ्च विन्दति ॥ इति।

तत्र काव्यं शब्दार्थयुगलम्, यतो दोषादिगुणत्रयविशिष्टमतो रसान्वितमित्यर्थः। तेनादोषादिविशेषणमावश्यकमिति।

अदोषत्वादिज्ञानं दोषज्ञानाधीनमिति के ते दोषा[1]दय इत्यत आह—दोषगुणालङ्कारा इत्यादि। रसापकर्षकोत्कर्षकरूपाणां दोषगुणालङ्काराणां रसज्ञानाधीनज्ञानविषयत्वेन तन्निरूपणानन्तरं निरूपयिष्याम इत्यर्थः। नन्वलङ्कारस्य न काव्यत्वप्रयोजकत्वम्, क्वापीत्यनेन तदभावेऽपि तत्त्वोपगमादित्यत आह—क्वापीत्यादि। अलङ्कारपदस्य स्फुटालङ्कारपरत्वम्, अपिनाऽस्फुटालङ्कारसमुच्चायनम्। तेनालङ्कारवत्त्वस्य प्रयोजकत्वमायातमित्याह—सालङ्काराविति। तेनास्फुटालङ्कारस्याप्यलङ्कारवत्त्वमभिहितम्। स्फुटत्वञ्च प्रसिद्धत्वं पूर्वपूर्वाचार्यलक्षिततत्स्वरूपम्। लक्षणे सालङ्कारत्वाभिधाने च तत्तत्सम्बन्ध एव काव्य (8b) त्वावगमः स्यात्, अप्रसिद्धस्याप्रसङ्गात्।

ननु प्रसिद्धालङ्कारविरहे क्व काव्यत्वमित्याह—यः कौमारेत्यादि। कौमारम्—बाल्यम्। परमरसिकत्वेन तत्रापि सम्भोगेच्छोत्पादनया तदेव हृतवान्—चोरितवान्। कौमारमभिनवयौवनमित्यर्थो न चारुः, लक्षणापत्तेः। व्रियते स्वयमङ्गीक्रियत इति वर इत्युभयानुरागो दर्शितः। एवकार-

---

१. दोषाः ख०।

अत्र स्फुटो न कश्चिदलङ्कारः। रसस्य हि प्राधान्याद् नालङ्कारता।

---

हिकाराभ्यामन्ययोगायोगव्यवच्छेदावगमः। ता इति अनुभूतवर्तमानातीतचैत्रक्षपाणां प्रत्यभिज्ञायां धर्मिबाधे जात्यवलम्बनात्[1]। एवं ते चेत्यत्रापि। उन्मीलिता विकसिताः। तेन मालतीनां यौवनम्, कलिकाऽवस्थानामेव शैशवात्। प्रौढा युवानः, मालतीकदम्बानिलानां नायिकात्वनायकत्वप्रतीतिः। अत एव परीरम्भेण सुरभित्वम्। चकारोऽस्मीत्यनन्तरं योज्यः। अहमपि सैवेत्यर्थः। उत्कण्ठाहेत्ववस्थान्तरं[2] न प्राप्ता। तत्र स्नानसमयानुभूते इति रोधोविशेषणम्। रोधस्तीरः[3], वेतसी लता, बहुविटपत्वेन लतान्तराश्रयत्वेन च सैव तरुः। सुरतहेतू ये व्यापारलीले, व्यापारो गमनं नायकस्य, लीला वेशविन्यासः स्वस्यास्तयोर्विधौ विधाने उत्पादनायेत्यर्थः। रेवातीराधिकरणकसुरताय प्रियो गच्छतु, अहमपि वेशविन्यासं करोमीत्येवमुत्कण्ठते चेतः। कालान्तरे चैत्रक्षपादिप्रादुर्भावे यत्र क्वचन रतेच्छा स्यात्। अद्य पुनः स्थानविशेषे[4] एवेत्यपि प्रतिपाद्यो विरोधः। मालती वासन्ती, जातिः। कदम्बो धूलिकदम्बो वसन्तप्रभवस्तेन मालतीकदम्बयोः[5] चैत्रक्षपया सह विरोधो निरस्तः। वस्तुतस्त्वनिलाः कदम्बाकृतयः। तेन सर्वदिक्प्रसारित्वावगमः।

अत्र वृत्त्यनुप्रासशब्दालङ्कारवति प्रसिद्धोपमाद्यर्थालङ्कारविरहिणि स्फुटतरचमत्कारानुमीयमानाप्रसिद्धालङ्कारवत्त्वेन[6] काव्यत्वसिद्धिः। अलङ्कारा हि दोषा गुणा इव न प्रतिनियताः, किन्तु कविप्रतिभया विचित्रार्थोपनिबन्धे प्राप्तावसराः। अत एव ते अधुनातना अपि भवन्ति। अत एव दण्डिनोक्तम्—

---

१. जात्यवलम्बनादेव। ते चेति। तत्रापि क०।

२. सैव उत्कण्ठा० ख०।

३. तीरं ख०।

४. स्नानविशेष इति ङ० अहृद्यः पाठः। अत्र व्याख्याशैली प्राचीनानां साम्प्रदायिकानामितरेषाञ्च ग्रथां नानुसरतीत्यवधेयम्।

५. प्रावृड्भवत्वेन चैत्र० ख०।

६. स्फुट एव चमत्कारोऽनु० ख०।

काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते ।
ते चाद्यापि विकल्प्यन्ते कस्तान् कार्त्स्न्येन वक्ष्यति ॥ इति ।

तेषां विशेषाः प्रतिकवि स्थिता इत्येवाह—स्फुटो न कश्चिदित्यादि । स्फुटः प्रसिद्धः । यत्र स्फुटतरश्चमत्कारस्तत्रालङ्कारान्तरमन्तरेण स्फुट-रसत्वमेवालङ्कार इति दण्डिमतमाक्षिपति—रसस्य हीत्यादि । हिरवधारणे, प्रधान्यादेवेत्यर्थः । रस(9a)स्य विप्रलम्भस्य । न च 'स एव हि वरः' इत्यनेनावगते[1] पतिसान्निध्ये स्वाधीनपतिकायाः कथं विप्रलम्भ इति वाच्यम्, क्रीडास्थानालाभे सुरतप्रतिबन्धे तस्य साम्राज्यात् । अन्यथा कुन्तीमाद्र्योः पाण्डुना स[2]हैकत्राशनशयनसम्पत्तावपि शापेन, खञ्जन-मिथुनस्य च निधिगर्भितस्थानालाभेनैकशाखावरूढयोश्चक्रवाकयोरपि निशारूपकालेन सुरतप्रतिबन्धे विभावादिभिरुद्बुद्धा या रतिः, सा कस्य विषयतामालम्बतामिति प्रश्नानिवृत्तेः । प्राधान्यात् सर्वावयव-निर्वाह्यचारुत्वाश्रयत्वान्नालङ्कारता । शब्दार्थपरिष्कारद्वारा रसोपस्कार-कत्वेनैव तत्त्वं स्यात् । अत्र तु रसस्याङ्गिनः सर्वोपकरणैरुपकार्य-स्यातथात्वादिति ।

अत्र केचित्—"पतिसान्निध्याभावादेरुत्कण्ठासामग्र्या अभावेऽप्युत्कण्ठेति कारणाभावे कार्योत्पत्तिरूपाया विभावनायाः सत्त्वेऽपि न तस्याः स्फुटत्वम् । पतिविरहादेरुत्कण्ठाकारणस्य न साक्षात्, अपि तु विरोधिपतिसान्निध्यादिमुखेनैवोपादानात् । एवं पतिसान्निध्यादीनां धृतिकारणानां सत्त्वेऽपि न धृतिरिति कारणसत्त्वेऽपि कार्यानुत्पत्तिरूपाया विशेषोक्तेरपि न स्फुटत्वम्, विरोध्युत्कण्ठामुखेन धृत्यभावस्योप-निबन्धात् । तन्मूलकश्च सन्देहसङ्करोऽपि न स्फुटः । अपरिस्फुटकोटि-द्वयावलम्बनादित्याहुः[1], तन्न; निकुञ्जगर्भितनदीतीरस्योद्दीपनतया[3] तदभावस्योत्कण्ठाहेतोः सत्त्वेनैवोत्कण्ठेति विभावनाया अप्रसङ्गात् ।

1. एतच्च प्राचीनानां रुचकादीनां तदनुवादिनामर्वाग्भवानामनुमोदनदृढी-भूतमत्र कटाक्ष्यते ।

१. गतपति० ख० ।

२. सहैकसदना० ख० ।

३. उपेयतया० ख० ।

तद्भेदान् क्रमेणाह—

**इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद् ध्वनिर्बुधैः कथितः ॥ ४ ॥**

---

एवं क्रीडास्थानप्राप्तेर्धृतिकारणस्याभावादेव न धृतिरिति विशेषोक्तेरप्यप्रसक्तेः। तथा [1]चोभयमूलकसन्देहसङ्करस्यापि। अत एव स्वाधीनपतिकायास्तस्याः क्रीडास्थानं प्रत्युत्कण्ठायाश्चर्व्यमाणत्वमित्यभिधाय क्रीडास्थानस्य तैरेवोत्कण्ठाहेतुत्वाभिधानात्।

अन्ये तु [2]रेवातीरनिकुञ्जस्थलीयसुरतस्याप्यनुभूतपूर्वत्वम्। अन्यदा चैत्रक्षपादिसमागमे सुरतमात्रे, अधुना तु तत्रैव सुरत इति 'तथापि' पदप्रतिपाद्यो विरोधः। तेन पूर्ववद् विभावनादयोऽस्फुटाः सङ्गमनीया इति वदन्ति। तदपि न; अत्यन्तोपादेयस्य वस्तुनोऽनुभूतपूर्वस्यापि पुनरनुभवोत्कण्ठाहेतुत्वस्य दुरपलपत्वेन तदप्राप्तौ उत्कण्ठायाः कारणं विना कृतत्वविरहात्। अस्तु वा यथाकथञ्चित्, अननुभूतपूर्वस्थले तु स्फुटालङ्कारविरहस्य स्फुटत्वमेव। ( 9b ) किञ्च, विभावनाविशेषोक्त्योरस्फुटत्वं व्यङ्ग्यत्वमेव वाच्यम्। तथा च नालङ्कारता, वाच्यपरिष्कारकताविरहात्, तस्यैव परिष्कार्यत्वात्। अत एव वक्ष्यति—"व्यङ्ग्यस्यालङ्कारस्य चाऽलङ्कारत्वं ब्राह्मणश्रमणन्यायेन भाक्तम्" इति। [3]तत्प्रसिद्धालङ्कारविरहेणाप्रसिद्धालङ्कारवत्त्वं सुप्रसिद्धमिति। [4]यच्च तैरुक्तम्—"रस्यत इति रस इति व्युत्पत्त्या रसपदमत्र सम्भोगसञ्चार्यौत्सुक्यमाह" इति, तदपि न साधु; अस्मदुक्तरीत्या रसपदस्य विप्रलम्भपरत्वेनोपपत्तौ योगमात्रस्यानवलम्बनीयत्वात्। रूढितस्तस्य दुर्बलत्वात् शृङ्गारादिष्वेव रूढत्वादिति।

तद्भेदानिति। तस्य काव्यस्य भेदान् विशेषान्। क्रमेणेत्यतः पूर्वं ध्वन्यादीति देयम्। [1]तेषामुत्तममध्यमाधमरूपत्वादुत्तमादीनां पौर्वा-

---

1. एतच्च श्रीधरचण्डीदासादिप्राचीनतरटीकाकृतामितरत्र दर्शितां सरणिमनुसृत्य।

१. चोभयफलसङ्करस्यापि ख०।

२. रेवाकुञ्ज० ख०।

३. तेन प्रसिद्धालङ्कार० ख०, च०।

४. यत्तु ख०।

इदमिति काव्यम्। बुधैर्वैयाकरणैः प्रधानभूतस्फोटरूपव्यङ्ग्यव्यञ्जकस्य शब्दस्य ध्वनिरिति व्यवहारः कृतः।

---

पर्यायाभिधानस्य लोकप्रसिद्धत्वात्। पूर्वं ध्वनिः, ततो गुणीभूतव्यङ्ग्यम्, ततश्चित्रमित्यर्थः। केचित्तु "भिद्यतेऽनेनेति भेदो विशेषलक्षणम्। भेदनं भेदो विभागश्च तस्य विशेषलक्षणप्रयोजनकधर्मिनिर्देशस्य पृथग् वाक्याभिधानं नातिफलवदिति प्रतिलक्षणवाक्यमेव तदभिधानम्, तेनोत्तमत्वादिना विभागः, ध्वनित्वादिना विशेषलक्षणम्, क्रमेणेत्यतः पूर्वमुत्तमादीति[२] शेषः" इत्याहुः, तन्न; [1]विभागविशेषलक्षणयोरेकशब्देनाभिधान एव विभागस्य विशेषलक्षणोत्थापकत्वात्। अत एव "स्याद् वाचको लाक्षणिकः" इत्यादिना विभज्य "साक्षात् सङ्केतितं योऽर्थमभिधत्ते स वाचकः" इति "तद्भूर्लाक्षणिकः" इति "तद्युक्तो व्यञ्जकः" इति वाचकादिशब्देनैव विभागविशेषलक्षणयोरभिधास्यमानता। वाच्यादभिधेयात्। लक्ष्यादतिशये च सुतरां वाच्यादतिशयः। लक्षणास्थले वाच्यस्य लक्ष्यप्रतीतिमात्रोद्देश्यकत्वात्। वाच्यश्च पदार्थो वाक्यार्थश्च, गुरुनयेऽन्वयस्यापि शक्यत्वात्। अतिशयस्तदनिर्वाह्यनिर्वाहकत्वम्। एतच्च वृत्तौ [2]विवेचयिष्यामः।

ध्वनिव्यवहारस्य समूलतामाह-बुधैरिति। के ते बुधाः? इत्याह[३]—वैयाकरणैरिति। तेषामाद्यतान्त्रिकत्वेन प्रामाणिकत्वात्। अर्थप्रत्ययरूपफलोत्पादकत्वात् प्राधान्यम्। स्फुटयत्यर्थं प्रकाशयतीति स्फोटः। स च प्रत्यायकान्तरासम्भवे वर्णात्मकशब्देन प्रत्याय्यः। तत्र का वृत्तिरित्याह-व्यङ्ग्येति। सङ्केताभावेन वृत्त्यन्तराविषयत्वाद् व्यञ्जनयैव प्रत्याय्यः। (10a) व्यञ्जनाया विषयमुक्त्वाऽऽश्रयमाह—व्यञ्जकस्येति। व्यञ्जनाश्रयस्येत्यर्थः। तमाह-शब्दस्येति। तेन नयनत्रिभङ्ग्यादिव्युदासः। ध्वनति स्फोटं व्यञ्जयतीति ध्वनिः।

---

1. चण्डीदासमन्तव्यमिदमालोच्यतेऽत्र टीकाकृता।
2. वृत्तिग्रन्थव्याख्याने द्वितीयोल्लासे टीकायाम्।
१. विशेषलक्षणं प्रयोजनधर्मि॰ ख॰।
२. विशेषः ख॰।
३. इत्यतः ख॰।

ततस्तन्मतानुसारिभिरन्यैरपि न्यग्भावितवाच्यव्यङ्ग्यव्यञ्जनक्षमस्य शब्दार्थयुगलस्य ।

---

अयमर्थः—शब्दात् कथं पदार्थवाक्यार्थधीः ? आशुविनाशिनां क्रमिकाणां वर्णानां मेलकाभावात्, आनुपूर्व्या ज्ञातुमशक्यत्वात् । पूर्वपूर्ववर्णानुभवजनितसंस्कारसहकृतान्तिमवर्णानुभवेन स्फोटो व्यज्यते । स च ध्वन्यात्मकः शब्दो नित्यो ब्रह्मस्वरूपः सकलप्रत्येयप्रत्यायनक्षमोऽङ्गीक्रियते । तद्व्यञ्जकश्च वर्णात्मकः शब्द एव, वृत्तिस्तु व्यञ्जनैव, सङ्केताद्यभावात् । तद्व्यञ्जकशब्दश्च ध्वनित्वेन व्यवह्रियत इति वैयाकरणानां मतम्, तदसत्; एवमन्तिमवर्णानुभवस्यैव पदार्थवाक्यार्थप्रतीतिक्षमत्वे[1] आनुपूर्व्या ज्ञानस्योपायसम्भवे च किमन्तर्गडुना स्फोटेनेति । अत आह—तन्मतानुसारिभिरित्यादि । विषयभेदेऽपि व्यञ्जनावृत्त्यङ्गीकारेण तन्मतानुसरणम् । अन्यैर्ध्वनिकारादिभिः । अपिना बुधसम्बन्धसमुच्चायनम् । न्यग्भावितं स्वाधीनीकृतं वाच्यं येन, व्यङ्ग्यविशेषणमिदम्[2] । व्यञ्जनं प्रतीतिः । तदितरालभ्यत्वेन[3] वर्णानुभवस्यैव पदार्थवाक्यार्थक्षमता । युगलस्येति । द्वयोरेव काव्यत्वात् ।

ननु कारिकास्थबुधपदेन कस्याभिधानम् ? वैयाकरणस्य ध्वनिकारादेर्वा ? नाद्यः; वैयाकरणेन शब्दार्थयुगलस्य ध्वनित्वानङ्गीकारात् । नान्त्यः; बुधैर्वैयाकरणैरिति विवरणविरोधादिति ।

अत्र नव्याः—"बुधैर्ध्वनिकारादिभिः । विवरणे च[4] बुधान्यपदयोरेव सम्बन्धः, तद्व्यवहारस्य समूलताप्रदर्शनाय वैयाकरणोपन्यासः" इत्याहुः, तच्चिन्त्यम्; भिन्नवाक्यस्थयोर्बुधान्यशब्दयोरसम्बन्धात् । अगत्या तथेति चेत्, गतेरुपपादयिष्यमाणत्वात् । अपिना वैयाकरणान्ययोर्द्वयोरेव सम्बन्धसमुच्चायनाच्च । किञ्च, ध्वनिकारादिप्रामाणिकसम्मत्या स्वमतसिद्धौ वैयाकरणानामनाकाङ्क्षिताभिधानापत्तेः । न च प्रामाणिक-

---

१. आनुपूर्वीज्ञानस्य ख० ।

२. इदं नास्ति ख० ।

३. तदितरालभ्यत्वेन क्षमता ख० ।

४. विवरणे चेति नास्ति ख०, ज० ।

यथा—

निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः ।
मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे
वापीं स्नातुमितो गताऽसि न पुनस्तस्याधमस्यान्तिकम् ॥२॥

( अ० श०—वेम० )

---

(10b) सिद्धान्त एव प्रामाणिकान्तरसम्मत[1] इति प्रदर्शनाय तदभिधानमिति वाच्यम् । एवमनवस्थापत्तेः ।

अत्रोच्यते—ध्वनिकारादिर्वैयाकरणश्च द्वावेव बुधपदार्थः । वाच्यादतिशयश्च तदनिर्वाह्यस्य निर्वाहकत्वम्, तच्चालङ्कारिकनये चमत्कारः, वैयाकरणमते च पदार्थवाक्यार्थधीः । उभयमपि वाच्येनासाध्यं व्यङ्ग्यनैवार्प्यमाणमिति वाच्याद् व्यङ्ग्यस्यातिशयः[2] । बुधपदार्थमुभयमेव क्रमेण व्याचष्टे वैयाकरणैरित्यन्यैरपीति च ।

निःशेषेत्यादि । अत्र नायकस्याभिसारणाय प्रेषितायां तं सम्भुज्य समागतायां दूत्यां सम्भोगचिह्नेन स्फुटीभवति तस्या अपराधे उदासीनेषु तत्संवरणाय तस्याश्च प्रकाशनाय स्नानकार्यमुखेन विदग्धनायिकारतकार्यमाह–वापीमित्यादि । स्नातुं वापीं गताऽसीति सम्बन्धः । वापीम्, न तु गृहम् । तत्र स्वाच्छन्द्येन स्नानान्निःशेषक्षालनेन वेशावशेषो न स्यात् । तटं समीपे[3] समप्रायस्थले । तत्र चन्दनं निःशेषच्युतम्, अन्यत्र स्त[4]नसम्बन्धिचूचुकाग्रादिषु सशेषम् । वापीतीरस्य जनाकीर्णतया व्रीडया तथाविधमार्जनविरहात्[5], नायककरामर्शायोगाच्च । अधरः परोष्ठः । तत्र रागो निःशेषः, तस्योत्तानत्वेन बहुलजलसम्बन्धेन क्षालनात् चुम्बनाच्च । न तु पूर्वोष्ठः, न्युब्जतया तत्र जलास्थैर्यात्, चुम्बनविरोधाच्च । दूरं वाप्यां

---

१. सम्मतिप्रदर्शनाय ख० ।

२. व्यङ्ग्यातिशय ख० ।

३. समस्थले ख० ।

४. स्नान० क० ।

५. मार्जनाविरहात् ख० ।

अत्र तदन्तिकमेव रन्तुं गताऽसीति प्राधान्येनाधमपदेन व्यज्यते।

जनरहिते क्षालनात् चुम्बनाच्च दूरम्, न तु तन्मध्ये। स्नानसमये मुद्रणात् चुम्बनाभावाच्च। स्नानोत्तरमभोजनेन सुरतश्रमेण च तानवात्[1] कृशतनौ जाड्यातिशयेन सात्त्विकभावेन च पुलकम्। मिथ्यावादिनि! तदन्तिकमगत्वा गताऽस्मीत्युद्भाविनि बहुधाऽभ्यर्थितोऽपि नायात इत्यावेदिनि च। एवमेवास्मत्प्रतारणं तव शीलम्। णिन्यर्थोऽयम्। दूतीति। दूतस्य मिथ्याऽभिधानं स्वभावः। दूति, न तु सखि। तथात्वे प्रतारणं मत्प्रियसम्भोगश्च न स्यात्। उद्देश्यकार्यानिर्वाहणतया प्रियरमणेन च बान्धवजनस्य यथा पीडा दुःखं भवति तन्न जानासि। तस्याभ्यर्थनसापेक्षत्वेन नीचाभिलाषित्वेन च प्रसिद्धस्यातोऽधमस्य विस्मृततथाविधप्रेम्णो निकृष्टानुरक्तस्य च। न पुनरिति। तदन्तिकगमननिषेधे, पक्षान्तरे [2]पुनरिति 'तु' शब्दार्थे। न स्नातुम्, अपि तु तदन्तिकं गताऽसीत्यर्थोऽव्यवहितपौर्वापर्येणोपात्तयोर्नेति पुनरिति शब्दयोः। पूर्ववाक्यार्थान्वित-(11a)यत्किञ्चिदर्थस्य परवाक्यार्थे निषेधप्रत्यायनोत्सर्गात् तदन्तिके गमननिषेधस्य द्राक् प्रतीतिः, अनन्तरं वक्तृबोद्धव्यवैशिष्ट्येन स्नानार्थगमननिषेधतदन्तिकगमनयोरिति।

अत्र स्नानस्य वाच्यतया तदनुकूला अर्था वाच्याः, रमणानुकूलाश्च व्यङ्ग्या एवेत्याह—तदन्तिकमेवेत्यादि। न त्वन्यान्तिकम्, अन्यत्रैवमकार्यस्यादृष्टत्वात्। ननु चन्दनच्यवनादीनां रतकार्याणां स्नानकार्यत्वबाधात् कथं स्नानान्वय इति चेन्न, स्नानकार्यत्वस्य प्रदर्शितत्वात्। न च तात्पर्यविषयतदन्तिकगमनान्वयानुपपत्त्या लक्षणैवेति वाच्यम्, स्नानप्रतीतिमुखेन तत्प्रकाश एव तात्पर्यस्योक्तत्वात्। तत्प्रकाशश्च वाचकत्वविरहेण व्यञ्जनयैव। अन्यथा—

पंथिअण एत्थ सत्थरमत्थि [सपत्थरत्थले गामे।
उण्णअपओहरं पेक्खिऊण जइ वससि तावससु॥

---

१. तानवं ख०।

२. पुनरिति 'अपि तु' शब्दार्थे ख०।

इत्यत्रोन्नतस्तनादीनां तात्पर्यविषयत्वेन तेष्वपि लक्षणाप्रसङ्गात्। स्वयं दूत्या रहस्यभङ्गभयेन मेघाद्युपादानमुखेन स्तनादिसूचनायाः प्रकृतार्थनिर्विशेषत्वादिति।[1]

अत्र केचित्—"चन्दनच्यवनादीनां रतकार्याणां स्नानकार्यत्वबाधेन न गताऽसीत्यत्र गतौ लक्षणावृत्तावपि गताऽसीत्यतः परं लक्ष्यमिति पदमध्याहार्य रन्तुमिति फलं व्यज्यत इति योजनम्" इत्याहुः, तन्न; तेषां स्नानकार्यत्वाबाधस्य प्रदर्शितत्वात्। न च स्नानस्यावास्तविकतया तत्र बाध एवेति चेन्न, बाधस्यानवतारात्। स्वरूपसतस्तस्याप्रतिबन्धकत्वात्। अन्यथा—

भम धम्मिअ वीसत्थो सो सुणओ अज्ज मारिह् देण।
गोलाणईकच्छकुडङ्गवासिणा दरिअसीहेण॥

इत्यत्र गोदावरीनिकुञ्जवासिदर्पिष्ठसिंहहेतुकश्वमारणस्य[2] वस्तुतोऽसत्यस्य बाधाल्लक्षणाप्रसङ्गात्। अत्र श्वमारणस्य सत्यत्वम्, न तत्र स्नानस्येत्यत्र शपथेनापि प्रत्याययितुमशक्यत्वात्। अस्तु वा, तथापि सिंहहेतुकत्वस्यावास्तविकत्वात्। किञ्च, तदन्तिकगमनलक्षणायां कथं चन्दनच्यवनाद्यन्वयः? तेषां रतैकसाध्यत्वेन गमनेनासम्बन्धे तत्रापि लक्षणाप्रसङ्गात्। अनुपपत्तेर्यावदुपपाद्यविषयत्वात्[3]। तथा चोद्देशविधानापत्तेः। अपि च चन्दनच्यवनादीनां रतकार्यत्वग्रहे सत्येव तदुपपत्तये तदन्तिकगमनलक्षणा वाच्या। स च न सम्भवति, उपायाभावात्। (11b) व्यङ्ग्यस्य रमणस्य प्रथमं ज्ञातुमशक्यत्वात्। [4]अपि च गुणीभूतव्यङ्ग्यव्यञ्जननिरूपणे व्यङ्ग्यार्थस्यानुमेयत्वखण्डने "यानि चन्दनच्यवनादीनि गमकत्वेनोपात्तानि तानि कारणान्तरतोऽपि सम्भवन्ति, अतश्चात्रैव स्नानाङ्गार्थत्वेनोपात्तानीति[5] नोपभोग एव प्रतिबद्धानीत्यनैकान्तो हेतुः" इति वक्ष्यति, तद्विरोधापत्तेः। भवन्मतेऽमीषां कारणान्तरजन्यत्व-

---

१. प्रकृतार्थानिर्वि० ख०।
२. हेतुकस्य मारणस्य क०।
३. यावदुपपादकविषयत्वात् ख०।
४. अपि च इत्यारभ्य व्यञ्जनसिध्यानुपपत्तेरित्यन्तो भागो नास्ति ख०।
५. स्नानकार्यत्वेन च०।

**अतादृशि गुणीभूतव्यङ्ग्यं व्यङ्ग्ये तु मध्यमम् ।**

**अतादृशि वाच्यादनतिशायिनि ।**

---

बाधात् । न च तदेकदेशिदिशा ( ? ) स्वमतेनोपपत्तौ मतान्तरवादस्योन्मत्तप्रलापापत्तेः । त्वन्मतेन[1] व्यञ्जनसिद्ध्यनुपपत्तेः । किञ्च, न गताऽसीत्यत्र गतौ लक्षणायां स्नानान्वयो न स्यात् । तस्य लक्षणायां तात्पर्यग्राहकत्वमात्रमिति चेत्, एवंविधनिरर्थकशब्दवति वाक्ये सामाजिकानां वैमुख्यापत्तेः, चन्दनच्यवनादिषु रतकार्यत्वग्रहस्यैव तात्पर्यग्राहकत्वाच्च । न च तत्रापि गमनाभावो लक्ष्यः, अप्रसक्तप्रतिषेधापत्तेः । किञ्च, तत्र गमनाभावलक्षणायां न[2] पुनरित्यसम्बन्धे गमनाभावत्वेन गमनप्रतीतौ लक्षणाङ्गीकृतेर्विफलत्वापातात् । मिश्रास्तु—"न गताऽसीत्यत्र नञि काकुः । न गताऽसि, अपि तु गताऽस्येवेति काकुलभ्यत्वेन न लक्षणा । तदाह वृत्तिकृत्—तदन्तिकमित्यादि । एवकारो भिन्नक्रमेण, गताऽसीत्यनन्तरं योज्यः" इत्याहुः, तदप्यसत्; अस्मदुक्तरीत्या लक्षणाया अप्रसङ्गेन काकुवादस्य काकुवादत्वापत्तेः, एवकारस्य भिन्नक्रमयोजनाया अन्याय्यत्वाच्च । अन्ये च केचन गड्डलिकाप्रवाहेण लक्षणायामेव पतन्ति । केचन लक्षणापसारणाय कुयुक्तिमुपन्यस्यन्तीति समुपेक्षिता इति ।

अत्र यत् त्वय्यकृतज्ञायां बान्धवबुद्ध्या विश्वसिमि, यच्च तत्र दुर्विदग्धे दृढमनुरक्ताऽस्मि, तद्युक्तमेव[3] । मय्येवंविधवञ्चनासहस्रभाजनत्वमितीर्ष्यमाणाख्यविप्रलम्भप्रभेदसञ्चारिनिर्वेदध्वनिः । तदनुगुणश्च दूतीसम्भोगः । चन्दनच्यवनादीनाञ्च वाच्यानां परिरम्भचुम्बनाद्यनुभावानां सम्भोगोत्कर्षणेनेर्ष्ययोत्तेजकानां निर्वेदोत्कर्षकत्वेन ध्वनित्वमवधेयम् ।

अतादृशीति । तुर्भिन्नक्रमेणात्रैव योज्यः । अस्यैव ध्वनितो भेदस्य प्रयोजकत्वात् । अत्र स्फुटपदानुपादानेऽपि स्फुटव्यङ्ग्यविषयत्वमवसीयते । चित्रस्यास्फुटव्यङ्ग्यविषयत्वादुत्सर्गस्यापवादविषयपरीहारेणैव

---

१. दुष्टमतेन ङ० ।

२. न पुनरित्यस्य सम्बन्धे गमनाभावाभवत्वेन गमनप्रतीतौ ख० ।

३. तद्युक्तम् । एवमप्येवंविध० क० ।

यथा—

ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरीसनाथकरम् ।
पश्यन्त्या भवति मुहुर्नितरां मलिना मुखच्छाया ॥३॥
( रु० का० अ०७।३६ )

अत्र वञ्जुललतागृहे दत्तसङ्केता नागतेति व्यङ्ग्यं गुणीभूतम् , तदपेक्षया वाच्यस्यैव चमत्कारित्वात् ।

---

प्रवृत्तेः । तेन चित्रे नातिव्याप्तिः । अस्फुटत्वञ्च झटित्यप्रतीयमानत्वमिति तत्रैव वक्ष्यामः । तेनातिव्याप्तिभयात् चित्रान्यत्वे सतीति विशेषणीयमिति निरस्तम् । वाच्यादनतिशयश्च व्यङ्ग्यस्य समत्वे प्राधान्येऽपीति वक्ष्यमाणप्रकाराष्टकसमन्वयसूचनम् ।

ग्रामेत्यादि । तरुणो युवा, ग्रामस्थसर्वस्या एव, न तु यस्याः कस्याश्चित् , तेन[1] बहुवल्लभत्वेन दुर्लभत्वम् । जन्मप्रभृतिसादेश्यादनुरागाद्[2] दाढर्यध्वननमिति केचित्, तन्न चारु; एवं दिनान्तरीयसम्भोगप्रत्याशानुवृत्तौ विप्रलम्भस्य लघुत्वापत्तेः । तरुण्या इति द्वयोरपि तरुणत्वेन रागोत्कर्षः । वञ्जुलः अशोकः । नवेति । नूतन ( 12 a )वस्तुनः करग्रहणयोग्यत्वेनावितर्कणीयतया सनाथो युक्तः । पश्यन्त्या इति । वर्तमानोद्देशाद् दर्शनसमय एव मुखश्रीमालिन्योदयात् । कार्यकारणविपर्ययाच्च[3] नातिशयोक्तिः । मुहुरिति जनताभयेन दर्शनस्य सातत्यविरहः । नितरां निरतिशया छाया[4] कान्तिः ।

अत्रेत्यादि दत्तः । सङ्केतो यया मया स्वयमेव सङ्केतो दत्त्वा विघटित इत्यनुतापातिशयः । गुणीभावे हेतुमाह—तदपेक्षयेति । वाच्यस्य वदनकान्तिमालिन्यस्यात्र व्यङ्ग्येन सङ्केतभङ्गेन विप्रलम्भाभासस्य वाच्य-

---

१. तेन वल्लभत्वेन क० ।
२. साजात्यादनुराग···च०, साहचर्यादिति पाठः स्यात् । सादृश्यादिति क० ।
३. कारणकार्यपौर्वापर्यविपर्ययमूलातिशयोक्तिः क० ।
४. या छाया क० ।

**शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम् ॥ ५ ॥**

चित्रमिति गुणालङ्कारयुक्तम्। अव्यङ्ग्यमिति स्फुटप्रतीयमानार्थरहितम्। अवरमधमम्।

---

वदनकान्तिमालिन्यमुखेनैव परिपोषणमिति तन्मुखप्रेक्षित्वात् तस्य गुणीभाव इत्याह—तदपेक्षयेति। चमत्कार आस्वादः।

नन्वत्रास्वादस्य वाच्यमुखश्रीमालिन्यप्रयुक्तोत्कर्षमात्रस्य सहृदयहृदयविश्रान्तिधाम्नः प्राधान्येन ध्वनित्वे कथं गुणीभूतव्यङ्ग्यतेति चेत्, सत्यम्; आस्वादापेक्षया ध्वनित्वेऽपि सङ्केतभङ्गस्य वस्तुतो व्यङ्ग्यस्य गुणीभावादेव तथात्वादवच्छेदभेदेनोभयसमावेशाद् गुणीभूतव्यङ्ग्यमुखेनैवास्वादतोद्बोधे[1] इति तत्त्वेनैव व्यवहारः, न ध्वनित्वेनेति। अथैवं वस्त्वलङ्कृत्योर्ध्वनित्वं न स्यात्, चित्तविश्रामधामन्यास्वादितयोरपि गुणीभावात्। आस्वादवत एव काव्यत्वमिति चेत्, वाच्यतः[2] प्राधान्यमात्रेण तयोर्ध्वनित्वात्, आस्वादापेक्षया च गुणीभाव इति व्यवस्थितेः।

शब्देत्यादि। विशेषे चित्रोपादानात् सामान्येऽपि तदवसीयते। तेनाव्यङ्ग्यं चित्रमिति सामान्यलक्षणम्, चित्रमिति लक्षणपदमध्याहार्यमिति केचित्। चित्रमिव चित्रम्। यथा चित्रे[3] देवादिर्नृपादिर्वा इति ज्ञापनाय चित्रप्रतिकृत्या विविधचित्ररेखाघटनावैचित्र्येण स्वस्यां चित्तमाकृष्टवत्या उत्तरकालं प्रकृतयः स्मार्यन्ते, तथाऽत्रापि झटित्यास्वादोद्बोधायोपनिबद्धैर्गुणालङ्कारैरुत्कटवैचित्र्येणात्मनि सहृदयं[4] विश्राम्य परत एव यथाकथञ्चित् तदङ्गतामासाद्यत इति चित्रता। अत एव चोद्देश्यानिर्वाहकत्वादधमता।

नन्वास्वादवदेव काव्यमास्वादश्च व्यङ्ग्य एवेति कथमव्यङ्ग्यमित्याह—स्फुटेत्यादि। स्फुटो (12b) झटित्युद्बुद्धः प्रतीयमानो व्यङ्ग्यः। मध्यमत्वेऽप्यवरमश्रेष्ठमित्याह—अवरमिति।

---

१. आस्वादादेरुद्बोधः ख०।
२. एवमेव वाच्यतः ख०।
३. चित्रैर्देवादेर्नृपादेर्वा ज्ञापनाय लिखितप्रतिकृत्यां विविधचित्रवर्णाकारत्वाद् घटनावैचित्र्येण स्वस्यां चित्तमाकृष्टवन्त्योत्तरकालं क०; विविधविचित्रवर्णकरेखाचित्ररेखावैचित्र्येण ङ०।
४. सहृदयहृदये क०।

यथा—

स्वच्छन्दोच्छलदच्छकच्छकुहरच्छातेतराम्बुच्छटा-
मूर्छन्मोहमहर्षिहर्षविहितस्नानाह्निकाऽह्नाय वः ।
भिद्यादुद्यदुदारदर्दुरदरीदीर्घादरिद्रद्रुम-
द्रोहोद्रेकमहोर्मिमेदुरमदा मन्दाकिनी मन्दताम् ॥४॥

---

शब्दचित्रमाह—स्वच्छन्देति । स्वच्छन्दं स्वाधीनम्, न तु वातादि-परतन्त्रम् । उच्छलदुत्तरङ्गमम्बुविशेषणम्, तेनाम्बुबाहुल्याद् गाम्भीर्यम् । कच्छे जलसमीपे, निरन्तरं तरङ्गैः खननाद् यत् कुहरं तत्र च्छातेतरद् अल्पेतरत्, अतस्तटसमीपेऽपि दुरवगाहता च्छटापरम्परा तया मूर्छन् प्रादुर्भवन् मोहो वैचित्र्यं विस्मयो येषाम् । वाताद्यभावेऽपि कथमीदृशी वृद्धिः[१] । अमी तरङ्गा वेति वैचित्र्यम्[२] । चिरञ्जीविनामस्माकमाकल्पमेव सुखेन स्नानादिकं भविष्यतीति गङ्गाया उत्कर्षदर्शनेन हर्षः । सहस्र-गुणफलदत्वेन तत्रैवाह्निकं स्नानस्य मुक्तिफलकत्वेन पृथगुपन्यासः । अह्नाय झटिति । वो मन्दतां भिद्यादित्यन्वयः । उदारो महान् दर्दुरः पर्वतभेदः, तस्य दर्या दैर्घ्यं यस्याः, तां भित्वा झटिति जलनिर्गमेण दैर्घ्यम्, न तु जलस्थगनम् । तेन वेगातिशयः । अदरिद्राः परि[३]णाहोच्छ्राय-रूढमूलत्वाद् द्रुमास्तेषां द्रोहः पातनम्, उद्रेकः ऊर्ध्वप्रसरणं तन्मयास्तद्-युक्तास्तरङ्गास्त एव निविडः स्निग्धोऽहङ्कारो यस्याम् । मन्दाकिनी स्वर्गङ्गा ।

अत्र स्वाधीनोच्छलनेनानवरतवृद्ध्या तटस्थमहाद्रुमपातनेन दुर्भेदपर्वत-भेदक्षमवेगातिशयेन च नद्यन्तराद् व्यतिरेकः । श्रवणकीर्तनदर्शनस्पर्शनैः पुण्यजनकानां महर्षीणां सेवनेन च तद्विषयकः स्तावकभावः प्रतीयते । प्रतिपद्जीवातवश्च तदनुगुणा एव मन्दाकिनी तद्गुणास्त्वालम्बानोद्दीपन-विभावौ स्तवोऽनुभावः सञ्चारिणश्च मत्यौत्सुक्यादय एवेति । गङ्गा-विषयकभावसम्भवेऽपि झटिति न रसस्यावभासः । प्रवाहरूपेणानुप्रास-प्रकर्षेण प्रथमं चित्तोत्कर्षणात्, तद्व्यवधानेनैव तदवगतेः । तट-

---

१. बुद्धिः क० ।

२. विचित्रता ख० ।

३. परिणामो ख० ।

विनिर्गतं मानदमात्ममन्दिराद् भवत्युपश्रुत्य यदृच्छयाऽपि यम्।
ससम्भ्रमेन्द्रद्रुतपातितार्गला निमीलिताक्षीव भियाऽमरावती ॥५॥
( हय० व० )

इति काव्यप्रकाशे काव्यस्य प्रयोजन-
कारणस्वरूपविशेषनिर्णयो नाम
प्रथम उल्लासः ॥ १ ॥

---

भङ्गाद् द्रुमपातनपर्वतभेदजगम्यगङ्गानिष्ठौजःप्रकाशकतया महाप्राणवर्णानुप्रासयोर्गुणालङ्कारत्वे। एवं सर्वत्रावधेयम्।

अर्थचित्रमाह—विनिर्गतमित्यादि। यं हयग्रीवं मानं शत्रोर्दयति मित्राय ददाति च। आत्ममन्दिराद् विनिर्गतं न त्वमरावत्यां प्रविष्टम्, यदृच्छया स्वेच्छया भ्रमणिकाभिलाषेण, न तु युयुत्सया। उपश्रुत्य कर्णाकर्णिकया, न तु दूतमुखात्; दौवारिकाज्ज्ञाते[1] विलम्बभयात् स्वयमेवार्गलापातनम्। इन्द्रस्याव्याहतैश्वर्यवतोऽप्येवं भयम्। द्वारपिधानेन नयननिमीलनमुत्प्रेक्षितम्। अस्याश्चोत्प्रेक्षायाः ( 13a ) सहृदयहृदयस्य विश्रामहेतुरुद्भटचमत्कारकता। अत्र हयग्रीवस्य वीरो रसः प्रतीयत इति स एवालम्बनम्। प्रतिपक्षोद्गतं भयमुद्दीपनम्। शत्रुमानखण्डनमनुभावः। यदृच्छासञ्चरणगम्या धृतिः सञ्चारिणीति पूर्णघनानन्दस्य वीरस्य सहृदयानुभवे उत्प्रेक्षोत्थाप्यस्फुटतरश्चमत्कारो व्यवधिः। नायकेन्द्रभयप्रदर्शनप्रभूतममरावतीभयमपि वीरपरिपोषकृदित्युत्प्रेक्षाया अलङ्कारत्वं केवलमनयोर्लक्ष्ययोः शब्दार्थगतवैचित्र्यप्रतीतिव्यवधानेन भाववीरयोः प्रतीतिरिति व्यङ्ग्यस्यास्फुटत्वेन चित्रत्वमित्यवधेयम्।

अत्र केचित्—चित्रं न काव्यभेदः, व्यङ्ग्यस्य प्राधान्येन प्रतीतौ ध्वनित्वम्, तदन्यथा च गुणीभूतव्यङ्ग्यत्वमिति प्रकारान्तरासम्भवात्। तदुक्तं ध्वनिकृता—

प्रधानगुणभावाभ्यां व्यङ्ग्यस्यैवं व्यवस्थिते।
उभे काव्ये तदन्यद् यत् तच्चित्रमभिधीयते॥

इति व्यङ्ग्यस्य द्वैविध्यात् काव्यं द्विविधम्, तदन्यद्यत्तच्चित्रम्, न तु काव्यमित्यभिप्रायात्। तेन चित्रस्य काव्यत्वोपगमो गड्डरिकाप्रवाहेणे-

---

१. दौवारिकाह्वाने ङ०।

त्याहुः। तन्मतानुसारिणोऽप्यन्ये चित्रस्य काव्यतां नानुमन्यन्ते, तन्न; वाचकवाच्यवैचित्र्यप्रतीतिव्यवहितप्रतीतिकस्यास्फुटव्यङ्ग्यत्वस्य तृतीयप्रकारस्य दर्शितत्वात्। तदुभयवैचित्र्ये च व्यङ्ग्यस्य नाङ्गित्वम्, न वाऽङ्गत्वमिति ध्वनिगुणीभूतव्यङ्ग्याभ्यां भेदः। ध्वनिकारवचने तु व्यङ्ग्यस्य प्रधानगुणभावाभ्यां काव्ये द्विविधे। यत्र तु व्यङ्ग्यस्य वाच्यापेक्षया न प्राधान्यं न वा गुणीभावस्तच्चित्राख्यं तृतीयप्रकारकं काव्यमित्यर्थपरत्वम्।

नन्वेवमलङ्कारगुणसत्त्वे सर्वत्रैव चित्रतापाते[1] तत्त्रैविध्यं न स्यादिति चेद् न; यत्र गुणालङ्कारयोर्नोद्भटं वैचित्र्यं तत्रैव पूर्वोभयरूपत्वात् फलेनैव तद्विवेचनोपपत्तेः। किञ्च यत्रास्वादनिर्वाहकप्रयत्नेन कविभिस्तयोर्निर्वाहणं तत्र नोद्भटता, यत्र तु तन्निर्वाहमुदिश्य पृथक प्रयत्नस्तत्रैव तथेति तदेव चित्रमिति। अत एव चित्रस्थले ध्वनिकारेणोक्तम्—"विवक्षा तत्परत्वेन नाङ्गित्वेन कथञ्चन" इति। तत्परत्वेन अलङ्कारपरत्वेन। नाङ्गित्वेन न रसस्याङ्गीभवत्विति तात्पर्येण तच्चित्रमिति सिद्धं त्रैविध्यम्॥

इति श्रीपरमानन्दचक्रवर्तिकृतौ
काव्यप्रकाशविस्तारिकायां
प्रथम उल्लासः॥१॥

—:०:—

१. चित्रता, तेन त्रैविध्यं च०।

# द्वितीय उल्लासः

क्रमेण शब्दार्थयोः स्वरूपमाह—

**स्याद् वाचको लाक्षणिकः शब्दोऽत्र व्यञ्जकस्त्रिधा।**

अत्रेति काव्ये। एषां स्वरूपं वक्ष्यते—

**वाच्यादयस्तदर्थाः स्युः**

वाच्यलक्ष्यव्यङ्ग्याः ॥

व्यञ्जनवृत्तिनिरूपणोद्देश्यकशब्दार्थविभागपरं[1] द्वितीयोल्लासमारभते—क्रमेणेत्यादि। प्रथमं शब्दस्य, ततोऽर्थस्येत्यर्थः। क्रमश्च काव्यलक्षण-(13b)वाक्योपादानलभ्यः, तत्क्रमोपादाने च सङ्गतिः प्रदर्शितैव। स्वरूपमिति। सामान्यमपेक्ष्यैकवचनमिति सम्प्रदायः, तन्न; वाचकत्वादिषु वाच्यत्वादिषु च शब्दार्थयोः स्वरूपेष्वनुगतैकधर्मविरहेणैकवचनानुपपत्तेः। वस्तुतस्त्वत्र व्यञ्जकत्वमेव निरूपणीयतयोद्देश्यम्, नोपाध्यन्तरम्, तस्य सर्वतन्त्रसिद्धत्वात्। केवलमेतदुपपत्तये तदनुवादः, व्यञ्जकत्वन्तु शब्दार्थोभयवृत्तित्वेन निरूपयिष्यमाणमिति तदपेक्ष्यैकवचनमिति भावः।

स्वरूपमसाधारणो धर्मः। तन्निरूपणन्तु विभागानन्तरमेव सुकरमिति विभागमाह—स्यादित्यादि। वाचको लाक्षणिकव्यञ्जकयोः, व्यञ्जकस्य च वाचकलाक्षणिकावुपजीव्याविव्युपन्यासक्रमः। अत्रेति पृथगुपादानेनोद्देश्यत्वमभिहितम्। ननु कथमयं विभागः, प्रत्येकं[2] त्रिरूपतयादर्शनादित्याह—त्रिधेति। तेनामीषां नोपाधेयभेदः, किन्तूपाधिभेद एवेत्यर्थः। काव्य इति तन्त्रान्तरे व्यञ्जनानङ्गीकारात्।

ननु विभागस्य विशेषलक्षणाभिधानप्रयोजनकत्वेन विभागानन्तरं तदुचितमित्याह—एषामित्यादि। अत्रापि स्वरूपमित्येकवचनं पूर्ववत्। वक्ष्यत इति विभागप्रकरणसमाप्तौ, सा चार्थविभागसिद्धावेव स्यादिति। सम्प्रति तदनभिधानम्।

अर्थविभागमाह—वाच्यादय इत्यादि। तेषामर्थास्तदर्थाः। वाचकत्वादिव्यापारेण वाचकादिगम्या इत्यर्थः। अन्यथा तत्पदानुपादानेऽर्थ-

१. शब्दार्थैकविभागपरं॰ ग॰। २. त्रिरूपतादर्शनात् ङ॰; आदर्शनं च॰।

**तात्पर्यार्थोऽपि केषुचित् ॥ ६ ॥**

आकाङ्क्षायोग्यतासन्निधिवशाद् वक्ष्यमाणस्वरूपाणां पदार्थानां समन्वये तात्पर्यार्थो विशेषवपुरपदार्थोऽपि वाक्यार्थः समुल्लसतीत्यभिहितान्वयवादिनां मतम् ।

---

मात्रानुवादेन विभागेऽविनाभावसम्बन्धादिनोपस्थापितस्य तस्य वाच्यत्वाद्यन्यतमरूपविरहेण विभागन्यूनता स्यात् । वाच्यादिवत्तदनुवादो न प्रकृतः, वृत्तिं विना लभ्यस्य तस्य व्यञ्जनवादपरिपन्थित्वादिति वाच्यादिशब्दस्याजहत्स्वार्थपरत्वमाह—वाच्यलक्ष्यव्यङ्ग्या इति । ये त्वादिपदार्थविवरणमिति[1] व्याख्यान्ति, ते तुच्छाः; लक्ष्यव्यङ्ग्ययोरेवादिपदग्राह्यत्वात्, वाच्यस्य वाच्यपदेनैवाभिधानात् ।

नन्वादिपदेन तात्पर्यार्थस्यापि किमिति नोपादानमित्याह–तात्पर्यार्थोऽपीत्यादि । केषुचिदिति षष्ठ्यर्थे सप्तमी । असार्वत्रिकत्वेन न तुल्यवदभिधानम् । व्यङ्ग्यस्य तथात्वेऽपि प्रकृतग्रन्थप्रतिपाद्यतया प्राधान्यम् ।

अयमर्थः–वाच्यलक्ष्ययोः सार्वत्रिकत्वेन प्राधान्यम् । प्रकृतग्रन्थानुद्देश्यतया च गुणत्वमेव, व्यङ्ग्यस्यासार्वत्रिकत्व[2]ग्रन्थोद्देश्यत्वाभ्यां (14a) प्राधान्याप्राधान्ये इत्यमीषां तुल्यता, न तु तात्पर्यार्थस्यातथात्वादिति पृथक् तदुपन्यासः ।

अयं भावः–वृत्तिं विनाऽर्थबोधनेऽतिप्रसङ्ग इति, अन्वये तात्पर्याख्या वृत्तिः । न च तत्रापि पदानां वृत्तिः, अनधिगतपदार्थस्य वाक्यार्थानवगमात् । तत्राप्यभिधाने द्विरभिधानदोषः स्यात् । अत एवान्वये लक्षणेति यद् भट्टमतं तदस्यैव लक्षणेति नामान्तराभिप्रायेण, न तु प्राचीनलक्षणा, मुख्यर्थबाधाद्यभावात् । यदाहुर्भट्टपादाः—

अर्थो ह्यनन्वितावस्थः पदेनाभिहितो यतः ।
अन्वितामात्मनोऽवस्थां लक्षितामेव लक्षयेत् ॥ इति ।
वाक्यार्थो लक्ष्यमाणो हि सर्वत्रैवेति लक्ष्यते । इति च ।

तेनान्वये तात्पर्यवृत्तिरित्याह–आकाङ्क्षेत्यादि । प्रतीत्यपर्यवसानमाकाङ्क्षा । बाधविरहो योग्यता । सन्निधिरासत्तिः । वशादिति साहाय्यकथनम्, तेन निराकाङ्क्षादौ नान्वयः । तात्पर्यार्थस्तात्पर्यवृत्तिलभ्यः । समुल्लसति

---

१. आदिपदविवरणं ग० । २. व्यङ्ग्यस्य सार्वत्रिक० क० ।

वाच्य एव वाक्यार्थ इत्यन्विताभिधानवादिनः ।

**सर्वेषां प्रायशोऽर्थानां व्यञ्जकत्वमपीष्यते ।**

अनुभवविषयो भवति । वाक्यार्थः पदसमूहगम्यः । अपदार्थः प्रत्येकपद[1]वृत्त्यविषयः । वक्ष्यमाणरूपाणां जात्यादीनां पदार्थानां पदवृत्तिविषयाणाम् । समन्वये परस्परसम्बन्धे । विशेषवपुस्तद्विशेषाकारः तस्यैव प्रवर्तकत्वात् । घटमानयेत्यादौ घटकर्मकानयनादौ भासमाने तात्पर्यबलाद् यत् किञ्चिद् घटाद्यानयनादिरूपः । अत एव गुणीभूत (व्यङ्ग्ये) सामान्ये विशेषरूपो वाक्यार्थ इति वक्ष्यति । इयञ्च वृत्तिरनुभाविका ज्ञातैवोपयुज्यते । ज्ञापकञ्च प्रकरणादि । अभिहितानां स्वस्ववृत्त्या पदैरुपस्थितानां वृत्त्यन्तरेणान्वय इति वादिनां प्राचीननैयायिकानां भट्टानाञ्च मतमित्यध्याहार्यम् ।

अन्वयांशोऽप्यभिधां मन्यमानानां गुरूणां मतमाह—वाच्य एवेत्यादि । एवकारेण वृत्त्यन्तरव्युदासः । वाच्योऽभिधेयः । तथाहि—देवदत्त गामानयेत्युत्तमवृद्धप्रयोगात् सास्नादिमतीं व्यक्तिं मध्यमवृद्धे सञ्चारयति, तच्चेष्टया तस्य वाक्यस्य तदर्थबोधकतामनुमायानन्तरं गां नय, अश्वमानयेति प्रयोगे गवापसारणमश्वाहरणञ्च दृष्ट्वाऽन्वयव्यतिरेकाभ्यां क्रियापदार्थान्विते कारके कारकपदस्य कारकपदार्थान्वितक्रियायां च क्रियापदस्य शक्तिं बालोऽवधारयति । ततः प्रयोगकाले तस्य प्रथमत एवान्वितबुद्धिर्जायते । न च गौरवेणान्वयांशपरिहारः, प्रथमगृहीतान्वयशक्त्युपजीव्यत्वेन तदपरित्यागात् । तेनाभिधयैवान्वय (94b) बोधोपपत्तौ किं वृत्त्यन्तरेणेत्यन्वितमेवाभिधत्त इति वादिनः प्रभाकरगुरोर्मतमित्यर्थः ।

ननु विभागे शब्दस्य व्यञ्जकत्वमर्थस्य व्यङ्ग्यत्वमेवाभिहितम् । काव्यलक्षणे तु सगुणावित्यनेन गुणाभिव्यञ्जकार्थकेन द्वयोरपीति विरोध इत्याह—सर्वेषामित्यादि । अपिना व्यङ्ग्यत्वसमुच्चयः । केचित्तु व्यङ्ग्यव्यञ्जकोऽप्यर्थान्तरव्यञ्जनोपाधिरेवार्थस्य भेद इत्यभिप्रायेणैतत् सूत्रमिति वदन्ति, तदसत्; तथात्वे विभागानुपपत्तेः । किञ्च, ज्ञानविषयत्वस्यैवार्थत्वप्रयोजकत्वात्, न तु ज्ञानजनकत्वस्येत्येतत्सूत्रावतारोऽसङ्गत एव स्यात् । वक्त्रादिवैशिष्ट्यानवतारेऽर्थान्तरव्यञ्जनं न स्यादिति प्रायश इत्युक्तम् ।

---

१. प्रत्येकवृत्त्यविषयः ग० ।

तत्र वाच्यस्य यथा—

माए घरोवअरणं अज्ज हु णत्थि त्ति साहिअं तुमये ।
ता भण किं करणिज्जं एमे अण वासरो ठाइ ॥ ६ ॥

( गा० स० वे० ८८६)

अत्र स्वैरविहारार्थिनीति व्यज्यते ।

लक्ष्यस्य यथा—

साहेन्तो सहि सुहअं खणे खणे दूम्मिआसि मज्झ कए ।
सब्भावणेहकररिणज्जसरिसअं दाव विरइअं तुमए ॥७॥

( गा० स० वे० ८४० )

---

माए इत्यादि ।

मार्तगृहोपकरणमद्य तु नास्तीति साधितं त्वया ।
तद् भण किं करणीयमेवमेव न वासरस्तिष्ठिति ॥

मातरित्याज्ञाग्रहणोपयोगिरूपम् । उपकरणं कार्यं नास्ति खलु नास्त्येव त्वया कथितम्, न तु मयोद्भावितम्, भण करणीयम्, तवाज्ञया विना किञ्चिदपि नाचरामि । एवमेव व्यासङ्गं विना वासरो न तिष्ठति । अतीते वासरे तवाज्ञयाऽपि न किञ्चित् करिष्यामीति वाक्यार्थो गुरुनये वाच्यः ।

व्यङ्ग्यमाह—अत्रेति । स्वैरः स्वेच्छाधीनः । स्वैरविहारेच्छायां वाक्यार्थोत्तरकालं प्रतीयमानायां शब्दस्य न व्यापारो विरतत्वात् । अर्थस्य च व्यापारान्तरं न सम्भवतीति व्यञ्जनासिद्धिः । अत्र विहारमात्रे आज्ञापारतन्त्र्यम्, अधिकरणन्तु स्वाधीनमेवेति स्वैरविहारार्थिता ।

साहेन्तीति ।

साधयन्ती सखि सुभगं क्षणे क्षणे म्लानासि मत्कृते ।
सद्भावस्नेहकरणीयसदृशन्तावद् विरचितं त्वया ॥

सद्भावः साधुत्वम् । करणीयं कार्यम् । सदृशमुचितम् । सद्भावस्य यत् कार्यं स्नेहस्य यदुचितं तदाचरितम् ।

---

१. खलु ङ० ।

अत्र मत्प्रियं रमयन्त्या त्वया शत्रुत्वमाचरितमिति लक्ष्यम्। तेन च कामुकविषयं सापराधत्वप्रकाशनं व्यङ्ग्यम्।

व्यङ्ग्यस्य यथा—

उअ णिच्चलणिप्पंदा भिसिणीपत्तस्मि रेहइ बलाआ।
णिम्मलमरगअभाअणपरिट्ठिआ संखसुत्ति ब्व ॥८॥

अत्र निष्पन्दत्वेन आश्वस्तत्वम्। तेन च जनरहितत्वम्। अतः सङ्केतस्थानमेतदिति कयाचित् कश्चित् प्रत्युच्यते। अथवा मिथ्या वदसि, न त्वमत्रागतोऽभूरिति व्यज्यते।

---

अत्रेत्यादि। त्वयेति पदाद् दूतीवैशिष्ट्यम्[1]। मत्प्रियं रमयन्त्येत्यपकारप्रकटनम्। एवंविधम्लानेस्तत्सुरतैकसाध्यत्वात्, अपकारिण्यां साधुत्वस्नेहयोर्बाधेन तदभावव्याप्यत्वेन विरोधित्वं लक्ष्यते। तदाह—शत्रुत्वमिति। तेन शत्रुत्वेन अन्यासम्भोग एवापराधः, रमणस्योभयसाध्यत्वात्। केचित्तु—सद्भावस्नेहाभ्यां तदभावो लक्ष्यते। तेन च तदतिशयः शत्रुत्वं व्यज्यते। लक्ष्यं लक्षणामूलव्यङ्ग्यम्, पार्यन्तिकन्तु कामुकविषयसापराधत्वप्रकाशनमित्याहुः, तन्न; विरोधितया शत्रुत्वस्य लक्ष्यत्वे सम्भवतीत्यध्याहारायोगात्।

पश्य निश्चलनिष्पन्दा बिसिनीपत्त्रे राजते बलाका।
निर्मलमरकतभाजनपरिस्थिता शङ्खशुक्तिरिव ॥

निश्चलेव पृथिवीव निष्पन्दा। केचित्तु निश्चले निरुद्यमे इति सम्बोधनमाहुस्तदसत्; वाच्यसिद्धङ्गतापत्तेः। एतत्सङ्केतस्थानं त्वया नानुसंहितं मयैवोन्नीतमिति ज्ञानेनैव निरुद्यमत्वसिद्धेः। शङ्खशुक्तिस्तिलकाद्युपयोगिशङ्खपात्री, न तु मुक्ताशुक्तिः, तस्या बलाकासदृशत्वराहित्यात्।

अत्रेत्यादि। आश्वस्तत्वमभीतत्वम्[2]। सम्भोगाद् विप्रलम्भस्याधिकमधुरत्वेनापरपक्षे तमाह—अथवेति। गमनतदभावयोरेव विकल्पः, अन्यत् पक्षद्वयमुभयत्र समम्।

---

१. प्रतिपाद्यपदात्; प्रतिपाद्यदूती० ग०, ङ०। २. विश्वस्तत्व० ग०।

वाचकादीनां क्रमेण स्वरूपमाह—

**साक्षात् सङ्केतितं योऽर्थमभिधत्ते स वाचकः ॥७॥**

---

विभागफलं विशेषलक्षणमाह—क्रमेणेत्यादि । स्वरूपं लक्षणम् । क्रमेण यथोद्देशम् ।

साक्षादित्यादि[1] । अभिधत्ते अभिधाग्रहाहितसंस्कारसहकृतः स्मारयति, तेन नानार्थव्यञ्जके नातिव्याप्तिः । तत्र द्वितीयार्थस्य प्रत्यये तद्गोचराभिधासंस्कारस्याप्रयोजकत्वात्, व्यञ्जनाया एवोपगमात् । शक्तिभ्रमाद् बोधके[2] अपभ्रंशेऽतिप्रसङ्गभङ्गाय साक्षादित्यादि । अस्माच्छब्दादयमर्थो बोद्धव्य इत्युद्देशनं सङ्केतः, साक्षात्त्वं सङ्केतग्रहान्तरेणाव्यवधानम् । अन्यत्र गृहीतस्य[3] सङ्केतस्यवात्रारोपणम्, तेनास्य व्यवधानमिति न[4] प्रसङ्गः । अथैवमपभ्रंशानां किं शब्दत्वमिति चेत्, व्यञ्जकत्वमेव वृत्त्यन्तराभावे व्यञ्जनाया एव दत्तपदत्वात् । 'चिंकु'प्रभृतीनामपभ्रंशानां वरागादिव्यञ्जकत्वस्य व्यञ्जनानिरूपणे ग्रन्थकृता वक्ष्यमाणत्वात् । अत एवापभ्रंशानां वाचकत्वमेव, अन्यथा तन्मयकाव्ये काव्यत्वं न स्यात् । तेषां वाचकत्वाद्यन्यतमरूपविरहादिति मिश्रमतं निरस्तम् । शक्तिभ्रमस्तु व्यञ्जनाया एवोपजीवकः, शक्तेः सङ्केतग्रहवत् । केचित्तु—अभिधत्ते समयस्मृत्यवान्तरव्यापारः सन् स्मारयति । साक्षात् सङ्केतितमव्यवधानेन गृहीतसङ्केतम्[5], न तु 'यन्नामा यत्र चैत्यादिस्तन्नामा विषयोऽपि स' इतिवत् सान्तरतयेत्याहुः । यस्मिन् विषये देशे यन्नामकः प्रधानवृक्षोऽस्ति स देशोऽपि तन्नामक इत्युद्देशनं यन्नामेत्यर्थः । यथा 'वटो ग्राम' इत्यत्र तरुसङ्केतेन ग्रामसङ्केतव्यवधानान्न साक्षात्सङ्केत इति । तत्र लक्षणैवेति तदभिप्रायः, तन्न; अपभ्रंशेऽतिप्रसङ्गात्, समयस्मृतेः साक्षात्सङ्केतस्य च सत्त्वात् । किञ्च, यन्नामेत्यादेः सङ्केतग्राहकत्वेन चैत्यवाचकपदस्य देवदत्तादिपदस्येव व्यक्तिविशेषे ग्रामेऽपि शक्तिश्चैत्यादेरुपलक्षणभावेन परिचायकमात्रत्वात् । यथा 'वासस्वी देवदत्तः' ( 15b ) इत्यत्र वाससः । यथा च पुरुषोत्तमक्षेत्रस्याधिपोऽपि पुरुषोत्तम इत्यत्र

---

१. साक्षादिति० ग० । २. भ्रमादवाचके ' 'च' ।
३. गृहीतसङ्केतस्य० ग० । ४. नातिप्रसङ्गः० ग० ।
५. गृहीतसङ्केतं यन्नामा० ग० ।

इहागृहीतसङ्केतस्य शब्दस्यार्थप्रतीतेरभावात् सङ्केतसहाय एव शब्दोऽर्थविशेषं प्रतिपादयतीति यस्य यत्राव्यवधानेन सङ्केतो गृह्यते स तस्य वाचकः ।

---

क्षेत्रस्य । ग्रामशक्तौ तु स्थानविशेषत्वस्यैवावच्छेदकत्वात् । अन्यथा [1]तदुच्छेदे[1] व्यवहारविलोपापत्तेः । न च लक्षणयैवोपपत्तौ शक्तिकल्पने गौरवम्, प्रमाणवतो गौरवस्यागौरवास्पदत्वात् । तस्माल्लक्ष्यव्यवच्छेदाय लक्षणे विशेषणोपादानमखण्डपाण्डित्यमेवेति । मिश्रास्तु—अभिधत्ते स्मारयति, सङ्केतितं सङ्केतज्ञानद्वारेति वदन्ति, तदप्यसत्; [2]अभिपूर्वस्य 'धा' धातोः स्मृतित्वेन शक्तिविरहात् अभिधाख्यसम्बन्धविशेषणेनैव[3] तत्र तदुपगमात्, अपभ्रंशेऽतिव्याप्तेश्च । किञ्च, सङ्केतितमित्यस्य यथाश्रुतेनैवोपपत्तौ लक्षणाऽनवसरात् । नव्यास्तु सङ्केतितमर्थं यः साक्षादभिधत्ते अर्थान्तरप्रतीत्यद्वारेणोपस्थापयति, तेन लाक्षणिके न सङ्केतः, नानार्थव्यञ्जकेऽप्यभिधेयार्थप्रतीत्या व्यवधानमिति न तयोः प्रसङ्ग इति विवक्षन्ति[4], तच्चिन्त्यम् । अभिपूर्वकधाधातोः [5]स्मृतिमात्रे लक्षणापत्तेः । किञ्च, लक्ष्यार्थप्रतीतिमु[ख्]यार्थप्रतीतिव्यवधाननियमे न साक्षादित्यनेन लाक्षणिकस्यापि व्यावृत्तौ सङ्केतितपदवैयर्थ्यात्; वक्ष्यमाणविवरणविरोधात् । यत्र यस्याव्यवधानेन सङ्केतो गृह्यते स तस्य वाचक इति साक्षात्त्वस्य सङ्केतग्रहेणैव सम्बन्धस्य दर्शितत्वादित्यस्तु विस्तरः ।

[6]शब्दव्यवहारे सङ्केतग्रहोपयोगमाह—इहेति । अगृहीतसङ्केतस्य श्रुतप्रथमशब्दस्य । तथात्वे हि सर्वतः सर्वस्य प्रतीतिः स्यात् । यद्यपि [7]शब्दस्यार्थप्रत्यायकत्वं व्यवहारेणानुमेयम्, तथापि शब्दविशेषादर्थविशेषज्ञानं सङ्केतसापेक्षमित्याह—विशेषमिति । कारणान्तरव्यतिरेकप्रयुक्तत्वं निरस्यति—एवेति[8] । सङ्केतज्ञानम् देवदत्तादिपदेषु सङ्केतस्यावश्यकत्वेन

---

1. तत्पदेन प्राक्तनोदाहरणस्य वटन्ग्रामो ग्रामस्य ग्रामनिर्देशकस्य वटस्य परामर्शः ।

१. तरूच्छेदे ङ० ।

२. अभिपूर्वधाधातोः ग० । ३. विशेषेणैव० ग० । ४. विवक्षन्ते ग० ।

५. स्मृतित्वे ङ०, छ० । ६. शाब्द० ग० । ७. शब्दस्य प्रत्या० ग० ।

८. एवेति सङ्केतस्तज्ज्ञानमनुमीयते···ङ०; सङ्केतस्तज्ज्ञानं देव० ग० ।

**सङ्केतितश्चतुर्भेदो जात्यादिर्जातिरेव वा ।**

यद्यप्यर्थक्रियाकारितया प्रवृत्तिनिवृत्तियोग्या व्यक्तिरेव, तथाप्यानन्त्याद् व्यक्तिव्यभिचाराच्च (द्वा) । तत्र सङ्केतः कर्तुं न युज्यत इति गौः शुक्लश्चलो डित्थ इत्यादीनां विषयविभागो न प्राप्नोतीति च तदुपाधावेव सङ्केतः । उपाधिश्च द्विविधो वस्तुधर्मो वक्तृयदृच्छासन्निवेशितश्च । वस्तुधर्मोऽपि द्विविधः–सिद्धः

---

गवादिपदेष्वपि तथा कल्प्यत इति भावः ।

ननु गङ्गापदस्य तटेऽपि वाचकत्वं स्यात्, तटपदसङ्केतितस्य तस्य[1] बोधनादित्याह—यत्र यस्येति । समभिव्याहारलभ्यमेव स्वसङ्केतार्थबोधकत्वमिति भावः । साक्षात्पदार्थमाह—अव्यवधानेनेति । तच्च व्याख्यातमेव । एतेन साक्षात्सङ्केतितोऽर्थो वाच्य इत्यर्थलक्षणमपि सिद्धम् ।

कः सङ्केतित इति जिज्ञासायामाह—जात्यादिरिति । तदुक्तम्—

शब्दैरेभिः प्रतीयन्ते जातिद्रव्यगुणक्रियाः ।
चातुर्विध्यादमीषान्तु शब्द उक्तश्चतुर्विधः ॥ इति ।

जातिरेवेति । ( 16a ) एवकारव्यवच्छेदेन शक्यतोपपत्तौ न तद्भेदकल्पनमिति भावः ।

ननु व्यक्तावेव व्यवहारगोचरत्वेन सङ्केतः प्राप्नोतीत्याह—यद्यपीति । अर्थः प्रयोजनम्, क्रिया निर्वाहकारी हेतुः । यस्मात् प्रयोजनं तत्र प्रवृत्तिरन्यतो निवृत्तिः । आनन्त्यादिति । प्रतिव्यक्ति समयग्रहो न शक्यः, युगपदनुपस्थितेः । क्रमेण च पुरुषायुषपर्यवसानमित्यर्थः । असङ्केतितव्यक्तावपि प्रतीतिदर्शनेन व्यभिचारः । कर्तुं ज्ञापयितुम्[2] । अथवा संज्ञाशब्दाभिप्रायेणेदम् । तत्र सङ्केतस्य पुमिच्छाधीनत्वात् । विषयः प्रवृत्तिनिमित्तम्, तद्भेदे पर्यायत्वाद्युगपदप्रयोगापत्तेः । उपाधौ विशेषणे । एवकारेण विशेष्यांशव्यवच्छेदः । विशिष्टशक्त्यभ्युपगमेऽपि तथैवानन्त्यव्यभिचारदोषापातात् । विशेषणसङ्कोचापत्तौ[3] गौरवाच्च ।

वस्तुधर्मो वस्तुनि समवेतः, नाधुनिको जातिगुणक्रियाख्यः । या इच्छा यदृच्छा, पुंसः स्वतन्त्रेच्छा, तया सन्निवेशितः, वाच्यवाचकसम्बन्धेन

१. तस्य नास्ति० ग० ।  २. ज्ञातुम् च० ।
३. विशेष्यस्य नानात्वाद् विशेषणशक्त्यैवोपपत्तौ ङ० ।

साध्यश्च । सिद्धोऽपि द्विविधः—पदार्थस्य प्राणप्रदो विशेषाधानहेतुश्च ।

---

धर्मिणि स्थापितः संज्ञारूपः । स च डित्थादिशब्दः[1] । तत्र चैकव्यक्तिकत्वेनानन्त्यव्यभिचाराभावात् कथमुपाधिचिन्ता पदान्निर्विकल्पकापत्तेः । तस्य च वाच्यवाचकसम्बन्धेन धर्मिणि वृत्तेरुपाधित्वम् । अथ तत्र शक्तिग्रहकालीनमितरव्यावृत्तं स्वरूपमेव संस्कारबलाद् भासत इति चेत्, शब्दात्तदुपस्थितौ तत्रैव शक्तिप्रसङ्गात् । न चेष्टापत्तिः; तथाऽनवगमात् । डित्थादिशब्दवाच्यत्वेनैव प्रतीतेः । द्रव्यशब्दता तु शब्दस्य द्रव्यत्ववादिनो [2]भेदैकदेशिनो दिशा । सिद्धो नित्यः । अथवा सिद्धः सत्त्वरूपो[3] लिङ्गसङ्ख्याद्यन्वययोग्यः क्रियमाणतानिर्देशशून्यः, तेन घटत्वमेकं शुक्लः शुक्लौ शुक्ला इत्यादिप्रयोगाः । क्रियापदं हि क्रियमाणतानिर्देशः, तद् विषयः । अत एव क्रियत इति क्रिया साध्यमुच्यत इत्युक्तम् । साध्यः साधनापेक्षः क्रियारूपः । अत एव ई[4]ह हि साधनायत्तोदयं सर्वमतस्तदधीनतया सिद्धमपि क्रियात्वेनावभासत इत्युक्तम् । धातुप्रतिपाद्यायाश्च तस्याः क्रियाया अवस्थाद्वयं साध्यता सिद्धता च । ते च आख्यातकृत्प्रत्ययगम्ये क्रियान्तरनिराकाङ्क्षत्वसाकाङ्क्षत्वरूपे । अत एव पचतीत्यत्र पाके क्रियान्तरस्य नान्वयः; पाकः क्रियते, पाचको गच्छति इत्यादौ तु कृतिगमनाभ्यां स्यादेव विषयत्वेनावच्छेदकत्वेन वेति । एतन्मूलकमेव क्रियाप्रधानमाख्यातमिति वचनम् । सजातीयान्तरमनपेक्ष्य स्वान्वयबोधकत्वमेव प्राधान्यम् । तेनाख्यातयोगे ( 16b ) क्रियायाः साध्यतया साधनापेक्षा, यथा काष्ठैः स्थाल्यामोदनं पचतीत्यत्र । कृद्योगे तु न तथेति काष्ठैः पाक इत्यादिप्रयोगो न स्यात् । साधनापेक्षास्वरूपयोग्यत्वेन कृद्योगेऽपि क्रियात्वम् । तेन पाकादिपदानां क्रियाशब्दत्वम् । पदार्थस्य पदोद्देश्यस्य उपादेयस्याविनाभावेन पदप्रतिपाद्यस्य वा प्राणनं प्राणो व्यवहारयोग्यता तत्प्रदस्तन्निर्वाहकः, गोत्वेनैव गवादिव्यवहारात् । विशेषः सजातीयेभ्यो व्यावर्तनम्, शिष असर्वोपयोग इति धात्वर्थानुसारात् । आधानं प्रत्ययः ।

---

१. डित्थादिः । न च० ग० ।　　२. भेदैकदेशिनो नास्ति ग० ।

३. 'सत्त्वरूपो'''च० ।　　४. अत एवेष्टसाधनायत्तमिति ङ० ।

तत्राद्यो जातिः । उक्तं हि वाक्यपदीये "न हि गौः स्वरूपेण गौर्नाप्यगौर्गोत्वाभिसम्बन्धात्तु गौः" इति । द्वितीयो गुणः । शुक्लादिना हि लब्धसत्ताकं वस्तु विशिष्यते । साध्यः पूर्वापरीभूतावयवः क्रियारूपः ।

---

आद्यः प्राणप्रदः, जातिः सामान्यम् । अत्र भर्तृहरिसम्मतिमाह—उक्तं हीति । वाक्यपदीयो ग्रन्थभेदः । गौः गोपदोद्देश्यो धर्मी, स्वरूपेणोपाधिरहितव्यक्तिमात्रेण, न गौर्व्यवहारहेतुः । तदा घटोऽपि गौः स्यात्, स्वरूपाविशेषात् । न गौर्गोव्यवहारहेतुः, नाप्यगौः न गोभेदव्यवहारप्रयोजकः । तदा गौरप्यगौः स्यात् । प्रयोजकमाह—गोत्वेत्यादि । गोत्वं जातिः । तस्यैव साधर्म्यवैधर्म्यरूपत्वात्, गोभेदव्यवहारेऽपि तस्यैव प्रयोजकता । द्वितीयो विशेषाधानहेतुः वस्तु स्वाश्रयः विशिष्यते सजातिभ्यो व्यावर्तते । लब्धसत्ताकं प्राप्तव्यवहारयोग्यताकम् । न चैतज्जातिष्वतिप्रसक्तं घटत्वादीनां जातीनां स्वाश्रयेष्वनुगतबुद्धेरिव तदितरेभ्यो व्यावृत्तधियो जनकत्वात् । एकस्यैव साधर्म्यवैधर्म्यत्वादिति । मैवम्; लब्धेत्यतीतनिर्देशात् स्वसमवायात् प्राक् सिद्धस्वाश्रयविशेषकत्वलाभः । न चैवं जातौ व्यक्त्युत्पत्तिदशायामेव तत्समवायात् । उत्पन्नस्य द्रव्यस्य क्षणमेकं[1] निर्गुणत्वेन गुणानामेव तद्रूपत्वात् । वस्तुतस्त्वितरभेदसाधनदशायामेव जातिभ्यो व्यवृत्तधीः, न तु प्रतीतिमात्रेभ्यः, घट इत्यतोऽपट इत्यप्रतीतेः । शुक्लादिभ्यस्तु नियमेन कृष्णादिव्यावर्तनमिति न जात्यादिषु प्रसङ्गः । साध्यः क्रियमाणात्वेन यो निर्देशः । क्रियापदं तद्विषयः । पूर्वेत्यादि । पूर्वत्वापरत्वे परत्वापरत्वाख्यौ गुणविशेषौ तयोर्द्रव्याश्रितत्वनियमेन तदनाश्रयस्य व्यापारप्रचयस्य तदाश्रयत्वेन प्रतीतिश्चार्थः । पूर्वापरत्वेन प्रतीयमाना अवयवाः । प्रचयान्तर्गताः प्रचयिनो यस्य क्रियारूपस्य धात्वर्थस्य व्यापारप्रचयस्याधिश्रयणाद्यवस्रावणान्तस्य । अथवा समूहस्यानतिरिक्ततया व्यापाराणां प्रत्येकं पाकत्वेन क्रमेण पाक इति भ्रम एवेति, अक्रमस्य क्रमप्राप्तिश्चार्थः । तदुक्तम्—यावत् सिद्धमसिद्ध-[2]

---

१. तत्क्षणे० ग० ।
२. यावत्सिद्धमसिद्धं वा साध्यत्वेन प्रतीयते ।
आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते ॥ च० ।

डित्थादिशब्दानामन्त्यबुद्धिनिर्ग्राह्यं [1]संहृतक्रमस्वरूपं वक्त्रा यदृच्छया डित्थादिष्वर्थेषूपाधित्वेन सन्निवेश्यत इति सोऽयं संज्ञारूपो यदृच्छात्मक इति ।

---

मित्यादि । व्यापाराणां ( 17a ) विक्लित्यादिफलकत्वेनानुगमान्न नानार्थता । एषाञ्च व्यापाराणां सर्वेषां प्रागभावे प्रध्वंसे यत्किञ्चिदेकस्य वर्तमानत्वेन पक्ष्यत्यपचत् पचतीति व्यवहारः ।

डित्थादीत्यादि । स्वं रूपं वर्णात्मकम् । संज्ञाशब्दा हि स्वप्रत्यक्षानन्तरं स्वविशिष्टान् धर्मिणः प्रत्याययन्ति । तेनान्त्या स्वजन्या या विशिष्टबुद्धिस्तद्ग्राह्यम् । [2]तेन विषयीकृतम् । नैवं गवादिपदानि । तैर्जात्यादिवैशिष्ट्येनैव बोधनात् । वैधर्म्यान्तरमाह—संहृतेत्यादि । पूर्वपूर्वप्रयोगदर्शनात् परः परः प्रयोग इति जात्यादिशब्देषु क्रमः । सोऽत्र नास्ति । अत्र हेतुः यदृच्छयेति । अनेन नाम्ना इमं व्यवहारयामीति स्वतन्त्रपुमिच्छा यदृच्छा तया । डित्थादिष्वर्थेषु डित्थादिपदबोध्येषु धर्मिषूपाधित्वेन विशिष्टधीहेतुधीविषयत्वेन संनिवेश्यते समर्थ्यते ।

ननु कथमतद्धर्मस्य तद्धर्मतेति चेत्, किमिदं धर्मत्वम् ? संयोगसमवायान्यतरसम्बन्धेन वृत्तिमत्त्वं वृत्तिमत्त्वमात्रं वा ? नाद्यम्; गौरवात् । अन्त्यश्चेदत्रापि तदनपायात् । वाच्यवाचकास्यस्वरूपसम्बन्धेनैव वृत्तेः । अन्यथा प्रमेयत्वे प्रमेयत्वं घटपदं घटे वर्तते इत्यादिप्रतीत्यनुपपत्तेः । स्वज्ञाने स्वज्ञानस्य कारणत्वे आत्माश्रय इति ये वदन्ति ते किमभेददर्शने मुद्रितनयनाः ? अन्यथा विशेषणज्ञानस्य विशिष्टबुद्धौ कारणता न स्यात्, विशिष्टज्ञानस्यापि विशेषणज्ञानत्वादिति । केचित्तु—अन्त्यं व्यवच्छेद्यं स्वलक्षणं बुद्धिद्वारानिर्ग्राह्यं यस्य, उपाधिप्रत्ययानन्तरमुपाधेयप्रत्यायनमिति क्रमः, सोऽत्र संहृतो निरस्तः झटित्येव धर्मिप्रत्यायनादित्याहुस्तन्न; अन्त्यपदेन व्यवच्छेद्यानभिधानात् ।

किञ्च, बहुव्रीहावन्त्यपदस्य परनिपातापत्तेः । अपि चैवं गवादिपदेभ्यो वैधर्म्यं न स्यात्, तेषामपि स्वज्ञानेन [3]धर्मिप्रत्यायनात् । यच्च झटित्येव

---

१. संस्कृतति प्रचलितः पाठः ।　　२. तेन विषयीकृतं नास्ति० ग० ।

३. स्वज्ञानेन प्रत्यायनात् ङ० ।

"गौः शुक्लश्चलो डित्थ इत्यादौ चतुष्टयी शब्दानां प्रवृत्तिः" इति महाभाष्यकारः ( ऋ० ६ क० प्र० सू० )। परमाण्वादिनां तु गुणमध्यपाठात् परिभाषिकं गुणत्वम्।

---

धर्मिप्रत्यायनमित्युक्तम्, तदप्यशुद्धम्; पदान्निर्विकल्पकापत्तेरित्युक्तत्वात्[1]।

मिश्रास्तु युगपदपठितेषु[2] वर्गेषु कथं सम्बन्धपरिच्छेद इत्याह—संहृतेत्यादि। तत्र हेतुरन्त्येति। अन्त्यवर्णबुद्धौ प्रातिस्विकसंस्कारोपनीतेषु [3]वर्णेषु शक्यः सम्बन्धपरिच्छेद इत्याहुः, तन्न; शब्दान्तरादेव धर्मस्यास्य संज्ञाशब्देषु विशिष्योपादाने निर्युक्तिकतापत्तेः। अन्यानि कुव्याख्यानान्युपेक्षितानि[4]।

ननु संज्ञायदृच्छाशब्दयोरपि संभवे कथं चातुर्विध्यमित्याह—सोऽयमित्यादि। द्रव्यशब्द एव संज्ञा यदृच्छेत्यर्थः। इति हेतौ। यत उपाधीनां (17b)चातुर्विध्यं तत इत्यर्थः। प्रवृत्तिर्ज्ञानजनकता, उपाधिचातुर्विध्यात् तज्ज्ञानं चतुर्विधमिति भावः। उपाधिभेदनिरूपणस्योपसंहारे फलं दर्शितम्। यत्तु करणव्युत्पत्त्या प्रवृत्तिपदेन तन्निमित्तस्याभिधानम्, तदसत्; उपाधिप्रवृत्तिनिमित्तयोरभेदेन हेतोः साध्याविशेषत्वापत्तेः। महाभाष्यं फणिभाष्यम्; पाणिनिमुनेर्व्याकरणसूत्रस्य विवरणम्।

ननूक्तेष्वन्तःपातिनां परमाणूनामपि सम्भवे कथं शब्दानां चातुर्विध्यम्? तथाहि "परमाणुत्वं न जातिः, घटजलपरमाण्वोः परस्परपरीहारेण वर्तमानयोः पृथिवीत्वपरमाणुत्वयोः पृथिवीपरमाणौ समावेशेन जातिसङ्करप्रसङ्गात्। न तावद् गुणः रूपादिचतुर्विंशतावपाठात् सिद्धत्वादनेकव्यक्तिकत्वाच्च। न क्रियाद्रव्ये" इत्याह—परमाण्वादीनामित्यादि। आदिशब्दात् परममहत्त्वादिग्रहणम्। तदुक्तम्—"अणु महद् दीर्घं ह्रस्वञ्च परिमाणानि" इति। परिमाणद्वारैव गुणमध्यपाठः, तेषां तद्भेदत्वात्। ननु भवत्परिभाषाया अविषयत्वेन गुणमध्यपाठोऽप्यकिञ्चित्कर एवेत्याह—पारिभाषिकमित्यादि। परमाणुत्वस्य महत्त्वव्यावर्तकत्वेना-

---

१. पत्तेरुक्तत्वात् ख०। २. युगपदनुपस्थितेषु ख०, ङ०।
३. वर्णेषु नास्ति ख०। ४. उपेक्ष्याणि ख०।

गुणक्रियायदृच्छानां वस्तुत एकरूपाणामप्याश्रयभेदाद् भेद इव लक्ष्यते, यथैकस्य मुखस्य खड्गमुकुरतैलाद्यालम्बनभेदात्।

हिमपयःशङ्खाद्याश्रयेषु परमार्थतो भिन्नेषु शुक्लादिषु यद्वशेन शुक्लः शुक्ल इत्याद्यभिन्नाभिधानप्रत्ययोत्पत्तिस्तच्छुक्लत्वादि सामान्यम्। गुडतण्डुलादिपाकादिष्वेवमेव पाकत्वादि।

---

स्मत्परिभाषयाऽपि सिद्धमित्यर्थः। 'चतुर्विंशतिर्गुणाः' इति मुनिपरिपठितेषु रूपादिषु चतुर्विंशतौ सजातीयव्यावर्तकत्ववैधर्म्यादर्शनेनास्माभिरप्येवं परिभाषितमिति भावः। तन्त्रान्तरे तु नैवम्, सामान्यवान् गुणो गुण इत्येव तत्र निरूपणात्। परमाण्वादीनां गुणत्वमिति तत्प्रवृत्तिनिमित्तकानां शब्दानां गुणशब्दत्वमिति "चतुष्टयी शब्दानां प्रवृत्तिः" इत्युपसंहारेणैव लब्धम्। तेन तन्निमित्तीकृत्य प्रवृत्तानां परमाण्वादिशब्दानां गुणशब्दत्वमित्यनन्तरं शेष इति निरस्तम्।

ननु गुणादीनां प्रति [1]धर्मिवैधर्म्यदर्शनेन नानात्वेन तत्र शक्तौ व्यक्तिवदानन्त्यव्यभिचारापात इत्याह—गुणक्रियेत्यादि। वस्तुत इति प्रत्यभिज्ञया धर्मिभेदग्रहस्य बाधितत्वादाश्रयभेदनिबन्धन एव तत्तद्भेद इत्यर्थः। एकस्येति। स्वच्छद्रव्याहतं चक्षुः प्रतिनिवृत्त्य बिम्बमवलोकयति। [2]तत्र यद्दीर्घवर्तुलत्वादिकं तत्स्वच्छद्रव्यगतमेव, तद्वदत्रापीत्यर्थः। खड्गे दीर्घत्वम्, मुकुरे गुणभेदे नाणुमहद्रूपम्, तैले स्निग्धत्वम्। आलम्बनं प्रतिबिम्बाश्रयः।

जातिरेवेति व्याचष्टे—हिमेत्यादि। परमार्थत इति। सत्येव धर्मिण्याविर्भाव[3]तिरोभावाद्यदर्शनेनाबाधिततारतम्य(18a)प्रतीतेः। शुक्लनीलादिष्वनुगतप्रतीतेर्जातिविषयत्वमित्याह—यद्वशेनेत्यादि। अभिन्नमेकाकारम्। अभिधानं शब्दः। विषयभेदे तदेकरूपता न स्यात्। घटः शुक्ल इत्यादिप्रयोगस्तु मतुब्लोपाद् लक्षणया वा। गुडतण्डुलादिवैधर्म्यप्रदर्शनाय गुडपाके रूपपरावृत्तेस्तण्डुलपाके चैकध्वंसादपरोत्पत्तिरिति नैकता। एवमेवाभिन्नाभिधानप्रत्ययाभ्यां पाचकादि तु वाक्यमेव। तदुक्तम्—

---

१. धर्मिवैधर्मिवैधर्म्य० ख०। २. तत्रैव ख०। ३. तिरोभावदर्शनेन० ख०।

बालवृद्धशुकाद्युदीरितेषु डित्थादिशब्देषु च प्रतिक्षणं भिद्यमानेषु डित्थाद्यर्थेषु वा डित्थत्वाद्यस्तीति सर्वेषां शब्दानां

---

पाकं तु पचिरेवाह कर्तारं प्रत्ययोऽप्यकः।
पाकयुक्तः पुनः कर्ता वाच्यो नैकस्य कस्यचित्॥ इति।

अपचत्यपि प्रयोगः कृतियोग्यतायाः प्रत्ययार्थत्वात्। कृतेः पदार्थैकदेशत्वेऽपि स[1]सम्बन्धिकत्वेन पाकेन सहान्वयः। अन्ये तु पाचकादिपदमेव विशिष्टे शक्त्युपगमात्। अत एव ततो विभक्तिः, वृत्तिमत एव तदुत्पत्तेः। न च वाक्यम्, तदखण्डावबोधनात्। अत एव "अर्थैक्यादेकं वाक्यं साकाङ्क्षं चेद् विभागे स्यात्" इति। "प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः इति पाककृतियोग्यता प्रत्ययार्थस[2]मुदायेनाभिधीयते" इत्याहुः, तेषां मते पाकत्वकृतित्वयोः प्रकारत्वेन जातिशब्दता।

बालवृद्धेत्यादि [3]स्वरवैजात्येन भेदप्रदर्शनाय। तेन भिन्नेषु तेषु संज्ञापदेष्वनुगतप्रतीतिबलाज्जातिसिद्धिरिति। एतेन तत्पदवाच्यत्वेन शक्तावननुगमः, शब्दानां नानात्वादिति निरस्तम्, जात्या तेषामनुगमात्। शब्दगतजातेरभिधानमफलमित्यपि परास्तम्, तस्या एव परम्परासबन्धेन शक्यत्वात्। धर्मिगतजातिपुरस्कारेणैव धर्मिणि शक्तिरिति मतमाह—प्रतिक्षणमित्यादि। स्थूलकालोपलक्षणमेतत्। भिद्यमानेषु तथोपलभ्यमानेषु कालभेदेन स्थूल-ह्रस्वत्वोपलम्भाद् भेदप्रतीतेः प्रमात्वम्, परिमाणानां यावद्द्रव्यभावित्वनियमात्। तत्र स एवायं डित्थ इति प्रत्यभिज्ञाया धर्मिबाधे जाति विषयत्वेन तद्गतजातिसिद्धौ तस्या एव डित्थपदशक्यतेति भावः। चकारः पूर्वोक्तसमुच्चयार्थः। वाकारस्तु शब्दार्थगतजात्योर्वादिभेदेन विकल्पार्थः। केचित्तु इवार्थो वाशब्दः (शब्द) शब्दानन्तरं योज्यः, शब्देष्विवार्थेषु जातिसिद्धिरित्याहुः, तन्न; अर्थजातिवच्छब्दजातेरपि साध्यत्वेनानुपमानत्वात्, प्रसिद्धस्यैव तत्त्वात्। प्रसिद्धस्येहानुवादमात्रमिति चेत्, अर्थजातेरपि तथात्वेन सुतरामुपमानोपमेयभावानुपपत्तेः, यथाश्रुतेनैवोपपत्तौ व्यत्ययकल्पनानौचित्याच्च। यच्च तैरुक्तं सामान्यसङ्कलितेष्वर्थेषु सामान्यसङ्कलितैः (18b) शब्दै[4]: सह सम्बन्ध-

---

१. ससम्बन्धिकत्वे ख०। २. समुदायो ख०।
३. स्वरवैजात्येनाभेद० ख०। ४. शब्दैः नास्ति ख०।

जातिरेव प्रवृत्तिनिमित्तमित्यन्ये। तद्वानपोहो वा शब्दार्थः कैश्चिदुक्त इति ग्रन्थगौरवभयात् प्रकृतानुपयोगाच्च न दर्शितम्।

**स मुख्योऽर्थस्तत्र मुख्यो व्यापारोऽस्याभिधोच्यते॥८॥**

स इति साक्षात् संकेतितः। अस्येति शब्दस्य।

---

परिच्छेद इत्येतत्परोऽयं ग्रन्थ इति तदप्यसत्; जातिशक्तौ व्यक्त्यनु-[1]गमस्यानुकूलत्वात्। उपसंहरति—सर्वेषामित्यादि। अन्ये मीमांसकाः। आकाशपदात्तु निर्विकल्पकस्वरूपमात्रोपस्थितेः। पदात् सविकल्पकं तूत्सर्गत[2] एव, एकव्यक्तिकत्वाच्च नानन्त्यव्यभिचारौ। न च शब्दाश्रयत्वेन शक्तिः, आकाशं शब्दाश्रय इति प्रयोगानुपपत्तेः। तद्वान् जातिमान्। न चानन्त्यम्, सामान्यलक्षणप्रत्यासत्त्योपस्थितासु सर्वासु व्यक्तिषु शक्तेः सुग्रहत्वादिति नैयायिकाः। अत एव "जात्याकृतिव्यक्तयः पदार्थः" इति सूत्रम्। अतद्व्यावृत्तिरपोहपदार्थ इति क्षणभङ्गवादिनः। तन्मते स्थिरस्य सामान्यस्याभावात्। अपोहमात्रेणानुगतव्यवहार इति तत्रैव शक्तिः। गोज्ञानाद् गवि प्रवृत्तिवदश्वेऽपि निवृत्तेरानुभविकत्वात्। स कथं नोक्त इत्यत आह—ग्रन्थेत्यादि। गौरवं बाहुल्यम्। तर्हि जात्यादयोऽपि न वक्तव्या इत्यत आह—प्रकृतेत्यादि। उपाधिशक्तिवादे उपाधेयस्य व्यङ्ग्यत्वं स्यादिति तन्मतानुवादः प्रकृतोपयोगी, उपहितशक्तिस्तु प्रतिकूलप्रायेति न तदनुवादः।

वाचकस्याभिधाघटितत्वेन तामभिधत्ते—स इत्यादि। मुख्येऽर्थे शब्दस्य मुख्यो व्यापारोऽभिधेति लक्षणम्। नानार्थव्यञ्जनावारणाय मुख्य इति। मुखे आदौ साधुर्मुख्यः प्रथमप्रत्यायकः। सा च न तथा, अभिधया व्यवधानात्। व्यापारो बोद्ध्यबोधकत्वाख्यः[3] सम्बन्धः। अपभ्रंशवारणाय तत्रेति। तत्र साक्षात् सङ्केताभावस्य[4] दर्शितत्वात्। अत्र पदज्ञानात् सम्बन्धस्मरणम्। ततः सम्बन्धिनोऽर्थस्योपस्थितिरिति व्यापारीभूतज्ञानविषयत्वेन सम्बन्धस्य व्यापारता, करणज्ञानविषयत्वेन पदस्य कारणतावत्[5]। एतेन पदार्थोपस्थितिरेव व्यापारः। सैवाभिधा,

---

१. व्यक्त्यननुगमस्य ख०; व्यक्त्यननुगुणत्वात् ङ०।

२. उत्सर्ग एव ख०।     ३. बोधाख्यः ख०।     ४. सङ्केतिता ख०।

५. करणता ख०।

**मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात् ।**
**अन्योऽर्थो लक्ष्यते यत् सा लक्षणारोपिताक्रिया ॥ ९ ॥**

तस्या एव पदजन्यत्वे सति पदजन्यवाक्यार्थधीजनकत्वादिति निरस्तम् । पदार्थोपस्थितिहेतुत्वेनैव[1] व्यापारतासिद्धेः सम्बन्धिस्मरणस्य सम्बन्धिज्ञानसाध्यत्वात् सम्बन्धमात्रे व्यापारशब्द इत्यन्ये । केचित्तु मुख्योऽभिधेति च नामद्वयमित्याहुः, तन्न; शाब्दव्यञ्जनायां प्रसङ्गस्य दर्शितत्वात् ।

एवं वाचकानन्तरं लाक्षणिके निरूपयितव्ये तदुपाधिं लक्षणां लक्षयति—मुख्यार्थबाध इत्यादि । आरोपिताक्रिया लक्षणा, क्रिया शब्दव्यापारः[2] । आरोपिता मुख्यार्थप्रतीतिव्यवहितप्रतीतिकार्थनिष्ठा । शब्दव्यञ्जनानिरसनाय मुख्यार्थबाध इति । तात्पर्यविषयान्वये मुख्यार्थता- ( 19a ) वच्छेदकप्रकारेण मुख्यार्थस्य प्रतियोगिताविरहः । न तु मुख्यार्थान्वयानुपपत्तिमात्रम् , अजहत्स्वार्थायामव्याप्तेः । तत्र 'छत्रिणो गच्छन्ति' इत्यादौ छत्रिगमनस्यानुपपत्त्यभावात् । किन्तु छत्रितदितरगमने विवक्षिते छत्रित्वेन छत्रिणोऽनुप्रवेशादेकसार्थवाहित्वेनैवान्वयित्वात् । असम्बन्धिलक्षणेऽतिप्रसङ्गात् तद्योग इति सम्प्रदायः, तन्न; विचारासहत्वात् । तथा हि तात्पर्यानुपपत्तौ लक्षणाया आवश्यकत्वेन यथाकथञ्चित् सम्बन्धस्य सुवचत्वात्, तदभावे तु मुख्यार्थबाधविरहेणैव लक्षणाया अप्रसङ्गात् । वस्तुतस्तु योगपदं प्रमाणान्तरानुत्थापकसम्बन्धपरम् । तेन धूमपदाद् व्याप्तिसम्बन्धेन वह्निस्मरणे न प्रसङ्गः, तस्यानुमानोत्थापकत्वात् । हेतुं विना लक्षणेऽतिप्रसङ्ग इति । रूढित इत्यादि । अथ विकल्पे रूढिः प्रसिद्धिः प्रयोगप्रवाहः । प्रयोजनादिति । प्रयोजनमुद्दिश्य ल्यब्लोपे पञ्चमी । नन्वेवं हेतुद्वैधेऽननुगम इत्यत्र मिश्रा अन्यतरत्वेनानुगममाहुः, तन्न; इतरभेदसाधने वैयर्थ्यापत्तेः । वस्तुतस्तु सिषाधयिषाविरह[3]सहकृतसिद्ध्यभावस्य पक्षतालक्षण इव रूढ्यभावसहकृतप्रयोजनाभावाभावस्येह लक्षणेऽनुप्रवेशान्नाननुगमः ।

[4]लक्षणापदप्रयोगं दर्शयति—अन्योऽर्थ इत्यादि । लक्ष्यत इतीनन्तात्

---

१. व्यापारस्य ख० । २. क्रियाशब्देन व्यवहारः ङ० ।
३. विरहकृत ख० । ४. तल्लक्षणोपयोगं ख० ।

'कर्मणि कुशलः' इत्यादौ दर्भग्रहणाद्ययोगात्, 'गङ्गायां घोषः' इत्यादौ च गङ्गादीनां घोषाद्याधारत्वासम्भवान्मुख्यार्थस्य बाधे विवेचकत्वादौ समीप्यादौ च सम्बन्धे रूढितः प्रसिद्धेः, तथा

---

कर्माख्यातम्। यदिति क्रियाविशेषणम्। इनर्थो[1] हेतुव्यापारः, हेतुश्च शब्द एवेति। अन्यार्थप्रतीतिहेतुः शब्दव्यापारः। सैवारोपिता क्रिया लक्षणेत्यर्थः। वृत्तिस्मरणं क्रिया, सैव व्यापारः, तत्रैव पदं करणम्, क्रियाया अयोगव्यवच्छेदेन सम्बन्धिनः करणत्वात्। अत्र प्राञ्चः—"अन्यार्थप्रतीतिर्लक्षणा। इयञ्च वृत्तिर्मुख्यार्थनिष्ठा, बाधितेन तेन सम्बन्धि[2]बोधनात्। न तु पदे, तस्य लक्ष्येण सह सम्बन्धाभावात्, असम्बन्धलक्षणेऽतिप्रसङ्गात्। शब्दे त्वारोप्यते, तद्बोधितमुख्यार्थस्य लक्षणात्वादित्याह—आरोपिता" इत्याहुः, तन्न; शब्दभेदनिरूपणे तद्वैधर्म्यस्यैवाकाङ्क्षितत्वादारोपेण वस्त्वसिद्धेः, "तद्भूर्लाक्षणिकः शब्दः" इति वक्ष्यमाणविरोधाच्च। स्वशक्यसम्बन्धित्वसम्बन्धेन शब्दगतत्वमपीति चेदेवं वृत्तेः पदवृत्ति[3]ध्रौव्ये अलमर्थगतत्वोपगमेन। किञ्चैवं पदाद्विभक्त्यनुपपत्तेः। प्रत्ययस्य प्रकृतिवृत्त्युपस्थापितस्वार्थबोधकत्वव्युत्पत्तेः।

केचित्तु "रूढिप्रयोजने भेदकधर्मावेव, न स्वरूपनिर्वाहके; प्रत्येकं हेतुत्वेऽननुगमात्, समुदायेनासम्भवात्" इत्याहुः, तन्न; अनुगमस्य (19b) दर्शितत्वात्, लक्षणाभासेऽतिप्रसङ्गाच्च।

तत्र रूढिप्रयोजनयोः क्रमेण लक्ष्यद्वयमाह—कर्मणीत्यादि, गङ्गायामित्यादि च। कुशं दर्भं लाति गृह्णातीति 'आतः कः' इति यौगिकार्थो मुख्यः, विवक्षितदक्षान्वये तद्योगित्वविरहाद् मुख्यार्थबाधः। एवं सर्वत्रावधेयम्। गङ्गादीनामित्यादि। 'निर्विशेषं न सामान्यम्' इति यावद्विशेषाणां सामान्यनिर्वाहकतया अधिकरणत्वासम्भवबाधयोर्हेतुहेतुमद्भावः। कुशग्राहिणः सतोऽग्रहणम्, असतः परित्याग इति विवेचनीयम्। सामीप्यादावित्येव पाठः। आदिपदाभावे च सामीप्य इत्युपलक्षणम्। ननु दक्षपदप्रयोगक्षमत्वे कथं लाक्षणिकप्रयोग इत्याह—रूढित इत्यादि। प्रसिद्धिः प्रयोगनिर्वा[4]हः। तेन मुख्यवत्प्रसिद्धस्य प्रयोगे पर्यनुयोगात्

---

१. इणि णिजन्तस्य कातन्त्रिया संज्ञा।　　२. सम्बन्ध ख०।

३. पदवृत्तित्वसिद्धौ ख०, ङ०।　　४. प्रवाहः ख०।

'गङ्गातटे घोषः' इत्यादेः प्रयोगाद् येषां न तथा प्रतिपत्तिः, तेषां पावनत्वादीनां धर्माणां तथा प्रतिपादनात्मनः प्रयोजनाच्च मुख्येनामुख्योऽर्थो लक्ष्यते यत् स आरोपितः शब्दव्यापारः सान्तरार्थनिष्ठो लक्षणा।

---

तथेत्यादि। तथेति लक्षणसमन्वयेन क्रियासाहित्यसमुच्चये। तथा प्रतिपादनात्मन इति, अन्यत्रान्यशब्दप्रयोगस्तद्धर्मप्राप्त्यर्थं इति गङ्गागतशैत्यपावनत्वादिप्रतिपत्तये गङ्गापदप्रयोगः। सा च लक्षणान्तरालिकप्रयोजनीभूतगङ्गातटतादात्म्यप्रतीतिसाध्येति शैत्यपावनत्वादिलक्षणायाः प्रयोजनम्। मुख्यप्रयोगे तु भेदावगमेनैवमित्यर्थः। तथेति गङ्गायामिवेत्यर्थः। मुख्येन बाधप्रतियोगिमुख्यार्थोपस्थापनद्वाराऽमुख्यो व्यवधानेन प्रत्येयः। क्रियापदार्थः शब्दव्यापार इति। एतेन लक्षणाया अर्थनिष्ठत्वमपास्तम्। व्यवधानेन प्रत्येयत्वं सान्तरत्वम्।

केचित्तु "कुशलपदे कथं लक्षणा? दक्षत्वस्य प्रवृत्तिनिमित्तत्वात्। व्याकरणव्युत्पत्तेस्तु साधुत्वार्थकत्वात्। पङ्कजमण्डपतैलपदे[1]ष्वतिव्याप्त्यसम्भवाव्याप्तिसम्भवेन योगस्याप्रयोजकत्वात्। अत एव 'प्रत्यक्षेण विसंवादो यत्रार्थस्य विलोक्यते। स्व[2]रसंस्कारसिद्ध्यर्था तत्र व्याकरणस्मृतिः' इत्युक्तम्। अन्यथा 'गौः शेते' इत्यत्र गोपदे लक्षणाप्रसङ्गात्। गमेर्डोः प्रत्ययेन गमनकर्तरि व्युत्पादनात्, शयनकाले तद्बाधात्। तेन 'कलिङ्गः साहसिकः' इत्युदाहार्यम्" इत्याहुः, तन्न; प्रतिलक्ष्यं लक्षणविधानेन कृत्स्नव्युत्पत्तेः शक्तिग्राहकत्वात्। न पुनरुणादौ तद्व्युत्पत्तेः, साधुत्वमात्रार्थत्वं शक्तावनुपयोगात्। "उणादयो बहुलम्" (अ० ३।३।१) इत्येकेनैव सूत्रेण मुनिना तत्सूत्रणात्। 'मण्डपं भोजय, कुशलं याजये'त्यादौ मुख्यप्रयोगार्थासम्भवः। मण्डपतैलपदयोस्तु गृह(20a)विशेषसार्षपादिद्रवविषये कुशलपदवल्लक्षणैव पङ्कजपदस्य समुदायपद्मशक्त्या कुमुदादौ धीप्रयोगवारणम्। पङ्कजं कुमुदमित्यत्र पद्मत्वबाधे लक्षणया 'ड-' प्रत्ययोपस्थापितेन पङ्कजनिकर्तृत्वेनान्वयः। न च योगसम्भवे कथं लक्षणा? एकपदोपस्थाप्यत्वान्तरङ्गसम्बन्धपद्मेन सहान्वये निराकाङ्क्षत्वात्। अथ कुमुद एव तात्पर्यात् कथं पद्मेनान्वय इति चेन्न; व्यक्ति-

---

१. पदेष्वतिव्याप्तिसम्भवेन ख०। २. स्वरवत्संस्कार० ख०।

**स्वसिद्धये पराक्षेपः परार्थं स्वसमर्पणम् ।**
**उपादानं लक्षणं चेत्युक्ता शुद्धैव सा द्विधा ॥१०॥**

'कुन्ताः प्रविशन्ति', 'यष्टयः प्रविशन्ति' इत्यादौ कुन्तादिभिरात्मनः प्रवेशसिद्ध्यर्थं स्वसंयोगिनः पुरुषा आक्षिप्यन्ते । तत

---

वचनानां सन्निहितविशेषपरत्वनियमेन पद्म एव तात्पर्यग्रहानन्तरं कुमुदपदश्रवणात् कुमुदतात्पर्यग्रहे तदुपपत्तये 'ड'प्रत्यये लक्षणा, स्थलपद्मं तु विजातीयमेवेति न तत्र पङ्कजपदप्रयोगः । प्रयोगश्चेल्लक्षणयैवेति । अन्ये तु कुशलमण्डपादिपदेषु न लक्षणा, मुख्यार्थबाधाद्यनुसन्धानं विनैव रूढ्या झटिति दक्षाद्युपस्थितेरिति वदन्ति, तन्न; एवं निरूढलक्षणाया निर्विषयत्वापत्तेः । किन्तु प्रसिद्धिवशाद् द्रागेव मुख्यार्थबाधादेरवतारः । धूमादिदर्शनाद् वह्न्याद्यनुमितौ व्युत्पत्तिबलाद् व्याप्त्यादेरिवेति ।

व्यङ्ग्यस्य गूढागूढत्वविवेकहेतुकं लक्षणाविवेकमाह—स्वसिद्धय इत्यादि । स्वस्यात्मीयस्यार्थस्य शक्यस्य सिद्धये अन्वयप्रतियोगित्वाय परस्य शब्दान्तरवाच्यस्याक्षेपस्तद्वाचकशब्दं[1] विना तदुपस्थापनमाक्षेपस्य तथैव प्रसिद्धेः, तेन लक्ष्यवाचकशब्दात्तदुपस्थितौ नास्या विषयः । कुन्ताः प्रविशन्तीत्यत्र कुन्तपदेन कुन्तोपस्थापनात् । एवंविवक्षायां फलं वक्ष्यामः—परार्थं परप्रतीतये, स्वस्यात्मीयस्य समर्पणमुपस्थापनमात्रम्, नान्वयप्रवेशः । प्रयोजनापरपर्यायेण स्वपदेन फलत्वावगतिः । परवाचकशब्दानुपादान एव परप्रतीतौ स्वसमर्पणस्य फलत्वम्, उपादाने तु तत एव तत्सिद्धेरेतत् फलत्वं न स्यात् । यथा गङ्गायां तटे घोष इत्यत्र तटपदात् तटोपस्थितौ अन्यथा सिद्धत्वात् । उपादनं स्वार्थापरित्यागः, लक्षणमुपलक्षणम्, इतरपरिचायकत्वमात्रम् । इमे अजहत्स्वार्थजहत्स्वार्थरूपे । इति हेतौ । आक्षेपार्थाभ्यां स्वरूपनिरूपणाद् द्विधा, न तु भेदान्तरवती । ननु शुद्धाशुद्धभेदेन चातुर्विध्ये कथं द्वैविध्यमित्याह—शुद्धैवेति । वृत्तौ विशिष्य विवेचयिष्यामः ।

कुन्ताः प्रविशन्तीत्यादि । कुन्तादिभिः शब्दैः प्रवेशसिद्ध्यर्थं प्रवेशान्वयबोधकत्वाय । स्वस्यात्मीयस्य शक्यस्य कुन्तस्य[2] । संयोगिन इति शक्यसम्बन्धिकथनम् । आक्षिप्यन्ते वाचकशब्द(20b)प्रयोगविरहेण प्रत्याय्यन्ते ।

---

१. वाचकं शब्दं ख० । २. कुन्तस्य नास्ति ख० ।

उपादानेनेयं लक्षणा । 'गौरनुबन्ध्यः' इत्यादौ श्रुतिचोदितमनुबन्धनं कथं मे स्यादिति जात्या व्यक्तिराक्षिप्यते, न तु शब्देनोच्यते, "विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे" इति

---

ततो हेतोरुपादानेन स्वस्यापि ग्रहणेन। अत्र कुन्तसंयोगो लक्ष्यतावच्छेदकम्, तेन रूपेण कुन्तग्राहिणः पुरुषा लक्ष्याः। कुन्तानामतिनिबिडत्वं प्रयोजनम्। ननु शक्यस्य कुन्तस्य किमिति लक्षणीयत्वमिति चेन्न; विशेषणत्वेन तदन्वयाय लक्षणोपयोगात्। न च वृत्तिद्वयोपस्थितयोः कुन्ततत्संयोगिनोर्विशेषणविशेष्यभावः संसर्ग इति वाच्यम्, भेदोपस्थापकविभक्त्यर्थान्तर्भावं विना नामार्थयोर्भेदान्वयस्य स्वरूपायोग्यत्वात्। न च नामद्वयार्थद्वयेऽयं नियमो गौरवात्। किञ्चैवम् 'हरिर्धावति' इत्यत्रेन्द्रसम्बन्धिनोऽश्वस्य धावनान्वयः स्यात्, एकेनैव हरिपदेनाश्वेन्द्रयोरुपस्थितेः। न चेष्टापत्तिः, अन्यथा 'विद्वन्मानस' इत्यत्र मनसि सरोरूपणं न स्यादिति वाच्यम्, तस्याहार्यत्वात्, अभेदबोधत्वाच्च। कृतिवर्तमानत्वयोस्तु[1] न नामार्थत्वम्। अत एवाभिधया जातेः प्रकारान्तरेण व्यक्तेरप्युपस्थितौ तयोर्द्वयोरन्वये स्वरूपायोग्यत्वान्नैयायिकानां विशिष्टशक्तिवादः। छत्रिणो यान्तीत्यत्र विवक्षिते छत्रितदितरोभयगमने[2] छत्रीतराक्षेपं विना न छत्रिणामन्वय इत्युपादानत्वमविरुद्धम्। अत्राभिहितायां जातौ तन्मात्रस्यान्वयानङ्गत्वेन लक्षणया व्यक्तिप्रत्यायनम्। सा चोपादानरूपैव। 'गामानय' इत्यादौ गोत्वादीनां प्रकारत्वादिति मण्डनाचार्यमतम्। तदुक्तम्—

जातावस्तित्वनास्तित्वे नहि कश्चिद् विवक्षति।
नित्यत्वाल्लक्ष्यमाणाया व्यक्तेस्ते हि विशेषणे॥ इति।

तदनूद्य दूषयति—गौरित्यादि। श्रूयत इति श्रुतिः शब्दः समानाधिकरणात्मकः। कथं मे स्यादित्युत्प्रेक्षणम्, जात्या तद्द्वारेणाक्षिप्यते झटित्युपस्थाप्यते, तेन स्वसिद्ध्युद्देश्यकपराक्षेप[3]लक्षणसमन्वयसूचनम्। अभिधां निरस्यति—न त्विति। उच्यते अभिधया प्रत्याय्यते। विशेष्यं व्यवच्छेद्यम्। न गच्छेत्, न व्याप्रियेत। विशेषणे व्यवच्छेदके जातौ क्षीणशक्तिः। "नागृहीतविशेषणा

---

१. वृत्तवर्तमानयोस्तु क०। २. तदितरगमने ख०। ३. पराक्षेपक ख०।

न्यायादित्युपादानलक्षणा तु नोदाहर्तव्या। न ह्यत्र प्रयोजनमस्ति, न वा रूढिरियम्। व्यक्त्यविनाभावित्वात्तु जात्या व्यक्तिराक्षिप्यते। यथा क्रियतामित्यत्र कर्ता, कुर्वित्यत्र कर्म, प्रविश पिण्डीमित्यादौ गृहं भक्षयेत्यादि च।

---

बुद्धिर्विशेष्य उपजायते'' इति विशेषणं प्रत्याय्य विरमादिति 'विशेष्यं नाभिधा' इत्यादौ यो न्यायो युक्तिः "शब्दबुद्धिकर्मणां विरम्य व्यापाराभावात्" इत्यादिरूपा, ततः शब्देन नोच्यत इति योजना। अन्यथा 'विशेष्यं नाभिधा' इत्यादेरर्थस्याभिधाया जातिमात्रगामित्वस्य साध्यत्वेन हेतुत्वानुपपत्तेः। एतावता मण्डनमतानुवादः। दूषणमाह—इत्युपादानेत्यादि। नोदाहर्तव्या लक्ष्यतया न दर्शयितव्या। हेतुमाह–न हीत्यादि। प्रयोजनस्यानुपलब्धिबाधादभावः, न चान्वयबाधः, तथोपपादकविरहेण तदभावात्। तथाहि प्रथममभिधया जातेरुपस्थितिस्ततस्तद्बाधादिज्ञानम्, ततो लक्षणया व्यक्तेरिति व्यक्तिज्ञानदशायां जातेरज्ञानात् कथं विशिष्टे क्रियाद्यन्वयः? एवमेव युगपदुभयवृत्तिविरोधः। एवञ्च प्रयोजनाभावमुखेनोपादानस्वरूपप्रच्यवो दर्शितः।

न वेत्यादि। देवदत्तादिष्वाधुनिकसंज्ञापदेषु [1]रूढ्यभावेन लक्षणाया अप्रवृत्तेः; व्यक्तिमात्रे न लक्षणेति भावः। दूषणान्तरमाह—व्यक्त्येत्यादि। अविनाभावो व्याप्तिः, जात्या हेतुभावेन आक्षिप्यते अनुमाप्यते[2]। जातिर्व्यक्त्याश्रिता जातित्वादित्यनुमितायां व्यक्तावन्यलभ्यत्वेन न लक्षणेत्यर्थः। तुकारो दोषसमुच्चयार्थः। न च व्याप्त्यादिज्ञानस्यानुपलब्धिबाधेन नानुमानमिति वाच्यम्, प्रागेव स[3]र्वेषामवतारात्। अन्यथा निरूढलक्षणाया मुख्यार्थबाधादिज्ञानेऽप्येवं सुवचत्वात्। न चानुमितिव्यवधानेन शब्दप्रामाण्यव्याकोपः, तस्या[4] अपि शब्दपरिकरत्वात्। अनुमानसहकारेण पदेनैव जातिविशिष्टव्यक्तिधीरिति नाशाब्दत्वम्। न च वृत्त्या पदजन्यपदार्थोपस्थितिः शाब्दत्वे तन्त्रम्, वृत्तिविशेषणे गौरवादिति गुरुनयेनोक्तम्। यत्तु मिश्रेणोक्तम्—"जातिव्यक्त्योरभेदाच्च व्यवहारोपयोगितेति भट्टदिशाऽयं ग्रन्थः। जात्या व्यावृत्त्यनुगतरूपया व्यक्तिर्व्यवहार-

---

१. रूढ्यभावेन नास्ति ख०। २. अनुमाप्यते नास्ति ख०।
३. सर्वावतारात् ख०। ४. तस्याप्यनुमानपरि० ख०।

'पीनोऽयं देवदत्तो दिवा न भुङ्क्ते' इत्यत्र च रात्रिभोजनं न लक्ष्यते, श्रुतार्थापत्तेरर्थापत्तेर्वा तस्य विषयत्वात् ।

'गङ्गायां घोषः' इत्यत्र तटस्य घोषाधिकरणत्वसिद्धये गङ्गाशब्दः स्वार्थमर्पयति—इत्येवमादौ लक्षणेनैषा लक्षणा ।

---

भाजनमाक्षिप्यते, झटिति क्रियते । जातिश्च स्वयमेव व्यावृत्त्यनुगमौ विधाय व्यवहारयोग्या भवतीत्यर्थः" इति, तन्न; वक्ष्यमाणक्रियतामित्यादिग्रन्थदृष्टान्तविरोधात् । आश्रयविषयाभ्यां सहकृतेरभेदाभावात् । आक्षेपे दृष्टान्तमाह--यथेत्यादि । कृतिः साश्रया, गुणत्वात् सविषया कृतित्वादित्याक्षेपेण कर्तृकर्म[1]लाभ इति गुरुमतेनार्थाक्षेपः । भट्टमते शब्दाक्षेपमाह—प्रविशेत्यादि । भ[2]क्षयेत्यत्रेति नाकर्मवाचक-क्रियावाचकशब्दस्वरूपाभिधानम्, अशब्दार्थस्य शाब्दान्वयाननुप्रवेशाच्छब्दत्वकल्पनम्[3] । गुरुमते त्वर्थस्यैवान्वयाङ्गत्वान्न[4] कल्पनम्, शब्दकल्पनेऽपि तस्यैवोद्देश्यत्वादिति वादिभेदेन दृष्टान्तभेदः । यत्तु योग्यविशेषाक्षेपाय प्रविशेत्यादिपक्षयोर्भेदमाहुस्तदसत्; पूर्वत्रापि प्रकरणादिसाचिव्येन योग्य(21b)विशेषाक्षेपात् तस्यैवान्वयाङ्गत्वात् । अन्यथाऽक्षेपेऽप्यन्वयानुपपत्तितादवस्थ्यात् । अत एव कर्ता सम्मुखीनः, कर्म प्राकरणिकं कटादीति तैरप्युक्तत्वादिति ।

अन्यलभ्ये न लक्षणेत्यत्र दृष्टान्तमाह—पीन इत्यादि । अत्र यद्यपि पीनत्वदिवाभोजनाभावयोरन्वये न बाधः, तथापि रात्रिभोजनतात्पर्यानुपपत्त्या लक्षणा प्रसक्तेति भावः । दिवा भोजनाभाववतः पीनत्वं रात्रिभोजनं विनाऽनुपपन्नमित्यनुपपत्त्या रात्रिभोजनं कल्प्यत इत्यत्र च भट्टमते रात्रौ भुङ्क्त इति शब्दः कल्प्यते । गुरुमते रात्रिभोजनमर्थमात्रमित्याह-श्रुतार्थापत्तेरित्यादि । श्रुतेन शब्देनाश्रुतार्थस्यापत्तिः श्रुतार्थापत्तिः, तस्य रात्रिभोजनस्य ।

लक्षणलक्षणामुदाहरति—गङ्गायामित्यादि । स्वार्थं शक्यम् अर्पयति लक्षणेनोपलक्षणेनेतरपरिचायकत्वेन । यथोत्तृणत्वस्य काकः ।

---

१. मात्र इति ख० । २. भक्षयतीत्यत्र ख० ।
३. शब्दकल्पनम् ख० । ४. तत्कल्पनम् ख० ।

उभयरूपा चेयं शुद्धा, उपचारेणामिश्रितत्वात् ।

अनयोर्भेदयोर्लक्ष्यस्य लक्षकस्य च न भेदरूपं ताटस्थ्यम् ; तटादीनां गङ्गादिशब्दैः प्रतिपादने तत्त्वप्रतिपत्तौ हि प्रतिपिपादयिषितप्रयोजनसम्प्रत्ययः ।

---

शुद्धैवेति व्याचष्टे—उभयरूपेत्यादि । शुद्धा [1]लक्ष्यवाचकपदासमभिव्याहृतलक्षकपदनिष्ठा । [2]लक्ष्यलक्षकोपस्थापकपदद्वयार्थद्वयाभेदप्रतीतिरुपचारः, तेनामिश्रितत्वं तज्जनकत्वम् । स च कुन्ताः पुरुषाः प्रविशन्ति, गङ्गायास्तटे घोष इत्यत्रैव लब्धप्रसरः, न[3] कुन्तकुन्तवत्पुरुषयोः ग[4]ङ्गागङ्गासम्बन्धितटयोश्चाभेदप्रत्ययात् । न पुनः कुन्ताः प्रविशन्ति, गङ्गायां घोष इत्यनयोः ।

कुत इत्याह—अनयोरिति । दर्शितोपादानलक्षणालक्षणलक्षणयोरित्यर्थः । लक्ष्यस्य तटादेर्लक्षकस्य गङ्गादेस्ताटस्थ्यं भेदाभेदौदासीन्यम् । कुन्ताः पुरुषा इत्यत्र कुन्तपुरुषयोर्न भेदस्य प्रतीतिः, भेदोपस्थापकविभक्त्यभावात् ; नाप्यभेदस्य, योग्यताविरहात् ।

तद्विशेषयति—भेदरूपं भिद्यते अनेनेति भेदो वैधर्म्यं तस्य रूपणं ज्ञानं यत्र कुन्तत्वस्य पुरुषत्वस्य च वैधर्म्यमात्रस्य प्रतीतिः तदत्र नास्ति । पुरुषतटपदप्रयोगाभावेन लक्ष्यलक्षकयोर्वैधर्म्यग्रहात्[5] । अत एवोपादानलक्षणलक्षणयोराक्षेपपदार्थपदाभ्यां लक्ष्यवाचकपदसमभिव्याहारः पर्युदस्तः । किमित्येवमित्याह—तटादीनामित्यादि । तटादीत्यत्र गङ्गादीत्यत्र चादिपदाभ्यां कुन्तसंयोगि कुन्तपदग्रहणम् । गङ्गादिपदैः, न तु स्वपदैः । तत्त्वं तटादित्वम्, तटादिपदोपादाने तु न तटत्वादिना, किन्तु गङ्गासम्बन्धित्वादिनैव । ततः[6] सम्बन्धधर्मविशिष्टलक्षणायां तदतिशय इत्यस्यैव प्र[7]योजनकत्वं स्यात् । यथा 'रामोऽस्मि' इत्यादौ दुःखसहिष्णुत्वेन रामे लक्ष्ये दुःखसहनातिशयस्य । तच्च न प्रकृतम्, अपि तु गङ्गादिगतपावनत्वाद्येवेत्याह—प्रतिपिपादयिषितेति । न च तटत्वादिना लक्षणायामप्यतिशयः फलमिति वाच्यम्, जातीनामुत्कर्षापकर्षविरहात् । एतदेवोक्तं

---

१. लक्ष्यवाचकसमभिव्याहृत० ख० । २. लक्ष्यलक्षकपदोपस्थापक० ख० ।
३. न कुन्त नास्ति ख० । ४. गङ्गासम्बन्धिकतटयोः ख० ।
५. वैधर्म्याग्रहात् ख० । ६. ततः असम्बन्धधर्म० ख०; ततश्च ङ०, च० ।
७. प्रयोजकत्वं ख० ।

गङ्गासम्बन्धमात्रप्रतीतौ तु गङ्गातटे घोष इति मुख्यशब्दाभिधानाल्लक्षणायाः को भेदः ?

---

धर्मिणि[1] लक्ष्ये तदतिशयः फलमिति। धर्मिणि वस्तुगत्या, तद्धर्माश्रये जातिपुरस्कारेणेत्यर्थः। एवं 'कुन्ताः प्रविशन्ति' इत्यत्र लक्षितपुरुषप्रवेशककुन्तप्रवेशे कुन्तानामतिनिबिडत्वं विवक्षितप्रयोजनम्, पुरुषपदोपादाने तु संयोगित्वलक्षणायां न[2] तत् प्रतीयेत, संयोगवद्[3]दार्ढ्यस्यैव तदतिशयस्य पूर्ववत् प्रतीतिः स्यादिति सर्वत्रावधेयम्।

नन्वेवं सम्बन्धिलक्षणायामपि शक्यगतधर्माः फलमन्यत्रान्यशब्दप्रयोगस्य तद्धर्मप्राप्त्यर्थत्वादित्याह—गङ्गासम्बन्धेत्यादि। भेदप्रतीतावपि तदवगमे मु[4]ख्यप्रयोगात् तत्सिद्धौ लक्षणाया निष्प्रयोजनत्वं स्यात्। मुख्यप्रयोगात् प्रत्याय्यप्रयोजनेनैव तस्यास्तद्वत्त्वात्। तदाह को भेद इति फलभेदाभावादित्यर्थः। अन्यत्रेत्यादावन्यत्र गृहीतभेदे भेदाग्रहः, धर्मिणि लक्षणायामेव, न तु धर्मविशिष्ट[5]लक्षणायामित्युक्तप्रायम्। धर्मविशिष्टे लक्ष्ये लक्ष्यस्य धर्मस्यैव व्यङ्ग्यत्वम्, धर्मिणि तु न तथेति गृहीतागृहीतग्राहकत्वेन व्यञ्जनयोर्भेदः। न चैवं गृहीतग्राहकत्वे [6]व्यञ्जनाऽनर्थक्यम्, अतिशयतावच्छेदकावच्छेदेनागृहीतत्वात्। एवञ्च फलवैजात्यस्यानुभविकत्वेन शुद्धाशुद्धविवेकस्य न्याय्यत्वमिति भावः। नञ्भावपाठे तु तटस्थत्वमितरान्वयघटकत्वेन विवक्षितत्वम्, न तु स्वतः। एवं तटस्थत्वमुपादाने लक्ष्यस्य कुन्तसंयोगिनस्तद्द्वारैव, विवक्षितकुन्तप्रवेशान्वयात्। लक्षणे तु लक्षकस्य गङ्गादेर्विवक्षिततटान्वये, तस्योपलक्षकत्वात्। तदाह-लक्ष्यस्य लक्षकस्य चेति। भेदरूपं सारोपाध्यवसानाभ्यां सकाशादनयोर्वैधर्म्यस्वरूपम्। तत्र हि गङ्गायां तटे घोषः, कुन्ताः पुरुषाः प्रविशन्तीत्यत्र गङ्गागङ्गासम्बन्धितटयोः कुन्तवत्पुरुषयोरभेदान्वये विवक्षिते उक्ततादस्थ्यविरहात्। प्रतियोगित्वेन तदवच्छेदकत्वेन च लक्ष्यलक्षकयोरन्वयित्वेना[7]न्योन्यघटकत्वेनाविवक्षणादिति। ग्रन्थान्तरे तु नञ्स्थला-

---

१. धर्माऽधर्मे च ख० । २. न नास्ति ख० ।

३. संयोगादित्यस्यैव० च०, दार्ढ्यस्यैतदतिशयस्य ङ० ।

४. मुख्यप्रयोगः ख० । ५. लक्षणाया इत्यु० ख० ।

६. व्यञ्जनमनर्थकं ख०, ङ० । ७. अन्यघटकत्वेन ख० ।

**सारोपाऽन्या तु यत्रोक्तौ विषयी विषयस्तथा ।**

आरोप्यमाण आरोपविषयश्च यत्रानपह्नुतभेदौ सामानाधिकरण्येन निर्दिश्येते, सा लक्षणा सारोपा ।

**विषय्यन्तःकृतेऽन्यस्मिन् सा स्यात् साध्यवसानिका ॥ ११ ॥**

विषयिणाऽऽरोप्यमाणेनान्तःकृते निगीर्णे, अन्यस्मिन्नारोपविषये सति साध्यवसाना स्यात् ।

---

विशिष्टतयैव व्याख्येयमिति । एतेन शुद्धाशुद्धयोः प्रयोजनवैयर्थ्येऽपि[1] यद्येवकारेण शुद्धत्वव्यवच्छेदनम्, तत्प्राचीनप्रणयनानुरोधेनेति निरस्तम्, फलवैजात्यस्य दर्शितत्वात् ।

लक्षणाया भेदान्तरमाह—सारोपेत्यादि । सारोपा तु लक्षणा अन्या । पूर्वभेदद्वयाद् भेदकमाह—यत्र समभिव्याहारे ( 22b ) विषयी आरोप्यमाणः, विषयः आरोपाधिकरणम् । 'गौर्वाहीकः' इत्यादिषु गवादिर्वाहीकादिषु । उक्तौ स्वस्वपदेनोपात्तौ । वैधर्म्येण युगपदुपस्थितयोः प्रकृतस्याप्रकृततादात्म्यप्रतीतिरारोपस्तत्कारिणे गोतादात्म्यप्रतीतित एव वाहीकगतधर्मावगमात् । एवमुत्तरत्रापि ।

अनपह्नुतभेदौ गृहीतवैधर्म्यौ । सामानाधिकरण्येन[2] निर्दिश्येते समानविभक्तिकपदाभ्यामुपस्थाप्येते इत्यर्थः । नञ्[3]भावपाठेऽगृहीतविद्यमानान्योन्याभावौ । तत्र हेतुः सामानाधिकरण्येनेति भेदोपस्थापकविभक्त्यभावादित्यर्थः ।

साध्यवसानामाह—विषय्यन्तःकृत इति । अप्रकृतस्वरूपेणाच्छादितस्वरूपे अप्रकृतवैधर्म्योपस्थितस्य प्रकृतस्याप्रकृततादात्म्यप्रतीतिरध्यवसानम् ।

अन्यस्मिन्नारोपविषय इति । प्रकरणबलादन्यपदेनारोपविषयाभिधानम् । उपस्थितयोर्द्वयोरेकस्य विशिष्योपादानेऽन्यपदस्य विषयान्तरपरिग्राहकत्वात् ।

---

१. नैवर्थ्येऽपि । २. हि निर्दिश्येते ख० ।

३. यत्रापह्नुतभेदौ इति पाठ इति यावत् ।

**भेदाविमौ च सादृश्यात् सम्बन्धान्तरतस्तथा ।**
**गौणौ शुद्धौ च विज्ञेयौ**

इमावारोपाध्यवसानरूपौ सादृश्यहेतू भेदौ 'गौर्वाहीकः' इत्यत्र 'गौरयम्' इत्यत्र च ।

अत्र हि स्वार्थसहचारिणो गुणा जाड्यमान्द्यादयो लक्ष्यमाणा अपि गोशब्दस्य परार्थाभिधाने प्रवृत्तिनिमित्तत्वमुप-

---

गौणशब्दार्थयोस्तु पृथग्[1] गणनं गौण्या लक्षणान्तर्भावादित्याह— भेदाविमावित्यादि । सादृश्याद् गौणौ, सम्बन्धान्तरतः शुद्धावित्यन्वयः । भेदौ विशेषौ, आरोपाध्यवसानरूपे वैधर्म्ये ययोरिति विग्रहः ।

सूत्रे पञ्चम्यर्थो हेतुत्वम् । तदाह—सादृश्यहेतू इति । मुख्यार्थसम्बन्धस्य लक्षणायाः स्वरूपनिर्वाहकत्वेन हेतुत्वम् । 'गौर्वाहीकः' इत्यादि । अत्र गोसादृश्येन वाहीको लक्ष्यते । अनन्तरं गोवाहीकयोर्विद्यमानभेदस्थगनम्, ततस्तादात्म्यावगमः, ततो गोनिष्ठजाड्यादिकं वाहीके क्रमशो व्यञ्जनया प्रत्याय्यते । लक्ष्यवाचकपदासमभिव्याहारादुपादानलक्षणलक्षणयोस्तु भेदस्थगनविलम्ब[2] इति व्याख्यातमेव । अयमिति वाहीकविषयप्रकटनपरम् । अतिसादृश्यादिदन्तया निर्देशो न वाहीकत्वेन । अत एव गौरित्यनन्तरं विस्मयार्थो[3] मैथिलपुस्तकेष्वेवकारो दृश्यते । अत एव च[4] गोतादात्म्येन वाहीकस्य स्वरूपावच्छादनम् । तच्च वाहीकत्वेन प्रयोगप्रतिबन्धनम् । अत्र मुख्यार्थबाधतः सम्बन्धरूढिप्रयोजनानां सम्भवेन सम्भवति लक्षणात्वे गौणाख्यवृत्त्यन्तरे प्रमाणाभावः[5] । न च मुख्येनासम्बन्धात् कथं लक्षणेति वाच्यम्; सजातीयगुणवत्त्वस्यैव तत्त्वाद्, अन्यथा तवापि गौणी न स्यात् । किन्तु स्वसमवेतं समवेतसमवायिसमवायित्वमिति सम्बन्ध( 23a )परम्परा न साक्षादित्यप्रयोजकमेतत् ।

गौण्या लक्षणान्तर्भावे वादिभेदेन मतविकल्पमाह—अत्र हीति । स्वार्थो गोत्वम् । सहचारिणः समानाधिकरणाः, लक्ष्यमाणा अपीति ।

---

१. पृथगादानं ख० । २. बिलम्बनमिति ख० ।
३. निश्चयार्थः क० । ४. च नास्ति ख० ।
५. प्रमाणाभावात् ख० ।

यान्तीति केचित्। स्वार्थसहचारिगुणाभेदेन परार्थगता गुणा एव लक्ष्यन्ते, न तु परार्थोऽभिधीयत इत्यन्ये। साधारणगुणाश्रयत्वेन परार्थ एव लक्ष्यत इत्यपरे।

उक्तञ्चान्यत्र—

अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते।
लक्ष्यमाणगुणैर्योगाद् वृत्तेरिष्टा तु गौणता ॥ इति।
( तं० वा० ३।४।१२ )

---

ता[1]वता न विश्रान्तिः, वृत्त्यन्तरेणाभिधया धर्मिबोधनात्। परार्थाभिधाने अभिधया वाहीकप्रत्यायने। एतत्तु न समीचीनम्; गोशब्दस्य वाहीके सङ्केतविरहेणाशक्यत्वादित्यस्वरसात् केचिदित्युक्तम्। स्वार्थेति। अभेदेन साजात्येन। गुणा एव, न तु गुणिनः, तेषां वाहीकादिशब्दादेव लब्धेः। तेनान्यलभ्यत्वान्नाभिधापि। तदाह—न त्विति। अन्य इति। अयमपि पक्षो न साधुः, लक्ष्यमाणगुणानां वाहीकेन स[2]हान्वयापत्तेः, अभेदस्यायोग्यत्वात्। भेदोपस्थापकविभक्तिं विना नामार्थयोर्भेदान्वयस्य स्वरूपायोग्यत्वात्। साधारणः सजातीयः, परार्थ एव, न तु तद्गता जाड्यादयोऽपि, जडो वाहीक इत्यप्रतीतेः सादृश्येनैवावगमात्। सादृश्यञ्च भूयोधर्मवत्त्वमिति। यत् पुनरेवकारेण जाड्यादिव्यवच्छेदनम्, तस्य व्यञ्जनाख्यवृत्त्यन्तरगम्यत्वादित्युक्तम् तदसत्; जाड्यादिविशिष्टस्य लक्ष्यत्वेऽपि योग्यतया वाहीकनिष्ठानामेव तेषां लक्षणयाऽवगमेन गवादिनिष्ठानां व्यङ्ग्यताऽनपायात्। न परे अपरे साधुमतावलम्बनेनास्मत्सगोत्रा इत्यर्थः।

गौण्या वृ[3]त्त्यन्तरवादिनां मतमाह—उक्तं चान्यत्रेति। अविनाभूतः साक्षात् सम्बद्धः। प्रतीतिरिति करणे क्तिन्। सम्प्रदायमते लक्ष्यार्थोपस्थितिर्वा। लक्ष्यमाणगुणैरिति। तेषां मते जाड्यादिविशिष्टस्यैव लक्ष्यत्वात्। गुणसाजात्याख्यपरम्परासम्बन्धेन वृत्तिर्गौणता इष्टेत्यन्वयः। गुणयोगादियं गौणी वृत्तिः।

---

१. न तावता ख०। २. सहानन्वयापत्तेः ख०।
३. वृत्त्यन्तरत्ववादिमतं ख०।

अविनाभावोऽत्र सम्बन्धमात्रम्, न तु नान्तरीयकत्वम्। तत्त्वे हि 'मञ्चाः क्रोशन्ति' इत्यादौ न लक्षणा स्यात्। अविनाभावे चाक्षेपेणैव सिद्धेर्लक्षणाया नोपयोग इत्युक्तम्।

'आयुर्घृतम्', 'आयुरेवेदम्' इत्यादौ च सादृश्यादन्यत् कार्यकारणभावादिसम्बन्धान्तरम्। एवमादौ च कार्यकारणभावादिलक्षणपूर्वे आरोपाध्यवसाने। अत्र गौणभेदयोर्भेदेऽपि ताद्रूप्यप्रतीतिः सर्वथैवाभेदावगमश्च प्रयोजनम्। शुद्धभेदयोस्त्वन्यवैलक्षण्येनाव्यभिचारेण च कार्यकारित्वादि।

---

अविनाभावस्यानुमानोत्थापकत्वेन[1] न तस्य लक्षणाहेतुत्वमित्याह—अविनाभावोऽत्रेति। सम्बन्धमात्रमविनाभावः[2]। सत्त्वे सत्त्वं नान्तरीयकत्वं व्याप्तिः; असत्त्वेऽसत्त्वं व्यतिरेके व्यतिरेकः, विना व्यतिरेके भावस्य सत्त्वस्याभाव इति व्युत्पत्तिलभ्यः। तथात्त्वे नान्तरीयकत्वे लक्षणा न स्यात्। पुरुषमञ्चयोः परस्परमन्वयव्यतिरेकाननुविधानात्।

ननु क्रोशनकाले व्याप्तिरस्त्येवेत्याह—अविनाभावे चेत्यादि। आक्षेपोऽनुमानात्। अन्यलभ्यत्वेन लक्षणानुपयोगः। उक्तं व्यक्तिलक्षणावादिमण्डनमतखण्डने—"व्यक्त्यविनाभावित्वाच्च जात्या व्यक्तिराक्षिप्यते" इत्यनेनेत्यर्थः।

शुद्धाद्वयमाह—आयुरित्यादि। आयुर्जनकत्वं लक्षतावच्छेदकम्। कारिकागता( 23b )न्तरपदविवरणमाह—सादृश्यादित्यादि। अन्यदित्यन्तरपदार्थः। तत्प्रतियोगिसादृश्यं प्रकृतत्वात्। सम्बन्धस्वरूपमाह—कार्यकारणेति। एतावता सम्बन्धान्तरमिति प्रकृत्यर्थविवरणम्।

प्रत्ययार्थहेतुमाह—एवमादावित्यादि। कार्यकारणभावादिलक्षणस्तत्स्वरूपः, स एव पूर्वो यत्रारोपाध्यवसानक्रियायाम्। पूर्ववर्तित्वेन हेतुता। आरोपाध्यवासनकर्त्र्या लक्षणायाः पूर्ववर्तित्वं स्फुटमेव। रूढ्यभावेन प्रयोजनवत्योरनयोः क्रमेण प्रयोजनमाह—गौणभेदयोरित्यादि। भेदे वैधर्म्ये भासमानेऽपीत्यर्थः। ताद्रूप्यं तादात्म्यं सारोपे

---

१. उत्थापकत्वे न तस्य ख०। २, अविनाभावे भावः ङ०।

क्वचित् तादर्थ्यादुपचारः, यथा—इन्द्रार्थाः स्थूणा इन्द्रः। क्वचित् स्वस्वामिभावात्, यथा—राजकीयः पुरुषो राजा। क्वचिदवयवावयविभावात्, यथा—अग्रहस्त इत्यत्राग्रमात्रेऽवयवे हस्तः। क्वचित् तात्कर्म्यात्, यथा—अतक्षा तक्षा।

**लक्षणा तेन षड्विधा ॥ १२ ॥**

---

सर्वथैवेति, साध्यवसाने वाहीकादिप्रयोगविरहेण वैधर्म्यानुपस्थितेः। अभेदस्तादात्म्यम्, अन्योन्याभावात्यन्ताभावस्य प्रतियोगिवृत्त्यसाधारणधर्मत्वात्।

इमे प्रयोजने आन्तरालिके पार्यन्तिकं गोगतजाड्यादि। घृतपदप्रयोगादन्यवैलक्षण्यम्, तदभावे वा व्यभिचारः। ननु सर्वत्र लक्षकगतधर्माः प्रयोजनम्, अन्यत्रान्यशब्दप्रयोगस्य तद्धर्मप्राप्त्यर्थसव्युत्पत्तेः। आयुर्जनकत्वं च[1] नायुषीति नैतत् प्रयोजनमिति चेत्, उच्यते—जीवनजनकत्वेनेष्टस्यायुषो[2] जीवनजनकत्व[3]धर्म एव प्रयोजनं घृते प्रतीयते, लक्षणा पुनरायुर्जनकत्वेनैव। अत एव कार्य[4]कारित्वमेव प्रयोजनमित्युक्तम्, न पुनरायुर्जनकत्वमिति। कार्य[5]न्तु जीवनमेवेत्यवधेयम्।

साहश्येतरसम्बन्धप्रपञ्चमाह–क्वचिदिति। इन्द्रार्था इन्द्रपूजाप्रयोजनिकाः स्थूणाः स्तम्भाः। राजकीयस्तत्स्वामिकः। अग्रहस्त इति कर्मधारयसमासवादिमते, अस्मन्मते तु हस्तस्याग्र इति विग्रहः, तन्मते 'पीता कार्पटिकैर्गङ्गा' इत्युदाहार्यम्। तात्कर्म्यं तत्कर्मकारित्वम्, अतक्षा गोपालादिः,[6] अभ्यस्तगृहकर्मा, तक्षा जातिविशेषः।

ननु सारोपाध्यवसानयोर्गौणशुद्धता च तावदुपादानादियोगेनापि भेदान्तरं सम्भवति, तत् कथं नोदाहृतमित्यत आह—लक्षणा तेनेत्यादि। षड्विधा षड्भेदाः, सारोपादावुपादानाद्यसङ्करस्य दर्शितत्वात्।

---

१. चेति नास्ति० ख०। २. जीवनजनकमिष्टस्यायुषो ख०।
३. जनकत्वं ख०। ४. वाचित्वमेव ख०।
५. कार्यानुजीवनमेवेत्यवधेयम् ख०। ६. अभ्यस्तगृहनिर्माणः क०।

आद्यभेदाभ्यां सह । सा च—

**व्यङ्ग्येन रहिता रूढौ सहिता तु प्रयोजने ।**

प्रयोजनं हि व्यञ्जनव्यापारगम्यमेव ।

**तच्च गूढमगूढं वा**

तच्चेति व्यङ्ग्यम् । गूढं यथा—

मुखं विकसितस्मितं वशिमवक्रिमप्रेक्षितं
समुच्छलितविभ्रमा गतिरपास्तसंस्था मतिः ।
उरो मुकुलितस्तनं जघनमंसबन्धोद्धुरं
बतेन्दुवदनातनौ तरुणिमोद्गमो मोदते ॥ ९ ॥

( ध्व० आ० लो० पृ० ६३ )

---

ननु गौणशुद्धभेदेन चातुर्विध्ये कथं षाड्विध्यमित्याह—आद्येति । उपादानलक्षणाभ्यां सहेत्यर्थः । तयोरेवाद्यत्वात् । न च रूढिप्रयोजने एव आद्ये, तयोर्लक्षणास्वरूपनिर्वाहकयोर्भेदत्वाभावात् ।

लक्षणानिरूपणस्य व्यङ्ग्योत्थापनफलजनकतया[1] तन्मुखेन तद्भेदमाह—व्यङ्ग्येनेत्यादि । अव्यङ्ग्या प्रसिद्धलक्षणा रूढिरिति निरूढलक्षणाया अपि विशेषेण[2] (24 a) व्यङ्ग्योत्थापकताप्रयोजने, तद्वल्लक्षणायां व्यङ्ग्येन रहितेत्यादिसूत्रावताराय सा चेति वृत्तौ पाठः, अन्यथा लक्षणानुवृत्तिर्न स्यात् ।

ननु लक्षणयाः प्रयोजनवत्त्वे व्यङ्ग्यत्वं कुतो लब्धमित्यत आह—प्रयोजनं हीति । हिर्हेतौ, व्यञ्जनव्यापारगम्यत्वादित्यर्थः ।

तच्चेत्यादि । गूढं काव्यार्थभावनापरिपक्वबुद्धिविभवमात्रवेद्यम्, अगूढमनत्यन्तसहृदयैरपि झटिति ग्राह्यम् । ननु प्रयोजने किं गूढत्वमगूढत्वं वेत्यत आह—तच्चेति । व्यङ्ग्यमिति व्यञ्जनसामग्र्या एव सूक्ष्मत्वस्थूलत्वाभ्यां व्यङ्ग्यस्यैव द्वैविध्यमिति भावः ।

मुखमित्यादि । विकासः पुष्पधर्मः, स्मितेऽसम्भवात् प्रकाशं लक्षयति, तद्गतश्च मनोहारी विशेषः सहृदयैरेव गृह्यत इति गूढः ।

---

१. ०पक ख० । २. विशेषण० ख० ।

अगूढं यथा—

श्रीपरिचयाज्जडा अपि भवन्त्यभिज्ञा विदग्धचरितानाम् ।
उपदिशति कामिनीनां यौवनमद एव ललितानि ॥१०॥
(रविगुप्तस्य)

अत्रोपदिशतीति ।

**तदेषा कथिता त्रिधा ॥१३॥**

अव्यङ्ग्या, गूढव्यङ्ग्या, अगूढव्यङ्ग्या च ।

**तद्भूर्लाक्षणिकः**

शब्द इति सम्बध्यते । तद्भूस्तदाश्रयः ।

**तत्र व्यापारो व्यञ्जनात्मकः ।**

कुत इत्याह—

---

एवञ्च स्मितसमुल्लासितापास्तसंस्थमुकुलितोद्धुरमोदनपदैः प्रश्लिष्टत्वोल्लसितत्वविषयसहस्रसञ्चारित्वोद्भिन्नत्वयोग्यत्वजृम्भणानि लक्ष्यन्ते, तदतिशयाश्च व्यङ्ग्या गूढाः। प्रकृत्यैवेयमिन्दुवदना तत्र यौवनोद्गम इति विदग्धानां यूनां पतितोऽनर्थः। अत एव बत खेदे ।

श्रीपरिचयादित्यादि । परिचयात् प्रथमसम्बन्धात् । मदोऽहङ्कार उत्साहो वा । ललितानि सञ्चरणदर्शनवचनहसितगतिभङ्गिविशेषान् । अत्रेत्यादि । वाचा कर्मणि प्रवर्तना उपदेशः । स चासम्भवत्प्रकाशं लक्षयति, प्रकाशेऽन्यनिरपेक्षत्वं प्रयोजनम् । अभिधेयवत् सर्वजनसंवेद्यमित्यगूढम् ।

तदित्यादि । एषा लक्षणा । अव्यङ्ग्येति रूढौ ।

लक्षणानिरूपणस्य लाक्षणिकशब्दनिरूपणप्रयोजनकत्वमित्याह—तद्भूरित्यादि । तस्या भूमिः । शब्दस्य लक्षणाप्रभवत्वे बाध इत्यत आह तदाश्रय इति ।

व्यञ्जकशब्दे निरूपयितव्ये तदुपाधौ व्यञ्जनायां वादिविप्रतिपत्तिनिरासायाह—तत्रेति । प्रयोजनवल्लक्षणावति शब्दे व्यञ्जनात्मको व्यञ्जनशब्दवाच्यः ।

तत्रेति प्रतिज्ञायाम् । हेत्वाकाङ्क्षायामावश्यकत्वमित्याह—कुत इति ।

---

१. प्रथमसम्बन्धः परिचयः ख० ।

**यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते ॥१४॥**

**फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया ।**

प्रयोजनप्रतिपिपादयिषया यत्र लक्षणाशब्दप्रयोगः, तत्र नान्यतस्तत्प्रतीतिः, अपि तु तस्मादेव शब्दात् । न चात्र व्यञ्जनादृतेऽन्यो व्यापारः ।

तथाहि—

**नाभिधा समयाभावात्**

'गङ्गायां घोषः' इत्यादौ ये पावनत्वादयो धर्मास्तटादौ प्रतीयन्ते, न तत्र गङ्गादिशब्दाः सङ्केतिताः ।

---

आधातुं सत्यपि बाधादौ बलादिव प्रापयितुं समुपास्यते, सत्यपि वाचकशब्दे तमपहायाद्रियत इत्यर्थः । न चेति प्रयोगलाघवाय मुख्यार्थबाधाद्यनुसन्धानेन प्रतीतिगौरवात् । शब्दस्तद्विशेषः स प्रयोजनलक्षणाश्रयः, तदन्वयव्यतिरेकाभ्यां तद्गम्यत्वम् ।

प्रमाणान्तरगम्यत्वामाह—एकेति । तटादिषु बाधितानां पावनत्वादीनां प्रत्यायने प्रत्यक्षानुमानयोरक्षमत्वादुपमानस्य च नियतविषयत्वात् । व्यापारान्तरं निरस्यति—व्यञ्जनादिति (24b) । क्रिया व्यापारः । वृत्त्यन्तरनिरसनाय नाभिधासमयाभावादित्यादिसूत्रस्य वक्ष्यमाणत्वान्नात्र प्रपञ्चितम् ।

प्रतिपिपादयिषयेत्यनेन प्रसिद्धिविरहेणापि प्रयोगे पुमिच्छाधीनत्वसूचनम् । लक्षणाश्रयः शब्दो लक्षणाशब्दः । लक्षणयेति पाठस्तु प्रतिपद एव । नान्यतो न प्रमाणान्तरात् । शब्दगम्यत्वमाह—अपि त्विति । अन्वयव्यतिरेकाभ्यां तत्र शब्दस्य शक्तिरवधार्यते, सा च व्यञ्जनयैवेत्याह—न चात्रेति ।

कुतो नान्यव्यापार इत्यत आह—तथा हीत्यादि । इदं पदमस्यार्थस्याभिधायकमिति सङ्केतनं समयः । शब्दार्थयोर्ज्ञापकज्ञाप्यत्वाख्यः स्वरूपसम्बन्धविशेषोऽभिधा, स चास्याग्राहक एवेति न साध्याविशेषो हेतुः । ये पावनत्वादय इति । गङ्गायामिव साक्षात् सम्बन्धेन यथाकथञ्चित् प्रत्ययस्य मुख्यप्रयोगेऽप्युपपत्तेः । तटादौ, न तु गङ्गादौ; तत्राविनाभावेनाप्युपपत्तेः । सङ्केतेन समयो व्याख्यातः ।

---

१. प्रत्ययेन ख० ।

**हेत्वभावान्न लक्षणा ॥ १५ ॥**

मुख्यार्थबाधादित्रयं हेतुः ।

तथा च—

**लक्ष्यं न मुख्यं नाप्यत्र बाधो योगः फलेन नो ।**
**न प्रयोजनमेतस्मिन् न च शब्दः स्खलद्गतिः ॥१६॥**

यथा गङ्गाशब्दः स्रोतसि सबाध इति तटं लक्षयति, तद्वद् यदि तटेऽपि सबाधः स्यात्, तत् प्रयोजनं लक्षयेत् । न च तटं मुख्योऽर्थः; नाप्यत्र बाधः; न च गङ्गाशब्दार्थस्य तटस्य पावनत्वाद्यैर्लक्षणीयैः सम्बन्धः; नापि प्रयोजने लक्ष्ये किञ्चित् प्रयोजनम्; नापि गङ्गाशब्दस्तटमिव प्रयोजनं प्रतिपादयितुमसमर्थः ।

---

लक्षणां निरस्यति—हेत्वभावादिति । हेतुः सामग्री । तदाह—मुख्यार्थबाधादित्रयमिति ।

त्रयस्यैकहेतुत्वं सामग्रीत्वेनैव[1] प्रपञ्चयति—लक्ष्यमिति । अत्र लक्ष्ये । तेन मुख्यार्थबाधस्य दलद्वयं नास्तीत्यर्थः । योग इत्यादि । गङ्गायामिव साक्षात् सम्बन्धेन तटे प्रतीयमानं पावनत्वाद्येव प्रयोजनं न परम्परया, तस्य मुख्यप्रयोगसाध्यत्वात् । तच्च तत्रासदेवेति न तद्योगः । प्रयोजनं प्राकृतादन्यत् । ननु पावनत्वाद्यन्वये तात्पर्यमिति तदनुपपत्त्या लक्षणाया दुर्वारत्वमित्याह—न च शब्द इत्यादि । स्खलन्ती मुख्यार्थबाधाद्यनुसन्धानेन विलम्बिता गतिः प्रसरणं बोधकता यस्य । न चैवं प्रयोजने, लाक्षणिकतटप्रत्ययानुपदं झटित्येव व्यञ्जनात् तत्प्रतीतेः ।

तेन विवक्षितान्वयानुपपत्त्यभावान्न लक्षणाप्रसङ्ग इत्याह—तटमिवेत्यादि । असामर्थ्यं बोधकत्वासामर्थ्यम् । असमर्थ इति पाठे उपस्थितलक्ष्यार्थान्वयबोधने पदस्यासामर्थ्यमन्वयानुपपत्तिमूलाया लक्षणायास्तात्पर्यावसायकत्वनियमात् । न च गङ्गापदं तथा योग्यम्, पावनत्वाद्यन्वयस्य तटे बोधयितुमपर्याप्तत्वादित्यर्थः, शेषा तु वृत्तिः कारिकार्थविवरणेनैव विवृता ।

---

१. एव नास्ति ख० ।

**एवमप्यनवस्था स्याद् या मूलक्षयकारिणी ।**

एवमपि प्रयोजनं चेल्लक्ष्यते, तत् प्रयोजनान्तरेण, तदपि प्रयोजनान्तरेणेति प्रकृताप्रतीतिकृदनवस्था भवेत् ।

ननु पावनत्वादिधर्मयुक्तमेव तटं लक्ष्यते, 'गङ्गायास्तटे घोषः'

---

केचित्तु प्रकारान्तरेण बोधयितुमशक्ये ह्येवार्थे शब्दस्य स्खलद्गतित्वादपर्याप्तशक्यन्तरत्वादिति ग्रन्थसङ्गतिमाहुः, तन्न; गङ्गात्वस्य जातिविशेषस्यैव शक्यत्वात् । न पुनः पावन( 25a )त्वादेः, तस्य गङ्गापदादनुपस्थितेः । यच्चोक्तम्-"यत्राभिधा सर्वथा न प्रसरति तत्रैव लक्षणा" इति, तदप्यसत्; कुन्तवति कुन्तपदस्य लक्षणाऽनुपपत्तेः । यच्च "समर्थ इति यदा पाठः, तदाऽस्मिन्नेव लक्षणे प्रतीतेन शब्दः स्खलद्गतिः—अन्वययोग्यतया निराकाङ्क्षः सन्नत्रैव विश्रान्तः, कथं प्रयोजनं लक्षयितुं समर्थ इति कारिकार्थः" इति तैरुक्तम्, तदप्ययुक्तम्; प्रयोजनान्वये तात्पर्याकाङ्क्षयोरनुवृत्तेस्तदुपपत्तये लक्षणाप्रसङ्गादिति । मिश्रास्तु "नाप्यत्र बाधा, तटादेरन्वययोग्यत्वात् । विशिष्टान्वये तटमात्रं न योग्यमित्याह-योग इत्यादि । पावनत्वादीनां वस्तुतो गङ्गादिनिष्ठत्वादस्त्येव परम्परासम्बन्धः, तत्राह—न प्रयोजनमितीति । पूर्वं पूर्वास्वरसात्परपरोक्तिः" इत्याहुः, तदपि न साधु; एवं प्रयोजनमात्राभावे मुख्यार्थबाधादित्रयसामग्र्यभावे मुख्यार्थबाधादित्रयसामग्र्यभावप्रपञ्चनानुपपत्तेः । अत एवोक्तम्—"मुख्यार्थबाधादित्रयं हेतुः" इति ।

अभ्युपगमवादेन दूषयति—एवमपीति । बीजाङ्कुरादाविवानवस्थादूषणमित्याह-या मूलेत्यादि । तदुक्तम्-"मूलक्षयकरीं त्वाहुरनवस्थां विदूषणम्" इति ।

प्रयोजनञ्चेदित्यादि । चेत् यदि, तत् तदा । प्रयोजनान्तरेणेति । लक्ष्यत इति । क्रियायां करणं प्रयोजनं परम्परालक्षणा परम्परयोर्विषयान्तरसञ्चारणेन यतो निवृत्तिस्तस्या अग्रिमलक्षणाया निष्प्रयोजनत्वेन मूलभूतप्रयोजनवल्लक्षणायां वैमुख्यं स्यात् । तदाह—प्रकृतेत्यादि । प्रकृते सप्रयोजनलक्षणायां गतिर्ज्ञानं प्रतीतिः पुनर्ज्ञानं तस्यां न स्यादित्यर्थः । अप्रतीतिरविश्रामो वा ।

क्रमिकां दूषयित्वा उभयविषयिकामेकां लक्षणां दूषयितुमुपक्रमते—नन्विति । लक्ष्यते लक्षणया व्याप्रियते । कथं भेदोपस्थापकविभक्त्यर्थान्त-

इत्यतोऽधिकस्यार्थस्य प्रतीतौश्च प्रयोजनमिति विशिष्टे लक्षणा, तत् किं व्यञ्जनयेत्याह—

**प्रयोजनेन सहितं लक्षणीयं न युज्यते ॥ १७ ॥**

कुत इत्याह—

**ज्ञानस्य विषयो ह्यन्यः फलमन्यदुदाहृतम् ।**

प्रत्यक्षादेर्नीलादिर्विषयः, फलन्तु प्रकटता संवित्तिर्वा ।

---

भावेन नामार्थयोर्भेदान्वय इत्याह—विशिष्टे, न तु समूहालम्बिते । अन्वयमुख्याङ्ग एव तटे मुख्यार्थबाधाद्यनुसन्धानाद्यपेक्षा, न तु तटत्व इव तदवच्छेदके प्रयोजनेऽपीति शङ्कार्थः ।

लक्षणीयं लक्षणाजन्यप्रतीतिविषयस्तटादिः । प्रयोजनेन सहितं तद-वच्छिन्नमेकव्यापारविषयत्वेन साहित्यम् , न युज्यते न युक्तिमत् ।

हेतुमाह—ज्ञानस्येत्यादि । हिर्हेतौ । वेदान्तिनये 'इदं रजतम्' इति ज्ञानेन शुक्तौ रजतत्वसम्बन्धस्येव लाक्षणिकप्रतीत्या स्वविषये तटादौ जन्यस्य पावनत्वादिवैशिष्ट्यस्य तत्पूर्वमसिद्धौ लक्षणाव्यापारतज्जन्य-प्रतीत्योर्न ( 25b ) विषयत्वम् । स च सम्बन्धो वैज्ञानिकः, प्रतीतिकाल एव सत्त्वात् । तदाह—विषयो ह्यन्यः फलमन्यदिति । सिद्धस्य विषयत्वा-ज्जन्यस्य च फलत्वान्नैकत्वमिति भावः ।

ननु पावनत्वादि न फलम् , किन्तु तत्प्रतीतिरेवेति चेत् , मैवम्; विशेषाः स्युस्तु लक्षिते । विशेषाः पावनत्वादय इति । तेषामेव फलत्वेन वक्ष्यमाणत्वात् । अत एव अधिकार्थस्य प्रतिपत्तिरित्यत्र प्रतिपत्तेरधि-कार्थविषयत्वमिति व्याख्येयम् ।

प्रतिपत्तौ फलत्वबाधादिति दृष्टान्तयति–प्रत्यक्षादेरित्यादि । भट्टमते प्रत्यक्षादिज्ञानेन स्वविषये ज्ञानज्ञेयत्वप्रयोजको ज्ञातताख्यः कश्चन धर्मो जन्यते । सैव प्रकटता, तया लिङ्गेनातीन्द्रियं ज्ञानमनुमीयते । घटो ज्ञानविषयो ज्ञाततावत्त्वादिति[1] । अत्र केचित्—"हेतुफलयोस्तटफल-

---

1. मुरारिमते संवित्तिरनुव्यवसायजन्यः,तेन व्यवसायप्रमाण्यग्रहः । तदुभयमेव ज्ञानजन्यम्, न तद्विषयो भावित्वादिति । एतदन्तराले च० पु० धृतोऽ-तिरिक्तः पाठः ।

**विशिष्टे लक्षणा नैवं**

व्याख्यातम्।

**विशेषाः स्युस्तु लक्षिते ॥ १८ ॥**

तटादौ ये विशेषाः पावनत्वादयस्ते चाभिधातात्पर्यलक्षणाभ्यो व्यापारान्तरेण गम्याः। तच्च व्यञ्जनध्वननद्योतनादिशब्दवाच्यमवश्यमेषितव्यम्।

---

प्रतीत्योर्भिन्नकालत्वेनाभिन्नव्यापारगोचरत्वमसमीचीनमित्यर्थः, "ज्ञानस्य विषयो ह्यन्यः फलमन्यत्" इति ग्रन्थस्य यथाश्रुते त्वसङ्गतेः। तथा हि ज्ञानस्य विषयव्यतिरिक्तं फलमात्रं ज्ञेयगतं वा फलम्? आद्येऽत्राव्याप्तिः, गोस्वामिगतसन्तोषादिः; अन्त्ये तु व्यभिचारः। व्यञ्जनवादिमतेऽपि पावनत्वादिप्रतीत्या तटे किञ्चिदजननात्। गोस्वामिगतसन्तोषादेरेवोत्पादनात्" इत्याहुः, तन्न; अभिप्रायावेदनेनैव विकल्पनात्। यद् यस्य ज्ञानस्य फलम्, तत् तस्य न विषय इति व्याप्तावव्यभिचारात्। किञ्च, हेतुव्यापारगोचरत्वस्य साध्यप्रत्यक्षप्रकटनयोरसत्त्वेन दृष्टान्तस्यासाध्यवैकल्यापत्तेः; यथाश्रुतेनैवोपपादितत्वाच्च।

उपसंहरति–विशिष्टे लक्षणा नैवमिति। व्याख्यातम्, फलस्य ज्ञानाविषयत्वं दर्शयित्वा।

ननु तर्हि कथं वैशिष्ट्यप्रतीतिरित्यत आह—विशेषा इति। लक्षिते लक्षणया प्रत्यायिते वैज्ञानिकसम्बन्धेनेत्यर्थः। तेन प्रत्याय्या इत्यध्याहारो वा न्याय्यः। व्यञ्जनसिद्धौ तेनैव प्रयोजनतदाधारयोर्वैशिष्ट्याबोधनम्।

विशेषयन्तीति विशेषाः, विशेषणानि, तानाह—पावनत्वादय इति। उपसंहरति--ते चेति। व्यङ्ग्यप्रत्यायनेऽभिधालक्षणयोरसामर्थ्यं 'नाभिधा समयाभावात्' इति दर्शितम्। 'तात्पर्यार्थोऽपि केषुचित्' इति दर्शिततात्पर्यवृत्तेरप्यविषयत्वम्, तस्य संसर्गनियतत्वादित्याह–अभिधेत्यादि। अन्तरेण भिन्नेन व्यापारं विना शब्दस्य बोधनाक्षमत्वादन्वयव्यतिरेकाभ्यां शब्दस्य करणत्वम्, अनुमानादेरग्रे दूषयिष्यमाणत्वात्। व्यवहाराय तद्व्यपदेशानाह—( 26a ) व्यञ्जनेत्यादि। अवश्यं सर्वप्रयत्नेन।

एवं लक्षणामूलं व्यञ्जकत्वमुक्तम्, अभिधामूलं त्वाह—

**अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते।**
**संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनम् ॥१६॥**

लाक्षणिकमात्रस्य व्यञ्जकत्वमिति शङ्कां निरस्यति—एवमिति। एवं प्रतीत्यन्यथानुपपत्त्या। लक्षणामूलं तदन्वयव्यतिरेकानुविधायि। एवमभिधामूलमित्यत्रापि। शब्दस्यावाच्यार्थधीकृद्व्यापारो व्यक्तिरित्यन्वयः। अवाच्यो बोधयितुमशक्यः। लक्षणावारणाय।

अनेकार्थस्य संयोगाद्यैर्वाचकत्वे नियन्त्रित इति। अनेकार्थस्य अनेकत्र गृहीतशक्तिकस्य, वाचकत्वेऽभिधायां संयोगाद्यैस्तात्पर्यग्राहकैर्नियन्त्रिते शेषप्रसरणं निरुध्य यत्र कुत्रचित् प्राप्तस्वविषयानुभवक्षमत्वे। तेन मुख्यार्थबाधादिविरहाद् न लक्षणावसरः।

अयमर्थः—एकस्य वर्णसमूहात्मनः पदस्यानेकत्रानेकैव शक्तिः, शक्यतावच्छेदकभेदेन तद्भेदात्। ततश्च यस्मिन्नर्थे तात्पर्यग्राहकं प्रकरणादिकमवतरति तदुद्बुद्धया [1]तद्गोचरशक्त्या तदर्थोपस्थापनमन्यस्याश्च निरोधनम्। तया निरुद्धया अभिधया बोधयितुमशक्यार्थस्य बोधने प्रभवन्ती वृत्तिर्व्यञ्जना नाम।

नन्वभिधानिरोधे कथं तद्विषयार्थप्रतीतिरिति चेदनुभवं पृच्छ, नास्मान्। व्यञ्जनावृत्तिसाधनग्राहिणामनुभवेनास्तीति चेत्, सुगन्धिमांसभोजनप्रकरणे सुरभिमांसं भवान् भुङ्क्त इत्यभिधाने विदग्धस्य भोक्तुर्गोमांसाज्ञाने जुगुप्सा न स्यात्। एतेन विरुद्धाभिधाविषयार्थप्रत्ययो दुर्व्याख्यातुरुपदेशपरम्परयेति निरस्तम्, अनुभवस्य वारयितुमशक्यत्वात्। यत्र न प्रकरणादिकं तत्राभिधानियन्त्रणाभावादुद्बुद्धस्वस्वसंस्कारेण ज्ञानकरणमर्यादया जनितैकसमूहालम्बनस्मरणोपस्थितयो[2]रुभयोरेवान्वयः। यथा 'येन ध्वस्तमनोभवेन' इत्यादौ। अत्रोपश्लोक्यमानस्य प्रकृतत्वेनाप्रकृतयोरुमाधवमाधवयोर्द्वयोरेव रक्षणक्रियाऽन्वयित्वम्। न चात्र सन्देह एव, स्वरूपमाहात्म्येन रसानपकर्षकत्वाद् न दोषतेति वाच्यम्; तस्यानुभवाद् माधवोमाधवयोर्द्वयोर्धर्मिणो[3]स्तत्तद्धर्मान्वयादेकविषयकविरुद्धकोटिद्वयावगाहित्वाभावेन सन्देहत्वानु-

---

१. तद्गोचरया ख०। २. रुपस्थितयोरुमा० ख०।
३. धर्मिणोः नास्ति ख०।

पपत्तेः। न च यथा 'आराद् वृत्तिरसौ माता' इत्यत्रैकस्यां मातरि दूरनिकटवर्तित्वसन्देहान्न वाक्यर्थधीः, पदार्थतात्पर्यानिश्चयात्।

ननु निरुद्धाया एवाभिधायाः फलबलेन पुनः प्रसरणं कल्प्यताम्, न पुनर्व्यञ्जना। धर्मिकल्पनातो धर्मकल्पनाया लघुत्वादिति चेन्न; प्रकरणादेः प्रतिबन्धकत्वस्य तथैवानुवृत्तौ प्रसरणानुपपत्तेः, स्वविषय-( 2bb )ज्ञानोत्पादनया तस्योपक्षीणत्वमित्यपि न स्यात्, कारणीभूताभावप्रतियोगित्वस्य प्रतिबन्धकत्वस्य तस्मिन्नसत्येवासत्त्वात्।

ननु 'येन ध्वस्त' इत्यादावप्रकृतयोः कथमुपस्थितिः? तात्पर्यग्राहकादिति चेन्न; एकसम्बन्धिज्ञानस्य [२]सम्बन्ध्यन्तरोपस्थापने तदनुपयोगात्, अर्थविशेषस्मृतावेवापेक्षणात्। तद्वक्ष्यति–विशेषस्मृतिहेतव इति।

अथ 'जलदभुजङ्गजं विषम्' इत्यत्र कथं गरलस्य व्यङ्ग्यता? भुजगपदसान्निध्येन गरलशक्त्याविष्कारसम्भवादिति नाशङ्कनीयम्, तद्व्यङ्ग्यत्वोपायस्य गुणीभूतव्यङ्ग्ये वक्ष्यमाणत्वात्। ननु तथापि 'भद्रात्मन' इत्यादौ न व्यञ्जना, पदनानार्थत्वं प्रतिसन्धानस्य तात्पर्यग्राहकस्य सम्भवेनाभिधाया अनियन्त्रणात्। मैवम्; पदनानार्थज्ञानस्यार्थज्ञानाधीनत्वेनान्योन्याश्रयापत्तेः। अथ प्रथमार्थं प्रत्याय्य पदानां विरमात् कथं द्वितीयार्थधीः? न चावृत्त्याऽगृहीततात्पर्येऽर्थे तदसम्भवात्। तदुक्तम्—'तात्पर्यसत्त्वे त्वावृत्तिरेव' इति, मैवम्; प्रथमार्थप्रतीतिरेव व्यापारत्वात्। अत एव वक्ष्यति—

..................यत् सोऽर्थान्तरयुक्तथा।
अर्थोऽपि व्यञ्जकस्तत्र सहकारितया मतः॥ इति।

केवलं शब्दान्वयव्यतिरेकानुविधानाद् व्यञ्जनायाः शब्दत्वम्। केचित्तु सजातीय एव कार्ये विरम्य व्यापाराभावेनात्र विजातीय इति वदन्ति, तदसत्; विजातीयस्य पदज्ञानस्य व्यापारं विना करणत्वानुपपत्तेः। प्रथमार्थप्रत्ययस्य व्यापारत्वमिति चेत्, अस्मन्मताप्रवेशेन[3] सजातीयविशेषणकल्पनानुष्ठानात्[४]। अन्ये तु–अन्वयबोधे संस्कारोपनीतं पदमपि भासते, तदाहुः—

१. फलप्रसारणं ख०। २. सम्बन्ध्यन्तरयोरुपस्थापनेन तदनुयोगात् क०।
३. अनुप्रवेशेन वैफल्यात्, अन्ये तु ख०। ४. विशेषणवैफल्यात् च०।

संयोगो विप्रयोगश्च साहचर्यं विरोधिता।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः॥
(वा० प० २।३१५-१६)

---

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं शब्दः शब्देन भासयेत् ॥ इति।

न च तदेव शक्त्या बोधकमस्तु, प्रकरणादिना तन्नियन्त्रणात्। तेन प्रथमान्वयबोध[1]भानेभ्यस्तेभ्यः पदेभ्य एव द्वितीयार्थधीरित्याहुः, तन्न; सामग्रीसम्पातेन भानमात्रेभ्यस्तेभ्योऽर्थानवगतेः। तथा सत्यावृत्तिलोपापत्तेः। न च [2]नास्त्येवेति वाच्यम्, 'अहो विमलं जलं नद्याः कच्छे महिषश्चरति' इत्यादिषु जनितान्वयबोधेष्वावृत्तिं विना निराकाङ्क्षत्वस्य सर्वजनसिद्धत्वादिति।

संयोग इत्यादि। सम्यग् योगः प्रसिद्धसम्बन्धः। विप्रयोगः प्रसिद्धयोगविरहो विभागः। साहचर्यमेकस्मिन्नर्थे परस्परसापेक्षत्वम्। विरोधिता बोध्यघातकत्वं सहानवस्थानञ्च। अर्थः फलम्, अनन्यसाध्यम (27a)। वक्तुः प्रतिपाद्यस्य च बुद्धिसान्निध्यं प्रकरणम्। लिङ्गमसाधारणो धर्मः। शब्दस्याव्यभिचरितस्य सन्निधिः सामानाधिकरण्यम्। सामर्थ्यं तत्करणनियमः। औचिती योग्यता। देशकालौ तद्विशेषौ। व्यक्तिः स्त्रीत्वपुंस्त्वादि। स्वरा उदात्तादयः। अनवच्छेदे कतमोऽर्थो विवक्षित इति सन्देहे [3]तात्पर्यग्राहकेण प्रकृतार्थोपस्थितौ कथं सन्देह इति न वाच्यम्,

यावत्स्वर्थेषु शब्दानां प्राक्संबन्धोऽवधारितः।
तावत्स्वन्यनिरोधं स श्रुतः सन् कुरुते मतिम्॥

अन्यनिरोधम् अन्यमर्थमगृहीतसम्बन्धं निरुध्यावेदयतीति दिशा युगपदुपस्थितेषु तात्पर्यसन्देहादनन्तरं प्रकरणादिसहकृतात् पुनरनुसंहितात् प्रकृतार्थोपस्थितावनुपपत्त्यभावात्। विशेषः प्रकृतः।

---

१. बोधगतेभ्यः ख०। २. तस्मिन्नेवेति क०।
३. तात्पर्यग्रहणेन क०।

इत्युक्तदिशा 'सशङ्खचक्रो हरिः', 'असङ्खचक्रो हरिः इत्युच्यते। 'रामलक्ष्मणौ' इति दाशरथी। 'रामार्जुनगतिस्तयोः' इति भार्गवकार्तवीर्ययोः। 'स्थाणुं भज भवच्छिदे' इति हरे। 'सर्वं जानाति देवः' इति युष्मदर्थे। 'कुपितो मकरध्वजः' इति कामे। 'देवस्य पुराराते:' इति शम्भौ। 'मधुना मत्तः कोकिलः इति वसन्ते 'पातु वो दयितामुखम्' इति साम्मुख्ये। 'भात्यत्र परमेश्वरः' इति राजधानीरूपाद् देशाद् राजनि। 'चित्रभानु-

'सशङ्खचक्रः' इत्यादि–हरिपदमच्युते नियम्यते। एवमन्यत्र। लक्ष्मण-साहचर्येण रामपदस्य दाशरथिपरत्वम्। वध्यघातकविरोधितायां रामो भार्गवः, अर्जुनः कार्तवीर्यः, गतिः शरणम्, तयोः कयोश्चित् प्रकृतयोः। स्थाणुः शिवः, न शङ्कुः; ततः संसारच्छेदासम्भवात्। राजानं सम्बोध्य दूतकथाप्रवृत्तौ देवपदं सम्बोध्य राजपरम्। तदाह—युष्मदर्थ इति। राजत्वस्वर्गित्वयोः शक्यतावच्छेदकत्वेनानेकार्थत्वम्। तदुक्तम्—'राजा भट्टारको देवः' इति। मकराकारो ध्वजो मकर एव वा ध्वजः, कोपस्य समुद्रे बाधात्।

यत्तु 'धेनुरानीयताम्' इत्यत्र वत्सवर्करकिशोरैर्गौरजाश्च प्रतीयन्त इत्युक्तम्, तदसत्; गोत्वस्य शक्यतावच्छेदकत्वेन प्रयोगोपाधित्वेन वा स्त्रीगव्या एवावगतेः। पुरस्यासुरभेदस्य नगरस्य वेति सम्बन्धितावच्छेदक-भेदेन समुदायस्य नानार्थता। देवपदसामानाधिकरण्येनेतरव्युदासः।

मिश्रास्तु–देवपदमेव नियम्यम्, पुरारातिपदस्यानेकार्थताविरहात्। तस्य शक्यतावच्छेदकैक्येऽपि सुरनृपादिशक्यनानात्वेन सन्देहः स्या-दित्याहुः, तन्न; शक्यतावच्छेदकैक्येऽपि नानार्थत्वे सर्वत्रैव तत्प्रसङ्गात्। उक्तनयेन[1] पुराराते रेव नियम्यत्वाच्च। कोकिलमादने मधोरेव शक्तिः, न तु मधुनः। मादकत्वं मधुन्यपीति न लिङ्गम्।

मुखं साम्मुख्यम्, न तु वदनम्, कामत्राणायोग्यत्वात्। यद्यपि चुम्बनादिना वदनमपि कामत्रायकम्, तथापि साम्मुख्यमेव योग्यम्; असति तस्मिन् सर्वं वैरस्यायैवेति तस्यैवौचित्यम्। अत्र राजधान्यां विष्णुत्वेन नृपतित्वेन च समुदायशक्त्या नानार्थता विष्णो(27b)र्भानं

१. न्यायेन ख० ग० च०।

विभाति' इति दिने रवौ, रात्रौ वह्नौ। 'मित्रं भाति' इति सुहृदि। 'मित्रो भाति' इति रवौ। 'इन्द्रशत्रुः' इत्यादौ वेद एव, न काव्ये स्वरो विशेषप्रतीतिकृत्। आदिग्रहणात्—

एद्दहमेत्तत्थणिआ एद्दहमत्तेहिं अच्छिवत्तेहिं
एद्दहमेत्तावत्था एद्दहमेत्तेहिं दिअएहिं ॥११॥
(स० क० आ०, पृ० १६६; गा० स० वे० ९७३)

इत्यादावभिनयादयः।

---

सर्वत्र, राज्ञस्तु राजधान्यामेवेति राजधानीदेशेन नियमनम्। चित्रभानुत्वं रवित्वं वह्नित्वं च, दिनरात्रयोर्वह्निसूर्ययोर्भानायोगात् तत्तद्विशेषपरत्वम्।

इन्द्र इति। इन्द्रः शक्रः शातयिता यस्य, इन्द्रोऽस्य शातयिता वा। षष्ठीसमासे समासान्तोदात्ते सूचिते इन्द्रस्य शातयितेत्यर्थः। बहुव्रीहौ तु पूर्वपदोदात्ते सूचिते इन्द्रः शातयिता यस्येति प्रतीयते। काव्येष्वमीषां नानार्थविशेषनियामकता। तदा ह्यनुरूपस्वरेणार्थविशेषावगतौ श्लेषभङ्गप्रसङ्गादित्याह—[1]वेद एव न काव्ये इति। अत एव श्लेषप्रस्तावे वक्ष्यति—"काव्यमार्गे स्वरो न गण्यते" इति। पुनः पाठगुणोपदेशेन रसविशेषनियामकत्वं[2] तु स्यादेव। तदुक्तम्—"वीरबीभत्सरौद्रेषु स्वरितोदात्तमुत्पादयेत्" इत्यादि। काकोरपि व्यञ्जकत्वं वक्ष्यति—

एतावन्मात्रस्तनिका एतावन्मात्राभ्यामक्षिपत्राभ्याम्।
एतावन्मात्रावस्था एतावन्मात्रैर्दिवसैः॥

परिमाणे 'दह' प्रत्ययः। अत्र हस्तानुकारविशेषेण स्तनादीनां पद्मकोशाद्याकारत्वं प्रतीयते। सर्वनाम्नो बुद्धिस्थतावच्छेदकप्रकारेण शक्तौ नानार्थता। आदिपदात् "इतः स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम्" इत्यत्रात्मनिर्देशो हृदयनिहितहस्तेन प्रतीयते। नायमभिनयोऽनुकरणाभावात्। एवम् "अञ्जलिना सूर्यमुपतिष्ठते, पयः पिबति, लाजान् जुहोति" इत्यादावञ्जलेः पुटीभावेनोर्ध्वशिखत्वम्। अङ्गुलिनिबिडसंयोगेनोर्ध्वाग्राधोमूलत्वम्, ऊर्ध्वमूलाधोऽग्रत्वमिति[3] सन्निवेशविशेषः। 'त्रयोऽग्नयस्त्रयो वेदाः' इत्यत्र सङ्ख्याविशेषात् तेषां त्रयीपरत्वम्।

---

१. वेद इव न काव्येष्विति ख० ग०। २. नियामकन्तु ख० ग०।
३. मूलमधो ख०।

इत्थं संयोगादिभिरर्थान्तराभिधायकत्वे निवारितेऽप्यनेकार्थस्य शब्दस्य यत् क्वचिदर्थान्तरप्रतिपादनम्, तत्र नाभिधा, नियमनात् तस्याः । न च लक्षणा, मुख्यार्थबाधाद्यभावात् । अपि त्वञ्जनं व्यञ्जनमेव व्यापारः । यथा—

भद्रात्मनो दुरधिरोहतनोर्विशाल-
वंशोन्नतेः कृतशिलीमुखसंग्रहस्य ।
यस्यानुपप्लुतगतेः परवारणस्य
दानाम्बुसेकसुभगः सततं करोऽभूत् ॥ १२ ॥
( क० अ० १।३८ )

---

कारिकां सङ्गमयति—इत्थमिति । [१]नियन्त्रणमाह—निवारिते इति । निर्धारित इति क्वचित्पाठः । तात्पर्यविषयोपस्थितार्थान्वयबोधे वृत्ते अप्रकृतोपस्थितिबन्धे च यत्र क्वचिदिति श्रोतृतात्पर्यग्राहकसूक्ष्मेक्षिकादिसाहचर्यसूचनम् । न च लक्षणेति, द्वितीयार्थे तात्पर्यग्राहकाभावात् । तात्पर्यविषयीभूतान्वयानुपपत्तेरित्यर्थः ।

भद्रः शोभनो गजजातिश्च । अधिरोहोऽवकलनम्, आरोहणञ्च । वंशोऽन्वयः, पृष्ठास्थिदण्डश्च । शिलीमुखो बाणो भ्रमरश्च । संग्रहः सम्यग् ग्रहणम्, [२]समन्त्रकादानं संसर्गश्च । अनुपप्लुता परानभिभाव्या स्तब्धत्वादिदोषरहिता च । गतिर्ज्ञानं गमनञ्च । परं शत्रुं वारयतीति परवारणः, श्रेष्ठहस्ती च । दानं वितरणं मदश्च । करो हस्तः शुण्डा च । अत्राभिधया (28a) प्रकृतराजान्वयः, गजान्वयस्तु तात्पर्यविषयोऽपि तद्ग्राहकप्रकरणाद्यभावाद् व्यङ्ग्य एव । एतन्मूलको नृपतिगजयोरुपमेयोपमानयोरुपमालङ्कारोऽपि व्यङ्ग्यः । अत्राभिधामूलव्यञ्जनयाऽभिधान्तरविषयार्थस्यैव व्यञ्जनम्, संसर्गभूतस्य तस्य स्वरूपसतो नियामकत्वात् ।

नन्वेवं 'भद्रात्मनः' इत्यत्र कथमुपमाव्यञ्जनम्, तस्या द्वितीयाभिधाया अविषयत्वात्? मैवम्; तस्या एव व्यञ्जनाया [३]अप्रकृतविषयत्वेनापर्यवस्यन्त्या प्रकृतान्वयार्थमौपम्याक्षेपकत्वात् । यद्वा विवक्षितौपम्यप्रतीतिनिर्वाहाय तत्र व्यञ्जनान्तरोपगमात् । अन्यथा प्रकृताप्रकृतान्वयबोधनविरतयोरभिधा तन्मूलव्यञ्जनयोरौपम्यस्य

१. नियन्त्रिते ख० । २. समन्त्रणादानं क० ।
३. अपहृतविषयत्वेनापर्यवसानात् ख० ।

**तद्युक्तो व्यञ्जकः शब्दः**

तद्युक्तो व्यञ्जनयुक्तः ।

**यत् सोऽर्थान्तरयुक् तथा ।**

**अर्थोऽपि व्यञ्जकस्तत्र सहकारितया मतः ॥२०॥**

तथेति व्यञ्जकः ।

इति काव्यप्रकाशे शब्दार्थ-
स्वरूपनिर्णयो नाम
द्वितीय उल्लासः ॥ २ ॥

---

तत्प्रतियोगिनोश्च पुनः प्रतीत्यनुपपत्तेः । तदभ्युपगमे च तस्यैव सर्वधुरीणत्वादिति ।

प्रकृतमनुसरति—तद्युक्त इति । ननु प्रथमार्थप्रतीतेर्द्वितीयार्थप्रत्यया-हेतुत्वेन [१]तदव्यवधानाच्छब्दस्य न कारणत्वमित्याह-यत् स इत्यादि । सः शब्दः, अर्थान्तरयुक् [२]अर्थान्तरसचिवस्तत्प्रत्यायनमन्तरेणाप्रत्यायकः, तेनास्य नौदासीन्यम् । तदाह—अर्थोऽपीति । सहकारितया नोद्भटशक्तिकत्वेन, तत्र शब्दस्यैवान्वयव्यतिरेकानुविधानात् । अत एव शब्दमूलको व्यपदेश इति भावः ॥

इति श्रीपरमानन्दचक्रवर्तिकृतौ
काव्यप्रकाशविस्तारिकायां
द्वितीय उल्लासः ॥२॥

—०—

---

१. तद्व्यवधानात् ख० ।	२. अर्थान्तरसचिवः नास्ति ख० ग० ।

# तृतीय उल्लासः

**अर्थाः प्रोक्ताः पुरा तेषाम्**

अर्था वाच्यलक्ष्यव्यङ्ग्याः। तेषां च वाचकलाक्षणिकव्यञ्जकानाम्।

**अर्थव्यञ्जकतोच्यते।**

कीदृशीत्याह—

**वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसन्निधेः ॥२१॥**
**प्रस्तावदेशकालादेर्वैशिष्ट्यात् प्रतिभाजुषाम्।**
**योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा ॥२२॥**

---

शब्दस्वरूपनिरूपणानन्तरमर्थस्वरूपे शिष्यजिज्ञासायामाह—अर्था इत्यादि। पुरा 'वाच्यादयस्तदर्थाः स्युः' इत्यनेनाभिधाव्यापारविषयत्वमभिधेयत्वादिकमिति लक्ष्यपर्यालोचनयैव लक्षणलाभान्न पृथगभिधानमित्यर्थः। इदानीं किं विभक्तव्यमित्यत आह—अर्थव्यञ्जकतोच्यत इति।

ननु सापि प्रागुक्तैव, 'सर्वेषां प्रायशोऽर्थानाम्' इत्यनेन। नेत्याह—[1]कीदृशीति। किंस्वरूपा, नियन्त्रितार्थधीजनकत्वं शब्दस्य व्यञ्जकतायाः स्वरूपमितरस्याः किमित्यर्थः।

वक्ता कविः, तन्निबद्धश्च। बोद्धव्यः सम्बोध्यः, अन्यथाऽर्थस्यैव तत्त्वात्। काकुर्ध्वनेर्विकारः। तस्या विषया आकरग्रन्थे ज्ञेयाः। वाच्योऽभिधेयः, अन्यो वक्तृबोद्धव्येतरः। वाक्यं वाच्यसहितोऽन्यसन्निधिरिति विग्रहः। [2]अन्यस्यार्थानवगमप्रसङ्गात्।

प्रस्तावः (28b) प्रकरणम्, देशो विजनादिः, कालो वसन्तादिः। वैशिष्ट्याद् वैलक्षण्यात्। पञ्चम्या सहकारित्वरूपं हेतुत्वमभिहितम्, तदभावे व्यञ्जनानुदयात्। प्रतिभा वैदग्ध्यम्। तेन वैयाकरणादिषु न प्रसङ्गः। अर्थस्येत्यनेन शब्दव्युदासः। तत्रापि वक्त्रादिवैशिष्ट्यस्य

---

१. कीदृशी सेति ख० ग०। २. अन्यथाऽर्थावगम ख० ग०।

बोद्धव्यः प्रतिपाद्यः। काकुर्ध्वनेर्विकारः। प्रस्तावः प्रकरणम्। अर्थस्य वाच्यलक्ष्यव्यङ्ग्यात्मनः। क्रमेणोदाहरणानि—

अइपिहुलं जलकुम्भं घेत्तूण समागदह्मि सहि तुरिअं।
समसेअसलिलणीसासणीसहा वीसमामि खणं ॥१३॥
(गा० स० वे० ९८९)

अत्र चौर्यरतगोपनं गम्यते।

ओण्णिद्दं दोब्बल्लं चिन्ता अलसत्तणं सणीससिअं।
मह मन्दभाइणीए केरं सहि तुहवि अहह परिहवइ ॥१४॥
(गा० स० वे० ९५६)

अत्र दूत्यास्तत्कामुकोपभोगो व्यज्यते।

---

सहकारित्वानपायात्। एवकारेण व्यापारान्तरप्रमाणान्तरव्यवच्छेदः। सङ्केताद्यभावेन नाभिधादिः। अनुमानादिकं त्वग्रे निरस्यति। एवाञ्च सङ्करे यस्योद्भटता तन्मूलको व्यवहारः। क्रमेण सौत्रेण।

अकस्मादस्याः कुत एवं श्रम इति वितर्कयन्तीं सखीं प्रतीयमुक्तिः। अइपिहुलं इति।

अतिविपुलं[1] जलकुम्भं गृहीत्वा सखि समागतास्मि त्वरितम्।
श्रमस्वेदसलिलनिश्वासनिःसहा विश्राम्यामि क्षणम् ॥

जलपूर्णः कुम्भो जलकुम्भः। तस्यातिपृथुलत्वेनातिदुर्वहत्वम्। गृहीत्वा समागतास्मि, मध्ये न विश्रामः। त्वरितम्, न तु शनैः। सलिलत्वेन बाहुल्यम्। श्रमजन्याभ्यां स्वेदश्वासाभ्यां निःसहा चलितुमक्षमा।

अत्र पृथुलजलकुम्भवहनजन्योऽयम्, नान्यथा शङ्किष्ठा इति रतगोपनम्, वक्त्र्याः पुंश्चलीत्वं वैशिष्ट्यम्; कुलवधूक्तावेवमप्रतीतेः। तच्च रतगोपनं व्यङ्ग्यमेव, सङ्केताद्यभावेन वृत्त्यन्तराविषयत्वात्। सा च शब्दान्वयव्यतिरेकाननुविधानादर्थस्यैव वृत्तिः। एवमुत्तरत्र।

औन्निद्र्यं दौर्बल्यं चिन्तालस्यं सनिःश्वसितम्।
मम मन्दभागिन्याः कृते सखि तवापि परिभवति ॥

तवेति कर्मणि षष्ठी, परिभवस्य हिंसार्थत्वात्। अह केरं मदीयमिति वा। न चान्यदीयमौन्निद्र्यादिकं नान्यस्य [2]परिभावकम्, समदुःख-

---

१. पृथुलं ख, ग०। २. विभावकं ख०।

तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां
वने व्याधैः सार्धं सुचिरमुषितं वल्कलधरैः ।
विराटस्यावासे स्थितमनुचितारम्भनिभृतं
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु ॥१५॥

( वेणीसं० १।११ )

अत्र मयि न योग्यः खेदः, कुरुषु तु योग्य इति काक्वा प्रकाश्यते ।

---

सुखत्वेन सख्यास्तत्सम्भवात् । अत एव सखीति सम्बोधनम् । सजातीयलक्षणायान्तु तेन नायिकाया अपरिभवादप्यर्थस्य [१]साहित्यस्यानुपपत्तेः । संबोद्धव्यस्य दुःशीलता वैशिष्ट्यम् , अस्यां दुःशीलायामेवौन्निद्र्यादिकम् । तत्सम्भोगानन्तरं तदुपेक्षणेनैवेत्याह—कामुकोपभोग इति । एतेनौन्निद्र्यादिकं सजातीयं लक्षयतीति यदन्यैरुक्तम् , तन्न युक्तं लक्ष्यव्यङ्ग्ययोश्च व्यञ्जकत्वम् , अनेनैव क्रमेणोदाहार्यमिति वक्ष्यमाणग्रन्थविरोधात् । उदाहार्यमिति कृत्यस्य भविष्यत्वार्थत्वात् । न च दर्शितोदाहरणेन [२]निश्चेयमिति तस्यार्थः । एवं लक्षणापत्तेरप्यर्थान्वयानुपपत्तेरुक्तत्वाच्च ।

तथाभूतामित्यादि । सहदेवे भीमप्रश्नोऽयम् । ( 29a ) दृष्ट्वेति प्रतिकर्मणि सम्बध्यते । तथाभूतां स्त्रीधर्मिणीं दुःशासनाकृष्टकेशपाशां भवत्सन्निधावपि कथयितुमयोग्यां[३] नृपैरेव सदः [ नृपसदसि ? ] पाञ्चालतनयां राजपुत्रीम् , जन्मप्रभृत्यपरिभूताम् , अस्मत्परिग्रहेणैव तदवस्थाम् , व्याधैः, न तु वानप्रस्थनृपादिभिर्वल्कलधरैरित्यत्रास्माभिरिति विशेष्यमध्याहार्यम् । विराटो मत्स्यराजः, आवासे गृहे । परगृहनिवासो मरणादपि गुरुः । उषितमिति, स्थितमिति च भावे । आरम्भो वेशः कर्म वा । निभृतं गुप्तम्, गुरुः साक्षादनभियोज्यः । खिद्यतेऽनेनेति खेदो मात्सर्यम् । खिन्ने ग्लाने इत्थमित्यध्याहार्यम् । प्रकारान्तरेण खिन्ने [४]खेदभजनानौचित्यानुपपत्तेः । खिन्ने खेदं भजतीत्यत्यन्तानौचित्यम् । तदाह—न मयि योग्यः खेदः, कुरुषु तु योग्य इति ।

---

१. साहित्यस्य नास्ति क० ।
२. निश्चेतव्यं क० ।
३. नृपैरेवेदं सदः च ।
४. खेदकजननानौचित्यात् ख० ।

न च वाच्यसिद्ध्यङ्गमत्र काकुरिति गुणीभूतव्यङ्ग्यत्वं शङ्क्यम्, प्रश्नमात्रेणापि काकोर्विश्रान्तेः ।

---

ननु नृपतेः परिदृश्यमानं पाञ्चालतनयादीनां तथाभूतत्वादि-स्वापकर्षस्तत्कारिषु [1]कुरुषु मात्सर्यहेतुः, तत एव दुर्मनायमाने भीमसेने च तत्प्रतिबन्धकम्, इह तु वैपरीत्यपर्यवसितो वाक्यार्थो यदेवं तदनुचित-मित्यनौचित्यम्, व्यङ्ग्यमादायैव पर्यवस्यति। ततश्च नार्थी व्यञ्जना स्यात्।

व्यङ्ग्यसिद्धौ वाक्यार्थसिद्धिः, तत्सिद्धौ च व्यङ्ग्यस्येत्यन्योन्या-श्रयापत्तेरिति निगूढमभिसन्धायाह—न चेति। वाच्यं गुरुनये [2]वाक्यार्थस्तस्य सिद्धिः पर्यवसानम्। तदङ्गं तत्कारकम्।

अथ वाक्यार्थं साधयित्वा चमत्कारहेतुत्वेन स्वस्मिन् विश्रान्तस्य तस्य व्यङ्ग्यस्य वाक्यार्थोत्तरत्वेन सिद्धं तन्मूलत्वमित्याह—गुणीभूते-त्यादि। गुरुर्यदेवं करोति तदनुचितमिति व्यङ्ग्यघटितवाक्यार्थस्य भीमसेनगतक्रोधप्रकर्षकत्वेन[3] वाक्यार्थादनधिकचमत्कारितया स्वविश्रा-न्त्यभावेन वाक्यार्थानुभवत्वान्न तन्मूलकत्वं स्यादिति शङ्कार्थः।

प्रश्नेत्यादि। काकोरिति व्यङ्ग्यव्यञ्जकसम्बन्धे षष्ठी। काकुव्य-ङ्ग्येनेत्यर्थः। मात्रपदेनानौचित्यवारणम्[4]। अपिरेवार्थे। मात्रापिपदाभ्या-मन्ययोगायोगव्यवच्छेदः। विश्रान्तेः, अर्थाद् वाक्यार्थस्य।

अत्रायमभिसन्धिः—न हि काकुस्तद्व्यङ्ग्यश्च प्रश्नः, दुर्भगोऽहं नृपतेः सुभगे भ्रातरि तदाशयविज्ञे त्वयि पृच्छामि यदेवं गुरुः करोति तत् कथमित्येवंरूपः, ततश्च वाच्यनिषेधसमकालं काकुप्रत्याय्यमानप्रश्न-साचिव्यात् पर्यवसितेन वाक्यार्थेनानौचित्यव्यञ्जनम्। स च ध्वनिरेव। भीमसेनगतक्रोधप्रकर्षहेतुत्वादनौचित्यकारिणि क्रोधो( 296 )द्रेकस्या-नुभविकत्वादित्यन्योन्याश्रयत्वविरहादार्थी व्यञ्जना सिद्धैवेति भावः। यत्तु खिन्न इत्यत्र सोपहासोत्प्रासकाकानौचित्यं ध्वनितमित्याहुः, तन्न; प्रश्नकाकैव तदुपपत्तौ काक्वन्तरादरे मानाभावात्।

---

१. कुरुषु नास्ति ख० । २. वाक्यार्थतस्तस्य क० ।

३. क्रोधत्वेन ख० । ४. कारणं क० ।

तइआ मह गण्डत्थलणिमिअं दिट्ठिं ण णेसि अण्णत्तो ।
एण्हिं सच्चेह अहं ते अ कवोला ण सा दिट्ठी ॥१६॥

( गा० स० वे० ६३६ )

अत्र मत्सखीं कपोलप्रतिबिम्बितां पश्यतस्ते दृष्टिरन्यैवाभूत्, चलितायां तु तस्यामन्यैव जातेत्यहो प्रच्छन्नकामुकत्वं त इति व्यज्यते ।

उद्देशोऽयं सरसकदलीश्रेणिशोभातिशायी
कुञ्जोत्कर्षाङ्कुरितरमणीविभ्रमो नर्मदायाः ।
किञ्चैतस्मिन् सुरतसुहृदस्तन्वि ते वान्ति वाता
येषामग्रे सरति कलिताकाण्डकोपो मनोभूः ॥१७॥

( व० जी० पृ० ६२ )

---

किञ्च, कथमुपहसितमित्युपहासस्य स्वकारणीभूतमनौचित्यज्ञानं विना न पर्यवसानमिति वाच्यसिद्ध्यङ्गतायास्तादवस्थ्यापातात्, गुरुत्वोपादाने साक्षादुपदेशानौचित्याच्च[1] ।

तदा मम गण्डस्थलनिमग्नां दृष्टिं न नयस्यन्यत्र ।
इदानीं सैवाहं तौ च कपोलौ न सा दृष्टिः ॥

निमग्नाम्, न तु स्थिताम् ।

अत्रेति । मद्भयाद् बिम्बमपहाय प्रतिबिम्बदर्शनम् । अन्या स्निग्धा निमेषाभावरूपा त्वन्या, उत्कर्षान्नोद्विग्नरूपा । जातेति दृष्टेर्जन्मान्तरम् । अहो इति इयत्कालं गोपनेन गमितमित्याश्चर्यम् ।

अत्र दण्डायमानकालस्य तदेत्यतीततावच्छेद औपाधिक एवान्यस्याभावात् । सखीसान्निध्यातीततैवोपाधिरिति तदेदानीमिति प्रविच्छिन्नवाक्यवैशिष्ट्यम् ।

ऊर्ध्वो देशः उद्देशः । स्खलनभयेन सञ्चरतामनवलोकनीयः । कदल्याः श्रेणीत्वेन वेष्टनं सरसत्वेन शुष्ककदलीविरहः, कुञ्जस्योत्कर्षः कुसुमसमृद्ध्यादिः । अङ्कुरणमभूत् प्रादुर्भावः । यस्याः कदापि नासीत्, तस्यामपि दृश्यमानत्वात् । नर्म ददातीति नर्मदा, न तु नदीमात्रम् । श्रमापनयने पुनः पुनः प्रवर्तनया सुहृदः कृशत्वेन यः श्रमः [2]सोऽपि

---

१. साक्षादुपहासानौचित्याच्च च० । २. स नोपयास्यति च० ।

अत्र रतार्थं प्रविशेति व्यङ्ग्यम्।

णोल्लेइ अणोल्लमणा अत्ता मं घरभरम्मि सअलम्मि।
खणमेत्तं जइ संझाइ होइ ण व होइ वीसामो ॥१८॥
(गा० स० वे० ८७५)

अत्र सन्ध्या सङ्केतकाल इति तटस्थं प्रति कयाचिद् द्योत्यते।

सुव्वह समागमिस्सदि तुज्झ पिओ अज्ज पहरमेत्तेण।
एमेअ कित्ति चिट्ठसि ता सहि सज्जेसु करणिज्जं ॥१९॥
(गा० स० वे० ६६२)

अत्रोपपतिं प्रत्यभिसर्तुं प्रस्तुता न युक्तमिति कयाचिन्निवार्यते।

---

यास्यति। वान्ति सुरभितया वहन्ति। वृत्तावितरवर्तमानता। अकाण्डकोपोऽप्रस्तावरोषः। मनोभूः सर्वजनदुष्परिग्रहः। अत्र नर्मदोद्देशस्योक्तविशेषणवशात् कामुकाभिप्रायः प्रकाश्यते।

नुदति अनार्द्रमना श्वश्रूर्मां गृहभरे सकले।
क्षणमात्रं यदि सन्ध्यायां भवति न भवति वा विश्रामः॥

अणण्णमणा इति पाठे अनन्यमना इत्यर्थः। अणुसस्मणा इत्यपि पाठः, तदा न विद्यते उष्णं यस्मादेवं मनो यस्याः। होइ इत्यनन्तरं णवरेत्यपि पाठः। केवलमित्यर्थः। सन्ध्येति, तस्यामेव प्राप्तावसरत्वात्। तटस्थं निकटस्थम्, यद्वा वाच्यार्थं प्रत्युदासीनम्, व्यङ्ग्ये तु जीवितसर्वस्वं सङ्केतार्थिनम्। जनान्तरसन्निधौ नैवमभिधानमिति सन्निधिवैशिष्ट्यम्।

श्रूयते समागमिष्यति तव प्रियोऽद्य प्रहरमात्रेण।
एवमेव किमिति तिष्ठसि (30a) तत्सखि सज्जय करणीयम्॥

श्रूयते, न तु श्रुतं सम्यक्। पूर्णकाम आगमिष्यति। तुज्झ पिये इति सोल्लुण्ठम्। एवमेव तदुपयोगिसम्भारं विना करणीयं रन्धनादिकं सज्जय सोत्कर्षं निर्वाहय।

अत्रेति। इयमस्याः समुदितरहस्यवेशविन्यासससमयेऽकस्माद् गृहेश्वरागमनं प्रस्तावयति। तस्मादभिसरणं वारयतीति प्रस्ताववैशिष्ट्यम्।

---

१. वृत्तौ वाधातोः लक्षणावृत्तिलभ्ये सुरभितया वहन्तिरूपेऽर्थे इतरस्य वातशब्दबोध्योद्देश्यभूतादर्थादधिकस्य सौरभस्य वर्तमानतासमावेशः अतोविधेयगर्भेऽधिकार्थप्रवेशादुद्देश्यतावच्छेदकविधेययोरेकतया न वाता वान्तीत्यत्र शाब्दबोधानुपपत्तिरित्याशयः।

अन्यत्र यूयं कुसुमावचायं
कुरुध्वमत्रास्मि करोमि सख्यः ।
नाहं हि दूरं भ्रमितुं समर्था
प्रसीदतायं रचितोऽञ्जलिर्वः ॥ २० ॥

अत्र विविक्तोऽयं देश इति प्रच्छन्नकामुकस्त्वयाऽभिसार्यतामित्याश्वस्तां प्रति कयाचिन्निवेद्यते ।

गुरुअणपरवस पिअ किं भणामि तुइ मन्दभाइणी अहकं ।
अज्ज पवासं वच्चसि वच्च सअं जेव्व मुणसि करणिज्जं ॥२१॥
(गा० स० वे० ८५१)

अत्राद्य मधुसमये यदि व्रजसि तदाऽहं तावन्न भवामि, तव तु न जानामि गतिमिति व्यज्यते ।

---

अन्यत्र, इतो दूरं प्रलोभयति, अवचायमिति । चेरहस्तादान इति घञर्थेन कुसुमस्य हस्तप्राप्यत्वात् । अस्मीत्यहमर्थो मुख्योऽपरिहार्यप्रणया । हेतुमाह—नाहमिति । सर्वास्वेकोऽञ्जलिरिदमप्यसामर्थ्येन ।

अत्रेति । विविक्तो विजनः । विविक्तस्य देशस्य वैशिष्ट्यम् । प्रच्छन्नकामुकः कामुकत्वेनाविदितः, अत एवानभिशङ्किताभ्यागमनः । यत्तु सदा संविधानयोग्यवैद्यादिवेशेन गुप्त इत्यर्थ इत्याहुः, तन्न; तदा प्रच्छन्नमिति क्रियाविशेषणं स्यात्, वेशग्रहणस्य पूर्वमसिद्धत्वात् ।

गुरुजनपरवश प्रिय किं भणामि तव मन्दभागिन्यहम् ।
अद्य प्रवासं व्रजसि व्रज स्वयमेव [1]जानासि करणीयम् ॥

जनोऽविदग्धः, वसन्तसमये प्रवासप्रेरणात् । स एव परः शत्रुस्तदायत्तः सन्निति मन्दभाग्येन तवापीयं मतिः । अद्य प्रतिदिनोपचीयमानवसन्तसमये । अत्र मदनैकजीवातोर्विरहिप्रमाथकस्य वसन्तस्य कालस्य वैशिष्ट्यम् ।

---

1. मुणसीति प्राकृतस्य जानासीति संस्कृतच्छाया "ज्ञो जाणमुणौ" (प्रा० प्र० सू० ७।६५; सं० बलदेव उपाध्यायः, वा० सं० वि० वि०, वाराणसी, १९७०) इत्यनेन 'ज्ञा' धातोः मुणादेशत्वात् । सुणसीति पाठं प्रकल्प्य श्रोष्यसीति छाया क्वचिद् दृश्यते ।

आदिग्रहणाच्चेष्टादेः । तत्र चेष्टाया यथा—

द्वारोपान्तनिरन्तरे मयि तया सौन्दर्यसारश्रिया
प्रोल्लास्योरुयुगं परस्परसमासक्तं समासादितम् ।
आनीतं पुरतः शिरोंऽशुकमधः क्षिप्ते चले लोचने
वाचस्तत्र निवारितं प्रसरणं सङ्कोचिते दोर्लते ॥२२॥

अत्र चेष्टया प्रच्छन्नकान्तविषय आकूतविशेषो ध्वन्यते ।

निराकाङ्क्षप्रतिपत्तये प्राप्तावसरतया च पुनः पुनरुदाह्रियते । वक्त्रादीनां मिथः संयोगे द्विकादिभेदेन । अनेन क्रमेण लक्ष्यव्यङ्ग्ययोश्च व्यञ्जकत्वमुदाहार्यम् ।

---

द्वारेत्यादि । निरन्तरे निबिडसंलग्ने । सौन्दर्यसाराणां श्रीः सम्पत्तिर्यत्र । प्रोल्लास्य विस्फार्य । अधः क्षिप्ते अपि चले । 'कटाक्षेण सञ्चार्यते च ते' इति पाठे तादृशलावण्यलहरीपरिपूर्णे । वाचस्तत्प्रसरणं सखीषु प्रवर्तितां सत्कथाम् । सङ्कोचिते कफोणिद्वयमेकीकृत्य परस्परसंयुक्ते ।

अत्रेति । प्रच्छन्नो भावपरीक्षार्थं द्वारोपान्तलीनः कान्तः । आकूतविशेष एवमयमनुरागं प्रत्यवेदित्यभिप्रायात्मा आकूतविशेषो भावविशेषः; सम्भोगसञ्चारिलज्जालक्षण इत्यन्ये ।

ननु 'अइ पिहुलम्'इत्यत्र वाच्यवक्तृबोद्धव्यानां 'गुरुअणे'त्यत्र 'अद्ये'ति काकुबोद्धव्यवक्तृकालगुर्वित्यलङ्घनीयाज्ञत्ववाच्यानां सङ्करेण वैशिष्ट्ये द्वित्रोदाहरणेनैव याति, किमेतावतेत्याह—निराकाङ्क्षेति । मिलितेषु कस्य व्यञ्जकत्वमिति सन्देहे यत्र यस्य प्राधान्यम्, तस्य तत्र व्यञ्जकत्वम् । अन्येषामानुगुण्यमात्रमिति व्युत्पत्तये । द्वौ परिमाणमस्येति (30b) द्विकं तत्तद्द्वयोः प्राधान्यम् । यथा 'अइ पिहुलम्'इत्यत्र वक्तृबोद्धव्ययोः । त्रयाणां यथा 'गुरुअणे'त्यत्र वक्तृबोद्धव्यकाकूनाम् । एवमन्यत्र ।

यत्तु मिश्रेण 'तइ आह'इत्यत्र वक्तृप्रतिपाद्यतत्प्राणेश्वरीरूपान्यसन्निधीनां त्रयाणां वैशिष्ट्यमुक्तम्, तदसत्; तत्सन्निध्यभावप्रयुक्तदृष्टिवैजात्यस्यैव व्यञ्जकत्वात् । अनेन क्रमेणैकद्वित्रादिरूपेण वक्तृबोद्धव्यवैशिष्ट्यं लक्ष्यस्य व्यञ्जकत्वम्, यथा 'साहेन्ती'त्यादौ, अन्यसन्निधिवक्तृवैशिष्ट्ये व्यङ्ग्यस्य यथा 'उअ णिच्चल' इत्यादौ । उदाहार्यमिति व्याख्यातमेव ।

**शब्दप्रमाणवेद्योऽर्थो व्यनक्त्यर्थान्तरं यतः ।**
**अर्थस्य व्यञ्जकत्वे तच्छब्दस्य सहकारिता ॥२३॥**

शब्देति न हि प्रमाणान्तरवेद्योऽर्थो व्यञ्जकः ।

इति काव्यप्रकाशेऽर्थव्यञ्जकतानिर्णयो नाम
तृतीय उल्लासः ॥३॥

---

नन्वेवमर्थस्य प्रमाणान्तरत्वं स्यात् तदसाधारणसहकारेण मनसा व्यङ्ग्यप्रमापकत्वादित्यत आह–शब्देति । तद्बोध्यत्वेनैवार्थस्य व्यञ्जकतया तदन्वयव्यतिरेकाभ्यां तस्यैव प्रमाणतेत्याह—प्रमाणेति । तस्यैवार्थस्य प्रमाणान्तरलभ्यत्वेनाव्यञ्जकत्वात् । तदाह–न हीति । प्रत्यक्षोपस्थिते कामिमिथुने तच्चेष्टयाऽनुमिते च रत्यादावास्वादानुदयात् । अर्थस्य तत्र प्रधाना शक्तिरिति व्यञ्जनायास्तन्मूलकत्वमिति सर्वमनाकुलम् ।

केचित्तु काव्यशब्दानां वाक्यार्थप्रामाण्यनैयत्येऽपि रसरूपप्रमित्ययोगव्यवच्छेदेन प्रामाण्यावश्यम्भाव इति सूचनाय प्रमाणपदमित्याहुः ॥

इति श्रीपरमानन्दचक्रवर्तिकृतौ
काव्यप्रकाशविस्तारिकायां
तृतीय उल्लासः ॥३॥



# चतुर्थ उल्लासः

यद्यपि शब्दार्थयोर्निर्णये कृते दोषगुणालङ्काराणां स्वरूपमभिधानीयम्, तथापि धर्मिणि प्रदर्शिते धर्माणां हेयोपादेयता ज्ञायत इति [1]प्रधानकाव्यभेदानाह—

**अविवक्षितवाच्यो यस्तत्र वाच्यं भवेद् ध्वनौ।**
**अर्थान्तरे संक्रमितमत्यन्तं वा तिरस्कृतम् ॥२४॥**

---

काव्यस्य शब्दार्थौ विशेष्यम्, दोषादयो विशेषणानि। तत्र विशेष्यनिरूपणानन्तरं विशेषणनिरूपणमुचितमिति तद्वारणायाह—यद्यपीति। अभिधानीयमभिधातुं योग्यम्। धर्माणां [2]रसस्यापकर्षोत्कर्षस्वरूपाणाम्, अत एव तन्मुखेनैव व्यवतिष्ठमानानां तेषां रसधर्मिनिरूपणाधीनमेव निरूपणमिति रसध्वनिगुणीभूतव्यङ्ग्ये निरूपयितव्ये प्रसङ्गादन्येषामपि निरूपणमित्याह —धर्मिणीति। साक्षात्सम्बन्धेन रसे, व्यङ्ग्यव्यञ्जकभावेन च काव्ये। तेन काव्यप्रभेदप्रदर्शनं नार्थान्तरमिति। प्रदर्शिते [3]सपरिकरं निरूपिते। हेयत्वं दोषाणाम्, उपादेयत्वं गुणालङ्काराणाम्।

प्रथमं रसादिनिरूपणात् प्राग् व्यङ्ग्यज्ञानस्य व्यञ्जकज्ञानाधीनत्वात् काव्यभेदान् ध्वन्यादीन् आह—"तद् भेदनि[4]रूपणमर्थवत्" इति। तत्र लक्षणामूलस्य व्यङ्ग्यस्य प्रागुक्तत्वादन्याविषयत्वाच्च प्रथमं तद्भेदमाह—(3।a) अविवक्षितेत्यादि। अविवक्षितता वाच्यताऽवच्छेदकप्रकारेण, 'कुन्ताः प्रविशन्ति' इत्यादौ वाच्यस्यापि विवक्षणादर्थान्तरे शक्यताऽनवच्छेदके तात्पर्यविषयतावच्छेदके संक्रमितं विवक्षितान्वयनिर्वाहायानुप्रवेशितम्। तात्पर्यग्राहकस्य प्रयोजकत्वेन [5]णिचः प्रयोगः। अत्यन्तमिति। सर्वथाऽनन्वयित्वात् तिरस्कारः। इमे उपादानलक्षणारूपे।

---

१. प्रथममिति क्वाचित्कः पाठः।
२. रसस्योत्कर्षापकर्ष० ख०।
३. सपरिकरे ग०।
४. निरूपणाय ग०।
५. णिच्प्रयोगः ख० ग०।

लक्षणामूलगूढव्यङ्ग्यप्राधान्ये सत्येवाविवक्षितं वाच्यं यत्र स ध्वनावित्यनुवादाद् ध्वनिरिति ज्ञेयः ।

तत्र च वाच्यं क्वचिदनुपयुज्यमानत्वादर्थान्तरे परिणमितम् । यथा—

---

यत्तु 'कदली कदली'इत्यादौ द्वितीयकदल्यादिपदे [1]'जडत्वादिलक्षणायामर्थान्तरेषु विशेषरूप इत्याहुः, तन्न; कुन्तेत्यादावव्याप्त्यापत्तेः । कुन्तपुरुषयोः सामान्यविशेषभावविरहात् । जडत्वादिलक्षणयैव वोपपत्तौ शक्यानानुप्रवेशाच्च[2] ।

अविवक्षितवाच्यपदेन रूढ्यभावेऽपि योगेनैव लक्षणामूलध्वन्यभिधामूलाभिधानमित्याह— [3]अविवक्षितं वाच्यं यत्रेति । अतिप्रसङ्गमाशङ्क्य सत्यन्तेन विशेषयति । निरूढलक्षणावति ध्वनेर्निरसनाय लक्षणामूलेति । तन्मूलं तदन्वयव्यतिरेकानुविधायि, निष्प्रयोजनाया [4]निरूढाया व्यङ्ग्यानुपजीव्यत्वात् । गुणीभूतव्यङ्ग्यवारणाय गूढेति । गूढत्वेनागूढव्युदासः । प्राधान्यमनङ्गत्वम् । तेनापराङ्गवाच्यसिद्ध्यङ्गयोरस्फुटसन्दिग्धप्राधान्यतुल्यप्राधान्यासुन्दरेषु न लक्षणामूलता, तत्तद्व्यङ्ग्योद्देशेन तस्या अप्रवृत्तेः । काकाक्षिप्तेऽपि न लक्षणा, अन्वयानुपपत्तेर्विरहादिति ।

नन्वेवं विशेष्ये वैयर्थ्यम्, अव्यावर्तकत्वात्; मैवम्; अन्यथा लाक्षणिकसिंहपदे 'हरिः सिंहः' इत्यत्र सिंहकृष्णयोरभिधामूलरूपकध्वनावतिप्रसङ्गात्, तस्य च सिंहपदवाच्यत्वलक्षणान्वयव्यतिरेकानुविधायित्वम्, अन्यथा पौनरुक्त्येन वाक्यार्थाप्रतीतौ तदप्रतीतेः । न च विशेष्येण वारणम्, वाच्यतावच्छेदकेन सिंहत्वेनैवान्वयस्य विवक्षितत्वात् । ननु कथमविवक्षितेत्यत्र ध्वनौ तात्पर्यमित्याह—ध्वनावित्यनुवादादिति । अनुवादस्य पुरोवादतात्पर्यग्राहकत्वात् ।

विभागमाह—तत्रेति । अनुपयुज्यमानं वाच्यतावच्छेदकेन रूपान्तरेण तु स्यादेवेत्यत आह—परिणमितमिति । अवस्त्वन्तरं परिणामः । यथा फलस्य श्यामावस्थातः पाकः, तथा 'कुन्ताः प्रविशन्ति'इत्यत्र कुन्तस्य कुन्तत्वादन्यस्तत्संयोगः ।

---

१. जडकदलीत्व ख० ग० । २. च नास्ति ग० ।
३. अविवक्षितवाच्यं ख० ग० । ४. निरूढायाः नास्ति ग० ।

त्वामस्मि वच्मि विदुषां समवायोऽत्र तिष्ठति ।
आत्मीयां मतिमास्थाय स्थितिमत्र विधेहि तत् ॥२३॥
( रु० का० अ० ६।२५ )

अत्र वचनाद्युपदेशा[1]दिरूपतया परिणमति ।

---

त्वामित्यादि । आत्मीयामित्यादि द्वितीयार्धेन लब्धे । तेन 'त्वामस्मि वच्मि' इत्यादेः प्रत्यक्षावगतौ विदुषामित्यादेश्चानुप ( 31b ) युज्यमानता । स्वमत्यवलम्बनस्यावश्यम्भावेनात्मीयामित्यादेश्च । स्थित्यवलम्बनस्य सिद्धत्वेन तदुपदेशस्याप्यनुपयुक्तता । तेन लक्षणा ।

तदाह—वचनादीति । वचनं क्रियात्वादुपदेश्यम्, अहमुपदेष्टा वच्मि उपदिशामीति । वचनादीनामुपदेशादिरूपेण [2]परिणतिः, अवश्यवाच्यहिताहितत्वालङ्घनीयाज्ञत्वादपरग्राह्यत्वादीनि[3] तद्विशेषा व्यज्यन्ते । एवं विदुषामनन्यसाधारणज्ञानवतां समवायः परस्परापेक्षता[4] । आशु विपक्षपक्षे दूषकत्वं सर्वग्राह्यैकपक्षत्वञ्च फलम् । आत्मीयां पराप्रतार्य्यामदुष्टपक्षोद्भावनं फलम्, स्थितिं सावधानां विपक्षछिद्रप्रेक्षित्वं फलमित्यूहनीयम् ।

'ननु त्वामस्मि' इत्यनयोरपि लक्षणायां कथं वचनादिः ? इत्यत्र नव्याः—[5]कुटादिरित्यत्रेव वचनस्यादिर्वचनमादिर्यस्येति समासद्वयाश्रयणात् सर्वपरिग्रह इत्याहुः । सर्वनाम्नि लक्षणाविरहेण 'त्वाम्' इत्यादिपरिहार इत्यन्ये, तन्न; युस्मदस्मदोः सम्बोध्यात्मकत्वस्वतन्त्रोच्चारयितत्वाभ्यां शक्तौ तदन्यरूपेण लक्षणाया दुर्निवारत्वात् । यत्तदोरेव तथा नियमः, बुद्धिस्थताऽवच्छेदकेन घटत्वपटत्वादिनैव तयोः शक्तेः । 'वच्मि' इत्यत्र स्फुटमनुपयोग इति । तदादित्वमित्यपरे, तदप्यसत्; आदिपदस्य पूर्वाग्राहकत्वतादवस्थ्यात् । वस्तुतस्तु [6]अनुपयुज्यमानतया वचनस्यानभिधाने तत्कर्मकर्त्रोरनभिधानं दण्डापूपिकयेति तयोस्तन्मुखप्रेक्षित्वेन

---

१. उपदेशरूप० इति क्वाचित्कः पाठः ।  २. परिणतौ ग० ।
३. ग्राह्यत्वानि ख० ग० ।  ४. सापेक्षता ख० ग० ।
५. कूटादिरित्यत्रैव च० ।  ६. उपयुज्यमानतया क० ।

क्वचिदनुपपद्यमानतयाऽत्यन्तं तिरस्कृतम् । यथा—

उपकृतं बहु तत्र किमुच्यते
सुजनता प्रथिता भवता परम् ।
विदधदीदृशमेव सदा सखे
सुखितमास्स्व ततः शरदां शतम् ॥ २४ ॥

एतदपकारिणं प्रति विपरीतलक्षणया कश्चिद् वक्ति ।

**विवक्षितं चान्यपरं वाच्यं यत्रापरस्तु सः ।**

अन्यपरं व्यङ्ग्यनिष्ठम् ।

एष च—

**कोऽप्यलक्ष्यक्रमव्यङ्ग्यो लक्ष्यव्यङ्ग्यक्रमः परः ॥२५॥**

अलक्ष्येति । न खलु विभावानुभावव्यभिचारिण एव रसः, अपि तु

---

तदादितोक्तिः। अनुपयुक्तौ निराकाङ्क्षत्वं लक्षणाबीजम्। अनुपयुज्यमानत्वाच्छक्यतावच्छेदकेन तात्पर्यविषयतावच्छेदकेन चानन्वयित्वादित्यर्थः ।

तिरस्कारोऽन्वयाप्रतियोगित्वम् । उपकृतिमिति । तत उपकारात् ।

ननु कथमत्र लक्षणेत्यत आह—एतदिति । अपकारित्वं प्रकरणावसेयम् । वैपरीत्यं शक्यसम्बन्धः, भावाभावरूपतयोपकारस्य तिरस्कारः, अपकारातिशयश्च व्यङ्ग्यः । अविवक्षितवाच्यस्यार्थान्तरसंङ्क्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्चेति द्वौ भेदौ ।

विवक्षित वाच्यध्वनिमाह—विवक्षितमित्यादि । वाच्यतावच्छेदकेन विवक्षितम् । तेनार्थान्तरसंङ्क्रमितवाच्याद् व्यवच्छेदः । तत्र रूपान्तरेणैव वाच्यविवक्षणात् । वाच्यविवक्षायां न ध्वनित्वमित्याह—अन्यपरमिति । तद्विवृणोति—व्यङ्ग्यनिष्ठमिति ।(32a) तदाक्षेपकत्वेन तत्र विश्रान्तमित्यर्थः ।

तद्भेदाभिधानाय तमनुकर्षति—एष चेति । लक्षणास्थले तु वाच्यापेक्षया[१] व्यङ्ग्यक्रमलक्षणनियमेन भेदान्तराभावान्नात्र तदनुवादः । कोऽप्येकः[२] । अलक्ष्योऽज्ञेयः क्रमो यस्य, एवं व्यङ्ग्यो यत्र ।

नन्वक्रम इत्युच्यतामित्यत आह—न खल्विति, एवेति[३] । तन्मात्रस्य रसत्वे सहृदयासहृदयत्वव्यवस्था न स्यात् । अपि त्विति । अत्र हि

---

१. वाच्यापेक्षायां ग० । २. एषः ग० ।
३. एवेति नास्ति क० ।

रसस्तैरित्यस्ति क्रमः, स तु लाघवान्न लक्ष्यते ।

[1]वाक्यार्थीभूय स्फुरद्भिर्विभावादिभिरभिव्यक्तानां ज्ञानसुखस्वरूपाणां रत्यादिस्थायिभावानां विषयतां प्राप्ता विभावाद्यो रत्यादयो मिलिताः पानकरस इव समूहालम्बनात्मको रस इत्याह—तैरित्यादि । तैः [2]सहेत्येर्थः । तेन प्रत्येकविभावादिज्ञानानन्तरमेव समूहालम्बनमित्याह—इतीति । कालस्य सूक्ष्मत्वादलक्षत्वम्, आस्वादेन झटिति चित्ताकर्षणादयोग्यस्य सूक्ष्मकालस्यानुपलब्धे नाभावसाधकत्वमित्यलक्ष्यक्रम इत्युक्तम्—न अक्रम इति ।

केचित्तु—अभिव्यज्यत इत्यध्याहारेण तैरभिव्यज्यत इत्यन्वयमाहुः । किञ्च, वस्त्वलङ्कारयोरनुमानादिनावगमे क्रमलक्षणसम्भव इति योग्यतया लक्ष्यक्रमत्वाभिधानम् । रसादौ [3]तु पुनरनुमानासम्भवेन तद्योग्यतेत्यलक्ष्यक्रमत्वमिति । केचित्तु रसादौ वर्णादित आरभ्य विभावादिपर्यन्तं [4]रसानुवेधनियमान्न क्रमलक्षणम् । वस्त्वलङ्कारयोस्तु रसव्यञ्जकापेक्षया व्यञ्जकस्यात्यन्तविजातीयत्वेन क्रमलक्षणमित्याहुः । साम्प्रदायिकास्तु रसवति काव्ये वस्त्वलङ्कारयोरपि क्रमो न लक्ष्यत एव, नीरसे तु प्रहेलिकादौ क्रमलक्षणात् तत्साजात्येन तथा व्यवहार इत्याहुः । लक्षणामूले तु लक्ष्यफलप्रतीत्योर्व्यञ्जकव्यङ्ग्ययोः क्रमाव्यभिचारेण न तन्मूलकभेदगणना[5] ।

यत्तु मिश्रेणोक्तम्—[6]तादात्म्यस्याभानमात्रस्य प्ररोहाभावात् केन सह क्रमविचारः स्यादिति, तदयुक्तम्; आभानमात्रत्वेऽपि क्रमस्य दुर्निवारत्वात् । लक्ष्यप्रतीत्यपेक्षया सुतरां [7]तत्सम्भवाच्च ।

ननु विषयालोकयोरिव सहप्रतीतावेव व्यङ्ग्यव्यञ्जकता, तत् कथं क्रम इति चेन्न; विभावादिज्ञानस्यैव व्यञ्जकत्वात् । सति विभावादौ तदज्ञाने रसानुद्बोधात् । एवं वस्त्वलङ्कारयोरपि (32b) प्रत्यक्षसहकारिण आलोकस्य स्वरूपसत एव हेतुत्वमिति न दोषः । अत एव "स्वरूपं प्रकाशयन्नेव परावभासमानो व्यञ्जकः" इति ध्वनिकारोक्तमपि सङ्गच्छते ।

१. वाक्यार्थीरूप क० ।　　२. समूहेत्यर्थः ख० ।
३. तु नास्ति ख० ग० ।　　४. रसानुबोध ग० ।
५. गणनं ख, ग० ।　　६. तादात्म्याभाव क० ख० ।
७. सङ्करााच्च ग० ।

तत्र च[1]—

**रसभावतदाभासभावशान्त्यादिरक्रमः ।**

**भिन्नो रसाद्यलङ्कारादलङ्कार्यतया स्थितः ॥२६॥**

आदिग्रहणाद् भावोदय-भावसन्धि-भावशबलत्वानि । प्रधानतया यत्र स्थितो रसादिस्तत्रालङ्कार्यः, यथोदाहरिष्यते । अन्यत्र तु प्रधाने वाक्यार्थे यत्राङ्गभूतो रसादिः,तत्र गुणीभूत-व्यङ्ग्ये रसवत्-प्रेय-ऊर्जस्वि-समाहितादयोऽलङ्काराः । ते च गुणीभूतव्यङ्ग्याभिधाने उदाहरिष्यन्ते ।

---

स्वप्रकाशकत्वेन विभावादिज्ञानस्य स्वज्ञापकत्वादास्वादोद्बोधक-त्वाच्च । रसभावेत्यादि । रसश्च भावश्च तयोराभासौ च भावस्य शान्त्या-दयश्च । अक्रम इति । अनुदरेत्यादाविव नञ ईषदर्थता । 'अयं स रसना' इत्यादौ गुणीभूतव्यङ्ग्येऽतिप्रसङ्गवारणाय भिन्न इत्यादि । हेतुमाह—अलङ्कार्यतयेति । स्थितः स्थिरतामापन्नः । प्रत्युदाहरणे त्वालम्बनोच्छेदेन रतेरस्थैर्यात् ।

तदाह—प्रधानतया चित्तविश्रान्तिधामत्वेनालङ्कार्यः । सर्वावयव-कृतचारुत्वभाजः । भिन्नेत्यादि व्याचष्टे—अन्यत्र त्विति । प्रधानेऽङ्गिनि, वाक्यार्थे वाक्योद्देश्ये रसाद्यन्तरे अङ्गमुत्कर्षकम्, अत एवोक्तम्—

प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः ॥
काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः ॥ इति ।

रसवदित्यलङ्कार्यरससम्बन्धान्मतुप् । यद्वा अङ्गरसस्य परिपोषा-भावाद् रसतुल्यता । तुल्यार्थे वतिः । तेन—

अलङ्कारो न रसवत् परस्याप्रतिभासनात् ।
स्वरूपानतिरिक्तस्य शब्दार्थासङ्गतेरपि ॥

इति निरस्तम् । रसादय इत्यादिपदग्राह्यमाह—प्रेय इति । भावस्याङ्गत्वे इतरत्[2] काव्यम्, आभासाङ्गत्वे चोर्जस्वि । भावप्रशमस्य तत्त्वे समाहितम् । लक्ष्यनिदर्शनाकाङ्क्षायामाह—ते चेति । गुणीभूतव्यङ्ग्यस्याभिधानं यत्र पञ्चमोल्लासे, तत्रैव तदौचित्यात् ।

---

१. क्वचित् 'च' नास्ति ।　　२. प्रियतरमिति क० ग० ।

तत्र रसस्वरूपमाह—

**कारणान्यथ कार्याणि सहकारीणि यानि च।**
**रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः ॥२७॥**
**विभावा अनुभावास्तत् कथ्यन्ते व्यभिचारिणः।**
**व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः॥ २८॥**

---

तत्र च तेषु मध्ये रसस्वरूपमाह, प्रथमोद्दिष्टत्वात्। स्वरूपमितरव्यावृत्तधर्मः। अथ [1] चार्थे। लोके रत्यादेः स्थायिनोऽनुच्छिन्नप्रवाहस्य यानि कारणानि कार्याणि सहकारीणि च तानि काव्ये नाट्ये च यदि स्युः, तदा विभावा अनुभावा व्यभिचारिणः कथ्यन्ते, यथासंख्यमन्वयः। सर्वमिदमनूदितं लक्षणमाह–व्यक्तः स तैरित्यादि। विभावादिभिर्व्यक्तः स्थायिभावो रस इत्यर्थः।

रामसीतादयः परस्परानुरागे परस्परं कारणानि, तदन्वयव्यतिरेकानुविधानात्। कटाक्षादयः कार्याणि, असति रत्यादौ तदभावात्। लज्जाहास्यादीनि सहकारीणि, न तत्कार्याणि; तेन विनाऽपि सम्भवेन व्यभिचारत्। न वा कारणानि, तदुत्तरत्वा(33a )नैयत्यात्, किन्तु [2] स्वसामग्र्या प्रादुर्भवन्ति सन्ति रत्यादेरुपचायकानि भवन्ति। सामग्रीसम्पातेन रत्यादिभिः सहचरणात् तानि सहचारीण्युच्यन्ते। सहकारीणीति पाठे रत्याद्येकरूपस्य तत्तद्विचित्रस्मितरुदितकार्यजननायोगेन सामग्रीवैचित्र्यापादकानीत्यर्थः। नाट्यकाव्ययोरिति, काव्यपदं श्रव्यपरम्, नाट्यस्य पृथगुपादानात्।

सामाजिकरत्यादिवासनाया उद्बोधो हि रसः, तस्याश्च रामादयो न कारणानि, असन्निहितत्वात्। कटाक्षादीन्यपि न कार्याणि, व्यधिकरणत्वात्, तेषमालम्बननिष्ठत्वात्। एवं सहचारिणामपि सामाजिकेष्वभावात्। किन्तु तैर्भावनायां[3] प्रवर्तके सामाजिके बाह्यविषयेभ्यो व्यावृत्ते मनसि ज्ञानसुखात्मको रत्यादिः स्वयं प्रकाशते। ज्ञानोपनीता विभावादयोऽपि तद्विषया इति समूहालम्बनरूपता। विभावनम्, अनुभावनं सञ्चारणञ्च तस्य तस्य व्यापाराः, तैश्च रत्यादेरीषत्स्फुटतरः स्फुटतमश्च प्रकाश इत्याह— कथ्यन्ते इति। विभावनमनादिसामाजिकवासनान्तर्लीन-

---

१. वार्थे ग०। २. सर्वत्र मातृकासु स्वसामग्र्याः इति पाठः।
३. विभावनायाः क०।

रत्यादिवासनाया बहिःकरणम्; अनुभावनं तथाभूतस्य रत्यादेरास्वादाङ्कुर-योग्यताऽऽनयनम्, सञ्चारणं तथाभूतस्य तस्यास्वादाङ्कुरप्रादुर्भावनम्।

इत्थं व्यापारवैलक्षण्यादन्य एव विभावादिव्यपदेश्यः। 'स्थायी भावो रसः स्मृतः' इत्यादि। तत्त्वेऽस्य स्थायित्वे प्राप्ते स्थायिग्रहणं सान्तरेऽस्य सञ्चारित्वप्रतिपादनाय। तेन रतिहासक्रोधादीनां करुण-शृङ्गारवीरादिषु सञ्चारित्वम्, [1]तेष्वस्थिरत्वात्। अत एवोक्तम्—"रसावस्थः [2]परं भावः स्थायितां प्रतिपद्यते" इति। स्थायी रसः, न तु सञ्चारी; तस्य स्थाय्यनुरोधेन बुद्बुदन्यायेनोन्मग्ननिमग्नस्वरूपत्वात्। स्थायिनः सर्वभावानुगतत्वात्। तदुक्तम्—

स्रक्सूत्रभावादन्येषां भावनामनुगामुकः।
न तिरोधीयते स्थायी तैरसौ पुष्यते परम्॥

अभिनवगुप्तपादैरप्युक्तम्—"स्थायिरूपचित्तवृत्तिस्यूता एव व्यभि-चारिणः।" यथा हि रक्तनीलादिसूत्रे विरलविरलभावेन स्यूताः स्फटिक-काचकाञ्चनपद्मरागमहानीलमरकतादयः स्वयञ्च विचित्राः सूत्रञ्च विचित्र-यन्ति, तथैव नाना तदभिन्नाः स्थायिनमुपरञ्जयन्तीति[3]। भावयतीति भावो[4] वासनाख्यः, तेन निर्वासनेषु वैयाकरणादिषु न प्रसङ्गः। रसनं रस आस्वादः। व्यक्तो (33b) व्यक्तिमापन्नः स्वयं प्रकाशितः। तेनास्य सुख-[5]स्वरूपता स्वप्रकाशता च। चिदानन्दब्रह्मप्रकाशेऽविद्यायास्तत्त्वज्ञानस्येव बाह्यविषया[6]सङ्गस्यापगमाय विभावादेरपेक्षणीयत्वात्। तैरिति सहार्थे तृतीया। विभावदिभिर्व्यक्तः, तैर्विभावादिभिः सहेति समूहालम्बनरूपता।

नन्वष्टौ स्थायिभावाः, सात्त्विका अप्यष्टौ, सञ्चारिणस्त्रयस्त्रिंशदिति 'एकोनपञ्चाशदमूश्च भावा युक्त्या निबद्धाः परिपोषयन्ति' इति भावाना-मूनपञ्चाशत्त्वे सात्त्विकानां किमित्यगणनम्? मैवम्; सात्त्विकानामष्टानां[7] स्तम्भादीनामनुभावत्वेन न पृथक् परिग्रहः। स्मृतः आम्नातः।

---

१. तेष्वस्ति स्यादिति क०। २. स्वभावः ग०।
३. इत्यर्थः ग०। ४. भावकः ग०।
५. सुखरूपता ख० ग०। ६. सङ्गतस्येति च०।
७. बाह्यानां ग०।

उक्तं हि भरतेन[१]—"विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिः" इति ।

एतद् विवृण्वते—विभावैर्ललनोद्यानादिभिरालम्बनोद्दीपन-कारणैरत्यादिको भावो जनितः; अनुभावैः कटाक्षभुजाक्षेप-प्रभृतिभिः कार्यैः प्रतीतियोग्यः कृतः; व्यभिचारिभिर्निर्वेदादिभिः सहकारिभिरुपचितो मुख्यया वृत्त्या रामादावनुकार्ये, तद्रूपताऽनुसन्धानान्नर्तकेऽपि प्रतीयमानो रस इति भट्टलोल्लटप्रभृतयः।

---

तत्र सम्मतिमाह—उक्तमिति । भरतेन तत्प्रणीतशास्त्रे । विभावादयो व्याख्याताः । संयोगः साहित्यम् , रसनं रस आस्वादः, निष्पत्तिः प्रकाशः ।

एतद्विवृण्वते भट्टलोल्लटप्रभृतय इति योजना । विभावैरित्यादि । [२]आदिपदं ललनोद्यानयोः प्रत्येकमन्वेति । तेन नायकस्य कोकिलकूजितादेश्च परिग्रहः । आलम्बनान्युद्दीपनानि च । तानि कारणानि, आलम्बनस्य विषयत्वेन कारणत्वमुद्दीपनस्य धर्मिणि किन्त्वपचय एवेति । तदुक्तम्—"उद्दीपन-विभावास्ते रसमुद्दीपयन्ति ये" इति द्विधा कारणता । तदुक्तमग्निपुराणे—

विभाव्यते हि रत्यादिर्यत्र येन विभाव्यते ।
विभावो नाम स द्वेधाऽऽलम्बनोद्दीपनात्मकः ॥ इति ।

जनितोऽसन् उत्पादितः प्रतीतियोग्यः, कार्यस्य कारणज्ञापकत्वात् । उपचितो [३]गाढगाढीकृतः । मुख्यया वृत्त्या साक्षात् सम्बन्धेन । अनुकार्ये प्रतिकृतौ । तद्रूपता सादृश्यम् । अनुसन्धानं ज्ञानम् । नर्तक इत्युपलक्षणं काव्य-पाठकेऽपि, अभिनयसम्पादितानां विभावादीनां नटेऽसम्भवः । प्रतीयमानः, अर्थात् सामाजिकैः; नटः पात्रमेव । तदुक्तम्—"सामाजिकास्तु लिहते रसं पात्रं नटो मतः" इति । लोके मुखरागादिदर्शनानुमिता[४] रत्यादयो नटेऽपि प्रतीयमाना रसा इति तात्पर्यार्थः । अयं पक्षो न साधुः, अदृष्टानु-कार्यमुखरागादीनां तु रसोदयप्रसङ्गात् । अनुकारस्य तज्ज्ञापकत्वेऽन्योन्याश्रयापत्तेः । किञ्च, प्रतीयमान इति कीदृशी सामाजिकप्रतीतिः, न मानससाक्षात्कारः, असन्निकर्षात् ।

---

१. उक्तं च मुनिना इति क्वाचित्कः पाठः । २. पदेन० ग० ।
३. गाढ नास्ति ग० । ४. अनुगता० ग० ।

'राम एवायम्, अयमेव रामः' इति, 'न रामोऽयम्' इत्यौत्तरकालिके बाधे 'रामोऽयम्' इति, 'रामः स्याद् वा न वाऽयम्' इति, 'रामसदृशोऽयम्' इति च सम्यङ्मिथ्यासंशयसादृश्यप्रतीतिभ्यो विलक्षणतया चित्रतुरगादिन्यायेन 'रामोऽयम्' इति प्रतिपत्त्या ग्राह्ये नटे—

सेयं [1]ममाङ्गेषु सुधारसच्छटा
सुपूरकर्पूरशलाकिका दृशोः।
मनोरथश्रीर्मनसः शरीरिणी
प्राणेश्वरी लोचनगोचरं गता ॥२५॥

(शङ्कुकः)

---

नाप्यनुमितिः, गृहीतरामादिभेदे नटे तद्गतरत्याद्यनुमितौ बाधादित्याशङ्क्य (24a) श्रीशङ्कुकः कश्चिद् भरतविज्ञोऽनुमानप्रकारविशेषमाह—राम एवेत्यादि। विभावादिभिर्नटेऽनुमीयमानोऽनुकार्यगतरत्यादिर्भावो रस इति प्रघट्टार्थः। तत्र प्रथमं पक्षमाह--रामोऽयमिति। प्रतिपत्त्या ग्राह्ये नटे इति रामत्वप्रकारकपुरोवर्तिविशेष्यकप्रतीतिविशेष्य इत्यर्थः। अन्यथा संशयसादृश्यप्रतीतौ रामोऽयमित्याकारकविरहेणाप्रसक्तौ वारणाप्रसङ्गात्। [2]विलक्षणतयेति। इदन्तावद् वेद्यरूपवैलक्षण्यम्—राम एव[3] एवंविधरूपः। एवंविधरूप एव रामः, नान्य [4]इत्ययोगान्ययोगव्यवच्छेदेन प्रतीतिद्वयमुद्देश्यविधेयभेदविषयं प्रमा। एवं संस्कारसत्त्वे नटे रामत्वतद्रूपयोर्बाधान्नानुमितिः स्यात्। औत्तरकालिके बाधे रामोऽयमितीति। अत्र सप्तम्याः सामानाधिकरण्यमर्थः। औत्तरकालिकबाधसमानाधिकरणो रामोऽयमिति या प्रतीतिर्महत्त्वे सत्युद्भूतरूपवत्त्वादित्यत्रेव। तेन बाधे सति अपरिहार्यविषयेत्यध्याहारो निरस्तः। सम्यगित्यादेः प्रतीतिचतुष्टये यथासंख्यमन्वयः। सम्यक्त्वं प्रमा। आद्यप्रतीतेर्यथा च प्रमात्वं तत्प्रतिपादितमेव। मिथ्या तद्विशेषो बाधशिरस्कः। विलक्षणया भिन्नया। ग्राह्ये विषयीकृते। चित्रेति। यथा तुरगाकारचित्रे उक्तरूपचतुष्टयमतिभिन्ना बालकस्य तुरगोऽयमिति धीस्तद्वदित्थं ग्रन्थसङ्गतिः।

---

१. समाङ्गेषु इति क्वाचित्कः पाठः। २. विलक्षणतयेति नास्ति ख०। ३. एव नास्ति ख०। ४. इत्यन्ययोग० क०।

दैवादहमद्य तया चपलायतनेत्रया वियुक्तश्च ।

अविरलविलोलजलदः कालः समुपागतश्चायम् ॥ २६ ॥

( रू० का० अं० ७।२६)

इत्यादिकाव्यानुसन्धानबलाच्छिक्षाऽभ्यासनिर्वर्तितस्वकार्यप्रकटनेन च नटेनैव प्रकाशितैः कारणकार्यसहकारिभिः कृत्रिमैरपि, तथाऽनभिमन्यमानैर्विभावादिशब्दव्यपदेश्यैः' संयोगाद् गम्यगमक-

---

हेतुमाह—कारणकार्यसहकारिभिरिति । कृत्रिमैरिति । तेन हेतोः पक्षधर्मता । तथा च कृत्रिमत्वेन झटित्येवाश्रुपुलकादिसंपादनया तथाऽनभिमानः । विभावादीति कारणत्वाद्यभावात् । कृत्रिमत्वे हेतुमाह—नटेनैवेति । एतेन रत्यादिव्यवच्छेदः । प्रकाशितैर्वस्तुतोऽसद्भिः । नटस्य प्रकाशकत्वे हेतुमाह—शिक्षेत्यादि । गुरोरुपदेशग्रहणं शिक्षा, अभ्यासः प्रवृत्तिपौनःपुन्यम् , ताभ्यां प्रवर्तितमुत्पादितं स्वकार्यस्य पुलकादेः प्रकटनं प्रकाशनं यस्य तेन[1] । नन्वभ्यासवशादविषयेऽपि तदुत्पादः, तेन रस इत्याह—काव्येति । अनुसंधानम् एतदभिप्रायेणेदमुक्तमिति विचारणम् । तद्बलात् तत्साचिव्येन, तेन व्युत्पत्तेरपि सहकारिता ।

अनुसन्धेयकाव्यमाह—सेयमिति । यद्गुणश्रवणजनितपूर्वगतसन्तापसहस्रेणेयन्तः काला गमिताः । अङ्गेषु परीरम्भेण सर्वाङ्गसौहित्योत्पादनात् । पूरी द्रवः, शलाका अञ्जनतूलिका । मनोरथश्रीः अभिलाषसम्पत्तिः । सैव शरीरिणी सती मनसस्सकाशाल्लोचन( 34b )गोचरङ्गता पूर्वं भावनास्पदम् , अनन्तरं चक्षुर्गोचरः, ततो भोगविषयः । उपेयत्वेन वर्तमानत्वेन च प्राधान्यात् परिरम्भस्य प्रागुपादानम् । अयं संभोगः ।

विप्रलम्भमाह—दैवादिति । दुरदृष्टान्न तु स्वेच्छया । आगमनसमये कातरदृष्टिनिरीक्षणान्नेत्रगतप्रकर्षमात्राभिधानम् । अविरलो निबिडः, विलोलः सर्वदिक्सञ्चारी । कालः समयः, कालो यमः, 'च'कारद्वयप्रतिपाद्यसमुच्चयेन तुल्यकालतावगतिः ।

सूत्रस्थसंयोगपदार्थमाह—गम्येति । गम्यः साध्यः, गमको हेतुः,

---

१. तेनेति बहुव्रीहिः । नटेनेत्यतिरिक्तः पाठः छ० ।

भावादनुमीयमानोऽपि[1] वस्तुसौन्दर्यबलाद् रसनीयत्वेनान्यानुमीयमानविलक्षणः स्थायित्वेन संभाव्यमानो रत्यादिर्भावस्तत्रासन्नपि सामाजिकानां वासनया चर्व्यमाणो रस इति श्रीशङ्कुकः ।

---

तद्भावाद् व्याप्तेरित्यर्थः । रूपादिति पाठे गम्यगमकयोर्यद्रूपं धर्मस्तस्माद् व्याप्तेरिति पूर्ववत् श्लोके पुलकादिभी रत्यनुमानेऽत्रापि तथेत्यर्थः ।

साध्यमाह—रत्यादिरिति । ननु नटे रत्यादिबाधात् कथमनुमितिरित्याह—स्थायित्वेनेति । तत्रापि रागत्वेन नटप्रतीतिरेव बीजम् । वह्न्याद्यनुमितिवैलक्षण्यमाह-अन्येति । तत्र हेतुर्वस्त्विति । वस्तुनो रत्यादेः सौन्दर्यं सुखरूपता । लौकिकसुखानुमितिवारणायाह-रसनीयत्वेन । रसनमास्वादो निरतिशयसुखरूपताऽनुमीयमानो नानुमानम्, तस्याः सुखरूपत्वात् । रसस्य क्षणिकत्वं निरस्यति—चर्व्यमाण इति । पुनः पुनरनुमीयमान इत्यर्थः ।

नन्वनुमितस्य नानुमानम्, सिद्धिप्रतिबन्धादित्याह—वासनयेति । धारावाहीच्छा वासना । तेनानुमित्सयाऽनुमितौ सिद्धेरप्रतिबन्धकत्वादिति भावः । तत्रासन्नपि स्थायित्वेन सम्भाव्यमान इति सम्बन्ध इति रसस्यानुमीयमानता ।

अत्रेदमालोचनीयम्—नटेऽनुमीयमानो रत्यादी रसः? सामाजिकनिष्ठं तदनुमानं वा? नाद्यः; सामाजिकानामरसिकत्वापत्तेः, तत्रानुमितिमात्रसम्भवात् । नापरः; अनुमितेः सुखानात्मकत्वेन तद्दोषतादवस्थ्यात् । न च वेदान्तिमीमांसकयोर्विज्ञानस्य सुखत्वाङ्गीकृतिः, साक्षात्कारस्यैव तयोस्तत्त्वाङ्गीकारेणानुमितौ तदयोगात् । एवं लौकिकरत्यनुमितेरपि रसत्वं स्यात् । अनुकर्तर्यनुमीयमानस्य तस्यासत्त्वोपगमेऽनुकार्यवस्तुसतस्तद्व्याकोपात् । न च विभावादीनामुपायानामलौकिकत्वेन तदलौकिकत्वम्, असतस्तदनुपपत्तेर्धर्मिग्राहकप्रमाणस्यैवालौकिकत्वसाधनक्षमत्वात् ।

---

१. भावरूपादिति क्वाचित्कः पाठः ।

२. अनुमीयेत्यारभ्य बलादित्यन्तं क्वचिन्नास्ति । ३. लाक्षणिकत्वं ख० ।

न ताटस्थ्येन, नात्मगतत्वेन रसः प्रतीयते, नोत्पद्यते, नाभिव्यज्यते; अपि तु काव्ये नाट्ये चाभिधातो द्वितीयेन विभावादिसाधारणीकरणात्मना भावकत्वव्यापारेण भाव्यमानः स्थायी सत्त्वोद्रेकप्रकाशानन्दमयसंविद्विश्रान्तिसतत्त्वेन भोगेन भुज्यत इति भट्टनायकः ।

---

मतान्तरमाह—न ताटस्थ्येनेति। अत्र पक्षे रामादिगतरत्यादिः सामा- (35a) जिकसाक्षात्कारविषयो रसः । तत्र प्रत्यासन्नास्त्रयः- रामादिः, नटः, सामाजिकश्चेति । किंगतत्वेन रसः [1]प्रतीयताम् ? तत्राद्यद्वयगतत्वं निरस्यति—न ताटस्थ्येनेति । स्वसम्बन्धबहिर्भावेनेत्यर्थः । तथा भावेऽरस्यत्वात् । नात्मगतत्वेनेति—रामादिरत्यादीनां तथा प्रतीतौ भ्रमत्वं स्यात्, आस्वादस्य प्रमात्वाव्यभिचारित्वात् । तर्हि सामाजिकरत्यादिरेव तथाऽस्त्वित्याह—नोत्पद्यत इति । असन्निहितेभ्यः सीतादिभ्यः सामाजिकरत्याद्यनुत्पादात्, आराध्यत्वज्ञानस्य प्रतिबन्धकत्वाच्च । नाभिव्यज्यते, प्रागसिद्धेः, अन्यथाऽकार्यत्वप्रसङ्गात् । तर्हि विभावादिभ्यः किमित्याह— काव्य इत्यादि । विभावादिभिर्भाव्यमानव्यापारमाह-[3]भावकत्वेनेति । अभिधा लिङ्निष्ठा [4]शब्दभावनाऽपरनाम्नी यागादौ प्रवर्तिका । द्वितीया तज्जातीयाऽपरा विभावादिनिष्ठा रसभावनाजननी । भावयतीति भावकः, तस्य भावस्तत्त्वम् । साधारणीकरणमनियतसम्बन्धिगतत्वेनार्थप्रत्यायनम् । भाव्यमानो मुहुर्मुहुः स्मर्यमाणः । तेन भावनोपनीतरामादिरत्यादिः सामाजिकमनसि सन्निकृष्टघ्राणोपनीतसौरभ्यमिव चक्षुषि, स्थायी अन्तरा अन्तरा विघ्नेऽप्यनुच्छिद्यमानः । भोगेन साक्षात्कारेण भुज्यते विषयीक्रियते । भोगस्वरूपमाह—सत्त्वेत्यादि । सत्त्वं कश्चनान्तरो धर्मः, रजस्तमोऽभिभवेन तस्य प्रादुर्भाव उद्रेकः, तेन प्रकाशते प्रादुर्भवति; या आनन्दमयी सवित्, तत्र विश्रान्तिर्योगिनां विगलितवेद्यान्तरत्वेन स्थितिस्तत्कृतत्वेन तत्समानत्वेन समाध्यवस्थातुल्येनेति यावत् । भुज्यते विषयीक्रियत इत्यर्थः । भावनोपनीतो रामादिरत्यादिश्चिदानन्दाख्यसाक्षात्कारविषयो रस इति पर्यवसितार्थः । विश्रान्तिगतत्वेनेति पाठे

---

१. प्रतीयते क० ।　　२. भाव्यमानः क० ।
३. भावेत्यादि ख० ।　　४, अर्थभावना ख० ।

लोके प्रमदादिभिः स्थाय्यनुमानेऽभ्यासपाटववतां काव्ये नाट्ये च तैरेव कारणत्वादिपरिहारेण विभावनादिव्यापारवत्त्वादलौकिकविभावादिशब्दव्यवहार्यैर्ममैवैते, शत्रोरेवैते, तटस्थस्यैवैते; न ममैवैते, न शत्रोरेवैते, न तटस्थस्यैवैत इति सम्बन्धविशेषस्वीकारपरिहारनियमानध्यवसायात् साधारण्येन

---

गमिर्ज्ञानार्थो भावे निष्ठा गतत्वं ज्ञानत्वम्। संविद् विश्रान्तिर्यस्य, तस्य तथाभूतं ज्ञानत्वं यस्येति पूर्ववद् बहुव्रीहिः। तदेकात्मनेति पर्यवसितार्थः। भट्टनायकः कश्चन विवरणकारः।

नायमपि पक्षः साधुः, संभोगेच्छारूपस्य रामादिरत्यादेः सुखरूपत्वाभावेनारसत्वात्। तस्य तदेकरूपत्वात्। न च सुखात्मकज्ञानविषयत्वेन तस्यास्वादना[१], प्रमाणाभावात्। एवं ज्ञानविषयस्य घटादेरपि ज्ञानताप्रसङ्गात्। किञ्च, रागसम्भेदे चिदानन्दप्रकाशो न स्यात्, रागिण (35b) एव काव्यनाट्यादितश्चमत्कारात्, विरक्तस्य तद्विरहात्।

सिद्धान्तपक्षमाह—लोक इत्यादि। अभ्यासेन यत् पाटवं संस्कारदार्ढ्यं तेन हेतोः पक्षधर्मतामात्रदर्शने झटिति व्याप्तिस्मरणान्नानुमितौ विलम्बः। स्थायिनो रत्यादेः। तेनालौकिकानां[२] नास्वादः। अविदग्धानां तेषां तथाऽनुमित्यभावात्। तैः प्रमदादिभिः। तेन नादृष्टकल्पनम्। तैरभिव्यक्त [३]इत्यन्वयः, विभावादिव्यपदेशे हेतुमाह—विभावनादीति। व्याख्यातमेव।

ननु कारणादिशब्दसत्त्वे कथं विभावादिशब्दा इत्यत आह—कारणत्वादीति। सामाजिकनिष्ठानामलौकिकवासनानां[४] रत्यादीनां न ते कारणादयः, येन तथा स्युः।

ननु काव्यादौ रामादिसम्बन्धित्वेनावगतेभ्यः सीतादिभ्यः कथं सामाजिकरत्युद्बोधोऽसम्बन्धादित्यत[५] आह—साधारण्येनेति। काव्यनाट्यश्रवणदर्शनदोषवशादगृहीतभेदरामादिनिष्ठत्वेनोभयसम्बन्धित्वेन साधारण्यम्।

---

१. आस्वादता ख० ग०। २. अलौकिकानां श्रोत्रियपुत्रादीनां ग० च०।
३. इत्यर्थः ख० ग०। ४. अलौकिकानां ग०।
५. इत्याह ख० ग०।

प्रतीतैरभिव्यक्तः, सामाजिकानां वासनात्मतया स्थितः, स्थायी रत्यादिको नियतप्रमातृगतत्वेन स्थितोऽपि, साधारण्योपायबलात्

---

अथ तेषां रामादिनिष्ठत्वनियमेन कथं साधारण्यमित्यत आह—ममैवेत्यादि। आत्मा प्रेष्ठः। शत्रुर्द्वेष्यः। उभयेतरस्तटस्थ उदासीनः। वर्णनीयस्य त्रैविध्यात् त्रिधोपादानम्, मित्रस्य स्वपक्षनिक्षेपात्। सम्बन्धः प्रतियोग्यनुयोगित्वम्। तस्य विशेषो विशेषप्रतियोगिकत्वम्[1] स्वीकारपरीहारौ भावाभावौ, तयोर्नियमोऽन्ययोगव्यवच्छेदः। [2]तस्याध्यवसायो निश्चयः। तदभावाद् ग्राहकाभावादेव नियमग्रहाभाव इत्यर्थः। साधारण्ये हेतुरयम्। इयञ्च विभावादिसाधारण्यप्रतीतिरास्वादसर्वस्वम्[3], आस्वादे तु सम्बन्धं प्रतियोगिनं चापहाय तेषां स्वरूपेणैव विषयत्वात्। तद्वक्ष्यति—तत्कालेत्यादिना। यत्त्वसाधारण्येनाप्रतीतिरेव साधारण्येन प्रतीतिरित्युक्तम्, तदसत्; विभावाद्यप्रतीतावपि प्रसङ्गात्, विशिष्टाभावसत्त्वात्। अभिव्यक्तः [4]प्रतिबन्धकापगमे स्वयं प्रकाशितः। तेनास्य ज्ञानरूपता स्वप्रकाशता च। व्यङ्ग्यव्यञ्जकभावस्तु सहप्रतीतावपि चाक्षुषप्रत्यक्षे विषयालोकयोरिव। प्रागसिद्धौ कथं प्रतीतिरित्यत आह—वासनात्मतयेत्यादि। स्थितोऽनुवर्तमानः, तेन सिद्धत्वम्। सामाजिकानां रसवासनावतां यदभावाद् वैयाकरणादिषु तद( 37a )भावः। स्थायी आत्मनि स्थिरतामापन्नः। तेनाङ्गतां बाध्यतां वा प्राप्तस्य रत्यादेर्न रसत्वम्, अपि तु सञ्चारित्वमेव। अत एवोक्तम्—"रसावस्थः परं भावः स्थायितां प्रतिपद्यत' इति।

नियतेत्यादि। नियतः प्रमात्रन्तराद् व्यवच्छिन्नः। प्रमाता सामाजिकः, तद्गतत्वेन तन्निष्ठत्वेन, प्रमात्रा साधारण्येन गोचरीकृत इत्यन्वयः। साधारण्येन सम्बन्धिसम्बन्धावपहाय स्वरूपमात्रेण गोचरीकृतः स्वप्रमाविषयीकृतः।

हेतुमाह—साधारण्योपायेत्यादि। सर्वसामाजिकनिष्ठ उपायो विभावादिप्रयुक्तचिन्तनरूपः। तत्काले रत्याद्युद्बोधसमये परिमितस्य प्रमात्रन्तराद्यवच्छिन्नस्य। परिमितप्रमातुर्भावः परिमितप्रमातृता। कर्मधारयोत्तरतल्प्रत्ययप्रत्यायितस्य पारिमित्यप्रमातृत्वरूपपदार्थताऽवच्छे-

---

१. प्रतियोगित्वं ग०।  २. तस्यावसायः ख० ग०।
३. आस्वादात्पूर्वं ख० ग०।  ४. प्रतिबन्धापगमे ख०।

तत्कालविगलितपरिमितप्रमातृभाववशोन्मिषित[1]वेद्यान्तरसम्पर्क-शून्यापरिमितभावेन प्रमात्रा सकलसहृदयसंवादभाजा साधारण्येन स्वाकार इवाभिन्नोऽपि गोचरीकृतश्चर्व्यमाणतैकप्राणो

---

दृकद्वयसामानाधिकरण्यस्य यद् विगलनं विगलितमग्रहस्तद्वशात्। अर्ध-पिप्पल्यादित्वाद् विगलितस्य पूर्वनिपातः। उन्मिषितमुद्बुद्धज्ञानम्, तस्य योऽपरिमितभावः। स्वसमवायिसम्बन्धावपहाय स्वमात्रप्रकाशनम्, तेन 'घटमहं [2]साक्षात् करोमि'इत्याकारस्वप्रकाशानन्तरत्रिपुटी-प्रत्यक्षवत्।

प्रमातृविषयत्वं निरस्यन्नाह—वेद्यान्तरेत्यादि। अन्तरः स्वस्माद् रत्यादेरन्यः सम्पर्कः। सम्बन्धो विषयताऽऽख्यः, तथासति पारिमित्यं स्यात्, तेन प्रमातृप्रमेयप्रमाणानां सर्वेषामेव साधारण्यम्। विगलितेत्यादि-साधारण्येत्यादि-अपरिमितेत्यादिभिरभिहितम्। साधारण्यप्रतीति-फलमाह—सकलसहृदयेत्यादि। संवाद ऐकरूप्यम्। आत्मविशेषरत्यादि-विशेषसा[3]क्षात्कारविशेषसम्बन्धविशेषरूपासाधारण्यग्रहे परस्पर-वैधर्म्यावगतौ विषयनानात्वेनैकरूप्यविरहाद् विसंवादः स्यात्, संवादेनैव प्रामाण्यग्रहात्। अनेकस्याभ्रान्तत्वात्। आस्वादस्य प्रमातृत्व-नियमात्। अत एव सर्वत्र 'प्रमातृ'पदप्रयोगः।

ननु [4]ज्ञानज्ञेययोरभेदे कथं वि[5]षयविषयिताभाव इत्यत आह—स्वाकारेत्यादि। साकारवादे ज्ञानस्य तदाकारस्य च विषयस्याभेदेऽपि यथा विषयविषयिभावः, तद्वदिहेत्यर्थः। स्वस्य ज्ञानस्याकारो विषयः। अभिन्नः, ज्ञानरूपत्वात्।

अत्रेदमालोचनीयम्—वाक्यार्थीभूय भासमानाद् वि[6]भावादि-वैशिष्ट्याद् भावनायां प्रवृत्त्या विषयान्तरविमुखस्य पुंसो ज्ञानसुख-वासनात्मको रत्यादिः पुनः ( 36b ) समूहालम्बनोपनीतरत्यादिकं विषयीकृत्य समूहालम्बी पानकरस इव रसतामवलम्बते। तस्य च विभावाद्यंशविषयकत्वं[7] चर्वणम्। विभावादीनां तत्तद्विषयत्वं

---

१. उन्मीलित० इति मुद्रितपुस्तकेषु पाठः।

२. साक्षात् नास्ति क०।

३. साक्षात्कारविशेष० नास्ति ख०।

४. ज्ञेयज्ञानयोः ख०।

५. विषयिभाव इत्याह ख०।

६. विभावादिरूप० ख०।

७. विषयत्वं ख०।

विभावादिजीवितावधिः पानकरसन्यायेन चर्व्यमाणः पुर इव परिस्फुरन्, हृदयमिव प्रविशन्, सर्वाङ्गीणमिवालिङ्गन्, अन्यत् सर्वमिव तिरोदधत्, ब्रह्मास्वादमिवानुभावयन्, अलौकिकचमत्कारकारी श्रृङ्गारादिको रसः ।

---

चर्व्यमाणता । रत्यंशस्य रसत्वं तदंशसाक्षात्कारश्चास्वादः । यथा खण्डरसालचर्वणातो निःसृतस्य[१] निर्यासस्य रसो मधुरः, तस्य रासनः साक्षात्कार आस्वादश्चर्वणे विभावाद्यंशसम्बन्धस्य तत्समूहालम्बनसाध्यत्वात् कार्यतेति सिद्धान्तं हृदि निधाय परपरो ग्रन्थः सङ्गमनीयः । तदाह—चर्व्यमाणतेति । व्याख्यातैव । सैव एकः, न तु पञ्चमः, प्राणो रसत्वनिर्वाहकत्वात् ।

नन्वेवमैकरूप्ये सामाजिकभेदेनास्वादस्य कथं क्षणिकत्वम्, स्थिरत्ववैषम्यमित्याह—विभावादिजीवितेत्यादि । विभावादिपदं तज्ज्ञानपरम् । तच्च तत्समूहालम्बनम्, स्मरणम् । जीवितं स्वरूपनिर्वाहकम्, तदुपनीतविभावादिसंवलनेनैव तस्य रसत्वात् । तदेवावधिर्यस्य तत्सत्त्वप्रयोज्यसत्त्वकत्वादुपनायकस्य धारावाहिकत्वे स्थिरत्वम् । अन्यथा चान्यथात्वमिति भावः ।

पानकेति । यथा पानकरसे खण्डमरिचजीरकामिश्र्यादीनामेको[२] विलक्षणः कश्चनास्वादः, तद्वदिह रत्यादिविभावादीनामित्यर्थः । चर्व्यमाण इति पूर्ववत् । केचित्तु कर्मकर्तरि प्रत्यय इत्याहुः, तन्न[1]; कृत्स्नकर्मवद्भावाभावात् । पुर इवेत्यादिषु क्रियास्विवान्वयः । सर्वाङ्गव्यापनं[3] यथा स्यात् । पुर इव इत्याद्यनुभावयन्नित्यन्तं सर्वमलौकिकत्वप्रतिपादनाय । तदाह—अलौकिकेत्यादि । अलौकिको लौकिकाद्भुतदर्शनेनानुद्बुद्धश्चमत्कारो विस्मयः । कारीति पूर्वमनूद्य व्याख्येयम् । रत्यादी रस इति सम्बन्धः ।

---

1. परमयमेव व्याख्याप्रकारः प्राचीनानामभिनवगुप्ताचार्यादीनामित्यवधेयम् ।

१. निःस्यूतस्य ख० च० । २. जीरकमेथ्यादीनां ख० ङ० ।

३. व्यापि ख० ।

स च न कार्यः, विभावादिविनाशेऽपि तस्य सम्भवप्रसङ्गात् । नापि ज्ञाप्यः, सिद्धस्य तस्यासम्भवात् । अपि तु विभावादिभिर्व्यञ्जितश्चर्वणीयः ।

कारकज्ञापकाभ्यामन्यत् क्व दृष्टमिति चेत्, न क्वचिद् दृष्टमित्यलौकिकसिद्धेर्भूषणमेतत्[२], न तु दूषणम् ।

चर्वणानिष्पत्त्या तस्य निष्पत्तिरुपचरितेति कार्योऽप्युच्यताम् ।

---

ननु मुनिसूत्रे पञ्चम्या विभावादीनां हेतुत्वमभिहितम् । हेतुत्वञ्च कारकत्वं ज्ञापकत्वं वा, [३]तत्तु रसस्य सम्भवति कार्यत्वे ज्ञापकत्वे वा ? तत् किं रसः कार्यः, ज्ञाप्यो वेत्याह—स चेति । विभावादिविनाशे तज्ज्ञानध्वंसे ज्ञानस्य पूर्ववर्तिन एव ज्ञानान्तरे कारणत्वात् । तत्सत्त्वे तत्सत्त्वस्य विभावादिजीवितावधिरित्यनेनैव दर्शितत्वात् । ज्ञाप्यस्तज्जन्यज्ञानविषयः । सिद्धस्य सतो विभावादिज्ञानात् प्राक् । तस्य तथाभूतस्य विभावादिसमूहालम्बनरूपस्य । तेन रत्यादित्वेन स्थितावपि न क्षतिः । कथं तर्हि हेतुत्वमित्यत आह—विभावादिभिरिति । तज्ज्ञानैर्व्यञ्जितः, स्वोपनीतविभादिविषयतां[४] प्रापितः । चर्वणीय इति । चर्व्यन्ते विभावादयोऽनेन स्वादाख्यसंस्कारेणेति करणेऽनीयः । तेन कारकत्वज्ञापकत्वाभावेऽपीष्टं[६] (37a) हेतुत्वमित्यर्थः । अन्यत् कारणम् ।

केचित्तु कारकज्ञापकपदे धर्मपरे अन्यद्धेतुत्वमित्याहुः, तन्न; लक्षणां विनाऽप्युपपादितत्वात् ।

क्वचिन्न दृष्टमिति । अनुभवादर्थसिद्धावुपपादकस्यादृष्टचरत्वमकिञ्चित्करमिति भावः ।

कार्यत्वाभावे रसनिष्पत्तिरिति कथमुक्तम्, कथं वा रसाः प्रतीयन्त इति व्यवहार इत्याह—चर्वणेत्यादि । आस्वादस्य विभावादिसम्बन्धश्चर्वणा, सा च विभावादिसमूहालम्बनसाध्यैवेत्याह—निष्पत्त्येति । विभावादिसम्बन्धांशस्य कार्यत्वे सर्वेषां[७] कार्यत्वोपचारात् । तदाह—उपचरितेति । उच्यतां स्वातन्त्र्येण व्यवह्रियताम् ।

---

१. नाशेऽपीति पाठान्तरम् । २. मेव इति पाठान्तरम् ।
३. तदन्तरस्य ख० ४. ध्वंससम्भवे क० ।
५. विषयकतां क० । ६. भावेऽपीत्थं ख० ग० ।
७. सर्वांशे कार्यत्वमुपचारात् ख० ग० ।

लौकिकप्रत्यक्षादिप्रमाणताटस्थ्यावबोधशालिमितयोगिज्ञानवेद्या-न्तरसंस्पर्शरहितस्वात्ममात्रपर्यवसितपरिमितेतरयोगिसंवेदनविल-

---

ज्ञाप्यत्वोपपत्तिमाह—लौकिकेत्यादि। विलक्षणपदं प्रमाणेत्यन्त-योगिज्ञानेत्यन्तसंवेदनेत्यन्तैः सह प्रत्येकमन्वेति। लौकिकं सन्निकर्षा-न्यतमजन्यं प्रत्यक्षप्रमाणम्[1]। चक्षुरादिजन्या प्रमा। मानसत्वेन ततो वैलक्षण्यम्। योगिज्ञानवैलक्षण्यमाह—ताटस्थ्येत्यादि।

इह हि योगिनो द्विविधाः—आरुरुक्षवः, आरूढाश्च। समाध्यधीन-कृतात्मसाक्षात्काराः सवासनमिथ्याज्ञानस्य सम्यगनुच्छेदादनुच्छिन्न-भेदावभासाः, योगजधर्मप्रत्यासत्त्या समाधिसमये गृहीतसर्वविषयाः पूर्वे, सवासनमिथ्याज्ञानविनाशादद्वैतवासितान्तःकरणाः, सदातनसान्द्रा-नन्दानुभवेन बहिरासङ्गभङ्गाज्जडोन्मत्तपिशाचवद्वसन्तः शुकदेवप्रभृतयो जीवन्मुक्ताः परे।

तत्र प्राथमिकज्ञानतो वैलक्षण्यम्, योगिज्ञानेत्यन्तेनाह—परिमितम्। अभ्यासदशायां मननादिकारणौत्कट्येन समाधेः कादाचित्कतया तत्समय एव प्रादुर्भूतम्। ताटस्थ्येन परस्परसम्बन्धाग्रहेणावबोधो योगज-धर्मप्रत्यासत्त्या वर्तमानातीतानागतविषयाणां प्रकाशनम्। न तच्छालि, तत्त्वसाक्षात्कारेणैव सर्वविषयावलम्बनात्। एतेन शालिपदमत्र स्वार्थ इति वदन्तो विदन्तः परास्ताः, अवबोधपदेन विषयप्रकाशनस्य ज्ञान-धर्मस्यैवाभिधानात्। रसस्य विगलितवेद्यान्तरत्वेन ततो व्यतिरेकः, तस्य पूर्वविषयकत्वात्।

आरूढयोगिसंवेदनाद् व्यतिरेकमाह—वेद्येत्यादि। वेद्यो विषयः, आत्मेतरः। हेतुमाह—स्वात्मेत्यादि। शोभन आत्मा स्वात्मा, [2]उच्छिन्न-सवासनमिथ्याज्ञानत्वेन शोभनत्वात्। समाधिदार्ढ्येन सदातनत्वात् पारिमित्यविरहः, कादाचित्कोद्रेकस्य हि परिमितत्वात्। सम्यग् वेदनं संवेदनम्। विलोपितज्ञानान्तरजन्यसर्ववासनमेतत्[3], तेन [4]ततो व्यतिरेकः, रसस्य रत्यादिवासनारूपत्वात्।

---

१. लौकिकी मतिः षोढा सन्निकर्षान्यतमजन्या क०।

२. उच्छिन्नवासन० ख०। ३. सवासनं० ख०, जन्यवासन ग०।

४. अतस्ततो० ख० ग०।

क्षणलोकोत्तरस्वसंवेदनगोचर इति प्रत्येयोऽप्यभिधीयताम्।

तद्ग्राहकं च न निर्विकल्पकम्, विभावादिपरामर्शप्रधानत्वात्। नापि सविकल्पकम्, चर्व्यमाणस्यालौकिकानन्दमयस्य स्वसंवेदनसिद्धत्वात्। उभयाभावरूपस्य[1] चोभयात्मकत्वमपि

---

एवं ज्ञानं क दृष्टमित्याह—लोकोत्तरेति। [2]स्वसंवेदनविषय एव विषयी, प्रत्येयो ज्ञाप्यः। अभिधीयतामभिधया बोध्यताम्।

ननु पूर्ववदुपचारेण तदित्यसमस्तम्, [3]स्वसंवेदनपरामर्शकं निर्विकल्पकं सम्बन्धाग्राहि। विभावादिपरामर्शः, तत्समूहालम्बनस्मरणम्, प्रधानत्वात्तदन्वयव्यतिरेकानुविधायित्वात्। इन्द्रियसन्निकर्षमात्रेण जायमानस्य निर्विकल्पकस्य ज्ञानान्तरसापेक्षत्वानुपपत्तेर्विशिष्टज्ञानस्यैव विशेषणज्ञानाधीनत्वात्। नापीत्यादि। विकल्पो विशिष्टज्ञानम्। आत्मान्यविकल्पका विकल्पका[4] इति [1]गुरवः। तन्मते ज्ञानं स्वांशे निर्विकल्पकम्, विषयांशे [5]सविकल्पकं नरसिंहाकारम्। चार्व्यमाणस्य पूर्ववत् करणेऽनीयः। आस्वादस्य विभावादिविषयकत्वं चवर्णमिति समूहालम्बनता, तेन विभावादीनां विषयाणां परस्परसम्बन्धाग्रहान्न सविकल्पकता। तत्र हेतुमाह—स्वसंवेदनेति। स्वयमेव [6]यत्संवेदनं तत्सिद्धत्वात्। एकास्वादविषयस्यानेकस्य तुल्यरूपता, पानकरसे दृष्टत्वात्। धर्मिग्राहकमानेन समूहालम्बनत्वेन सिद्धस्य तस्य न सविकल्पकत्वमिति भावः। उभयपदेन [7]निर्विकल्पकत्वसविकल्पकत्वाभिधानम्, सर्वनाम्नो विवक्षितवाचित्वात्। निर्विकल्पकत्वाभावः सविकल्पकम्, अभावस्याधिकरणात्मकत्वात्। एवं सविकल्पकत्वाभावोऽपि निर्विकल्पकम्। अत एवाभावस्याधिकरणरूपत्वस्फोरणाय उभयरूपमित्यत्र रूपपदप्रयोगः। एतेनोभयपदमुभयत्वपरम्। उभयत्वस्याभावो यत्रेति सविकल्पकनिर्विकल्पक-

---

1. प्राचीनटीकाकारश्रीधरकृते काव्यप्रकाशविवेकेऽस्योद्देशः इति ते एवानुसृता अर्वाग्भवैष्टीकाकृद्भिः।

१. स्वरूपस्येति पाठान्तरम्। २. स्वसंवेदनं क०, स्वयंवेदनविषयः ग०।
३. संवेदनपरा ख०। ४. अविकल्पका ग०।
५. सविकल्पात्मकं ख०। ६. यत् नास्ति ख०।
७. निर्विकल्पत्वसविकल्पत्वाभि ख०।

पूर्ववल्लोकोत्तरतामेव गमयति, न तु[1] विरोधमिति श्रीमदाचार्याभिनवगुप्तपादाः।

व्याघ्रादयो विभावा भयानकस्येव वीराद्भुतरौद्राणाम्, अश्रुपातादयोऽनुभावाः शृङ्गारस्येव करुणभयानकयोः, चिन्तादयो व्यभिचारिणः शृङ्गारस्येव वीरकरुणभयानकानामिति पृथगनैकान्तिकत्वात् सूत्रे मिलिता निर्दिष्टाः।

---

प्राप्तिरिति सिद्धान्तमविदुषामभिहितमपास्तम्, यथाश्रुतेनैवोपपत्तेः। उभयाभावस्योभयरूपत्वं [2]लोक एव दृष्टम्, न च रसस्तथा, येन तथात्वं स्यादित्याह—लोकोत्तरतामेवेति। पूर्ववत् कारकत्वज्ञापकत्ववत्[3]। अभिनवगुप्तो नाट्यलोचनकारः। आचार्यपदेन गुरुत्वस्य पादा इति बहुवचनसमभिव्याहृतपादपदेन भक्त्यतिशयावगमः।

ननु विभावादिभ्यः[4] प्रत्येकमास्वादसम्भवे मुनिसूत्रे[5] द्वन्द्वेन, भवदीयसूत्रे च तैरिति बहुवचनेन किमिति साहित्यमभिहितमित्यत आह—व्याघ्रादय इत्यादि ( 38a )। [6]एतेन भीरूणां भयमिव, वीराणामुत्साहम्, अपूर्वदर्शिनां विस्मयम्, व्यापादितबन्धूनां क्रोधमिति तन्मात्रोपनिबन्धे परस्परविरोधादास्वादानुदये व्यभिचारेण कारणत्वं न स्यात्। तद्वक्ष्यति—अनैकान्तिकत्वादिति।

एवमनुभावसञ्चारिमात्रोपनिबन्धेऽपीत्याह—अश्रुपातादय इति। शृङ्गारस्य विप्रलम्भस्य। चिन्ता संस्कारोद्बोधको ध्यानाख्यो ज्ञानविशेषः; शृङ्गारे चिन्तावगतरूपादीनाम्, वीरे सहायानाम्, करुणे बन्धुगतोपकारादीनाम्, भयानके भयहेतुगतचण्डत्वादीनां ध्यानस्य परिपोषकत्वात्। पृथगेकैकम्। अनैकान्तिकत्वाद् व्यभिचारित्वादिति। व्याख्यातमेव। सूत्रे मुनिकृतेऽस्मत्कृते च।

---

१. क्वचित् तु नास्ति।

२. लोके न दृष्टचरम्, येन तथात्वं० क० ख०।

३. ज्ञापकत्ववदत आह क०।

४. विभावादीनां प्रत्येकं च०, प्रत्येकास्वाद० ख० ग०।

५. सूत्रेण ग०  ६. एतेन हि क० ख० ग०।

वियदलिमलिनाम्बुगर्भमेघं
मधुकरकोकिलकूजितैर्दिशां श्रीः ।
धरणिरभिनवाङ्कुराङ्कटङ्का
प्रणतिपरे दयिते प्रसीद मुग्धे ॥२७॥

इत्यादौ[1] ।

परिमृदितमृणालीम्लानमङ्गं प्रवृत्तिः
कथमपि परिवारप्रार्थनाभिः क्रियासु ।
कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मी-
मभिनवकरिदन्तच्छेदकान्तः कपोलः ॥२८॥
( मा० मा० १।२२ )

इत्यादौ ।

---

नन्वेवं वक्ष्यमाणलक्ष्येषु कथमेकैकतो रस इत्यत आह—वियदित्यादि । मुग्धे विवेकरहिते । दयिते प्रसीद, तद्विषयं प्रसादं कुरु । एवमुद्दीपनोदये मानभङ्गो भविष्यत्येव, किमिति दयितस्य प्रणतिमुपेक्षसे ? दयितस्य न स्वामिनः । नभसि दिशि भुवि च । मानवैरिणमाह—अलय इव मलिना अम्बुगर्भाश्च मेघा यत्र । अलीत्यनेन साहश्यादुद्दीपनान्तराणामलीनां स्मरणम् । अम्बुगर्भत्वेनावृष्टत्वाच्चिरस्थितिः । मधुकरकोकिलाभ्यां साहित्येन कूजनम् । केषाञ्चन कोकिलानां वर्षास्वपि मदः । श्रीः सम्पत्तिः । संपद्वशादकालेऽपि कोकिलकूजितोदयः। अभिनवा अङ्कुरा यत्र, एवमङ्को मध्यभागो यस्य तथाभूतष्टङ्कः पाषाणप्रायः[2]कठिनस्थानविदारको[3] यत्रासौ तथा ।

परीति । मालतीमाधवे 'तथा ह्यस्याः' इत्युपक्रमे श्लोकोऽयम् । परिमृदिता करतलद्वयमर्दनेन शिथिलीकृता मृणाली स्वल्पमृणालम् , म्लानिश्चिन्तातः क्रियासु परिवारप्रार्थनाभिरेका प्रवृत्तिः , यत्र कुत्रचित् । तत आलस्यम् । अभिनवस्य करिणो यो दन्तच्छेदस्तद्दन्तस्य कोमलत्वेनाश्रु-[शु]रक्तसम्बन्धः । तेन दुग्धालक्तकमिश्रणवर्णलाभः[4] । निष्कलङ्कस्य

---

१. क्वचिद् इत्यादौ नास्ति । २. प्रायं ख० ग० ।
३. दारक इति नास्ति ख०, दारकः यत्र सा ग० । ४. वर्णाभः ख० ।

अयमर्थः—अनुमानादिगम्याया उपमाया नास्वादप्रकर्षकत्वमलङ्कारत्वम्, अनुपलब्धिबाधात्; किन्तु शब्दबोध्याया एव तस्यास्तत्त्वम्, शब्देन व्यञ्जनयैव प्रतिपाद्य इति ग्रन्थः सङ्गमनीयः।

केचित्तु—"उपमानोपमेयभावः सादृश्यरूपः कल्पनीयो निर्णयनीयो न इत्यत्र काव्य उपमालङ्कारो व्यङ्ग्य इति व्यवहर्तव्यः" इति कष्टं कल्पयन्ति, तन्न; यथाश्रुतेनैवोपपत्तौ नानालक्षणाकल्पनानौचित्यात्[१]। रूपके व्यङ्ग्ये तु वाच्यसिद्ध्यङ्गगुणीभूतव्यङ्ग्यता स्यात्। तथाहि-नृपे महेन्द्रत्वारोपं विना खड्गे मेघत्वारोपो न पर्यवस्यति, साधर्म्यान्तरस्याविवक्षितत्वात्। तथा च वाच्यसिद्ध्यङ्गताप्रसङ्गः। न च कृष्णत्वं साधर्म्यमादाय पर्यवसितस्य मेघत्वारोपस्यारोपान्तरनिराकाङ्क्षता[२] जलदभुजगजनितेत्यादावपि प्रसङ्गः स्यात्। [३]जलदस्य गरलत्वारोपं विना कृष्णत्वेनैव जलदे भुजगत्वारोपसम्भवात्। [४]कवितात्पर्यगम्यस्य नानार्थपदोपन्यासस्य द्वयोः समत्वात्, अन्यथा परम्परितरूपके [५]वैरि-[1]कमलासङ्कोचदीप्रद्युत [६]इत्यत्र तेजस्वित्वेन नृपतौ सूर्यत्वारोपसम्भवे कमलायाः सङ्कोचे कमलस्फुटत्वस्य यत्रारोपस्तदपेक्षा न स्यात्, आरोप्ययोर्हेतुहेतुमत्त्व एव परम्परितत्वादिति।

[७]न चैवमुपमायामपि तत्प्रसङ्गः, खड्गमेघसादृश्ये नृपतीन्द्रसादृश्यस्याप्रयोजकत्वात्। सत्यपीन्द्रसादृश्यभाने खड्गजलदसादृश्यस्य समानधर्मसाकाङ्क्षत्वादिन्द्रसदृशोल्लास्यत्वस्याम्बुवाहावृत्तेः, न तु समानधर्मत्वमित्युपमाध्वनिरेवायमिति सर्वमवदातम्।

---

1. विद्वन्मानसहंसेत्यादिश्लोके मूलग्रन्थे रूपकालङ्कारप्रकरणलक्षिते इति यावत्।

१. कल्पनौचित्यादिति क०।

२. निराकाङ्क्षितत्वम् इति ख०। निराकाङ्क्षितत्वं जलदभुजगेत्यादावपि प्रसङ्गात् ङ०।

३. जलस्येति ख०।

४. कवितात्पर्येऽपि नायकस्य इति ख०। ५. वैरिकल्पनेति ख०।

६. इतीति ख०। ७. न चिरमिति ख०।

तिग्मरुचिरप्रतापो विधुरनिशाकृद् विभो मधुरलीलः ।
मतिमानतत्त्ववृत्तिः प्रतिपदपक्षाग्रणीर्विभाति भवान् ॥५५॥

अत्रैकस्य पदस्य द्विपदत्वे विरोधाभासः ।

अमितः समितः प्राप्तैरुत्कर्षैर्हर्षद प्रभो ।
अहितः सहितः साधुयशोभिरसतामसि ॥५६॥

---

पदभङ्गे व्यङ्ग्यमाह—तिग्मरुचिरित्यादि । [1]तिग्मस्तीक्ष्णः शत्रुषु, [2]रुचिरो मनोज्ञो मित्रेषु, तिग्मरुचिः सूर्यप्रतापशून्यश्च विधुराणां शत्रूणां निशेव निशा मरणं तत्करोति विधुर्न निशाकृत् च । विभो इति सम्बुद्धिः । मधुरा मनोज्ञा लीला चेष्टा यस्य । मधुर्वसन्तः । अलीलः क्रीडाया [3]अहेतुश्च । मतिः शास्त्रतत्त्वज्ञानम्, मानश्चे[4]तःसमुन्नतिः, तयोस्तत्त्वस्य याथार्थ्यस्य वृत्तिर्यत्र । मतिमान् पण्डितः । तत्त्वेन [5]न वर्तते च । प्रतिपदं [6]पदे पदे । स्वपक्षविपक्षयोः श्रेष्ठः । प्रतिपत् प्रथमातिथिः, पक्षस्य शुक्लकृष्णान्यतरपञ्चदशात्मकतिथिप्रचयस्याग्रणीराद्यो[7] न भवति च ।

अत्रेत्यादि । द्विपदत्वे ज्ञात इति शेषः । न च द्विपदत्वज्ञानोपायाभावात् कथं ज्ञानमिति वाच्यम् ? सामाजिकानुसन्धानस्यैवोपायत्वात् । विरोधाभास इति द्वितीयार्धेन विरोधः, प्रथमार्धेन समाधानम् । आभासतायाः प्रयोजकस्य पूर्वत्वे परत्वे वा विशेषविरहात् ।

अत्र केचित्—[8]द्विपदत्वं ज्ञानोपायाभावान्न तज्ज्ञानम्, सति च तस्मिन् विरोधस्य वाच्यतैव स्यान्मृणालवलयादिदवदहनराशिरित्यादिवत् । तस्मादेकैकस्य पदस्य द्विपदत्वे वाच्यो विरोधाभास एकैकस्य पदस्य व्यङ्ग्य इत्यध्याहारेण ग्रन्थो व्याख्येय इत्याहुः, तन्न; अध्याहारं विनाऽप्युपपादितत्वात् । द्विपदत्वज्ञानेऽप्यप्रकृतत्वेन द्वितीयार्थस्य तत्सम्बन्धस्य व्यङ्ग्यत्वानपायाद् द्विपदत्वज्ञाने विरोधस्य [9]वाच्यत्वमिति भ्रमनिरासायाह—अमित इति ।

समितो युद्धात् प्राप्तैरुत्कर्षैरमितोऽपरिच्छिन्नः । मानं मितं तद्रहितस्तत्सहितश्च । हर्षं शत्रुमित्रयोर्द्यति ददाति [10]चेत्यादि सम्बुद्धिः । असतामहितः साधुयशोभिः सहितः । पक्षे हितशून्यो हितसहितश्च ।

---

१. तिग्मं तीक्ष्णमिति ख० । २. रुचिरं मनोग्यमिति ख० ।
३. अहर्तुश्च मतिः इति ख० । ४. चित्त इति ख० । ५. न नास्ति ख० ।
६. पदं पदमिति ख० । ७. पाद्यो इति ख० । ८. द्विपदत्व इति ख० ।
९. वाक्यत्वमितीति ख० । १०. चेति सम्बुद्धिः इति ख० ।

अत्रापि विरोधाभासः ।

निरुपादानसम्भारमभित्तावेव तन्वते ।
जगच्चित्रं नमस्तस्मै कलाश्लाघ्याय [1]शूलिने ॥५७॥
( उत्पल० स्तो० )

अत्र व्यतिरेकः ।

अलङ्कार्यस्यापि ब्राह्मणश्रमणन्यायेनालङ्कारता ।

वस्तुमात्रं यथा—

पंथिअ ! ण एत्थ सत्थरमत्थि मणं पत्थरत्थले गामे ।
उण्णअपओहरं पेक्खिअ ऊण जइ वससि ता वससु ॥५८॥
( व० ल० ४६४०; गा० स० वे० ८७९ )

---

अत्रापीति । भिन्नपदत्वेऽप्यप्रकृतत्वेनेत्यर्थः ।

निरुपादानेत्यादि । उपादानमुपकरणं तूलिकादिकम् । [२]अभित्तौ शून्ये, चित्रं नानाकारमालेख्यञ्च कला चन्द्रषोडशांशः, आलेख्यक्रिया[३]प्रावीण्यञ्च ।

ननु प्रतियोग्यनुयोग्युपादान एव व्यतिरेकः प्रतीयते, तस्य तन्निरूपणाधीननिरूपणात्, तेन प्रतियोगिज्ञाने तद्व्यतिरेकस्य वाच्यतैव न व्यङ्ग्यतेत्याह—अत्रेति । चित्रेणालेख्येनाप्रकृततया[४] व्यङ्ग्येनानुभवेन व्यङ्ग्यस्य तत्कर्तुरप्रकृतस्य [६]प्रकृतस्य शूलिनश्च व्यतिरेकः[1] सम्बन्धः प्रतीयते । तत्र न वृत्त्यन्तरमित्याह—व्यङ्ग्य इति ।

एवञ्च व्यतिरेकस्य वाच्यतामात्रभ्रमनिरसनमेव शब्दशक्तिमूलालङ्कारध्वनावुदाहरणान्तरोपादाने बीजमिति सूचितम् ।

स्वयं दूती[७] द्व्यर्थशब्देनाच्छाद्य पथिके रहस्यमाह—पथिअ इति ।

पथिक नात्र [८]स्रस्तरमस्ति मनागपि[९] प्रस्तरस्थले ग्रामे ।
उन्नमतः पयोधरान् प्रेक्ष्य यदि वससि तद्वस ॥

---

1. मृणालवलयादीति-अभिनवनलिनीत्यादिमूलग्रन्थे विरोधालङ्कारस्य प्रथमोदाहरणे ।
१. शम्भवे इति पाठान्तरम् ।
२. अत्यौत्सुक्ये चित्रम् इति ख० ।
३. प्राधान्यम् इति ख० ।
४. निरूपणत्वात् इति ख० ।
५. प्रकृततया इति ख० ।
६. प्रकृतस्य नास्ति ख० ।
७. दूती त्वार्थम् इति ख० ।
८. प्रस्तरं क०, सत्स्थल इति ख० ।
९. अपि नास्ति ख० ।

अत्र यद्युपभोगक्षमोऽसि तदाऽऽस्वेति व्यज्यते ।

---

पक्षान्तरे सत्थरं शास्त्रम्, पत्थरत्थले मूर्खबहुले[1] ग्रामे, न तु नगरे; उन्नमतः, न तु उन्नतान्, [2]उन्नतेर्वृद्धावितरवर्तमानता । पयोधरान् स्तनान् । प्राकृते द्विवचनस्थाने बहुवचनम् ।

अत्र शास्त्राभावादा[3]कारेङ्गित[4]भावज्ञानानधिष्ठिते ग्रामे सति चैवंविधोद्दीपने मेघे उन्नतस्तनदर्शनेन को नाम क्षमः, नान्यत्र गच्छतीति वक्त्र्यभिप्रायः प्रकाशत इति वस्तुन्यपि व्यङ्ग्ये शब्दशक्तिमूलता ।

[5]नानार्थशब्दानुपादाने प्रदर्शिते व्यङ्ग्यानवगतेस्तदाह—यदीति । एतेन द्वितीयार्थेष्वेव शब्दशक्तिमूलता. उपभोगक्षमत्वे न स्थितौ पुनरर्थमूलत्वमेव[6] । न च व्यङ्ग्यं वस्तूपमादय इव वाच्यव्यङ्ग्ययोः सम्बन्धः, येन तस्यापि तन्मूलता स्यात्; वस्तुनि व्यङ्ग्ये वस्तुतो वाच्यव्यङ्ग्ययोरसम्बन्धादिति निरस्तम् । शास्त्राभावोन्नतमेघस्तनदर्शनहेतुकगतिनिवृत्तौ शब्दान्वयव्यतिरेकानुविधानस्य स्फुटत्वात् ।

न वात्र वाच्यव्यङ्ग्ययोरसम्बन्धः, आच्छादकाच्छाद्यभा[7]वस्यैव तत्त्वात्, अन्यथा वाक्यभेदप्रसङ्गात् । कुव्याख्यान्तराण्युपेक्षितानि ।

न [8]चात्र मेघा [9]एव स्तना इत्युपमासाधर्म्यस्याप्रतीतेः 'विद्वन्मानस'इत्यादाविव शब्द एव समानधर्मतेति चेत्, उच्यते । असम्बन्धभयात् सम्बन्धत्वेन कल्पनीयाया उपमाया [10]आच्छाद्याच्छादकरूपसम्बन्धान्तरे सत्यप्रसरात् ।

किञ्च, तद्वति समानधर्मेण प्रतीयमानायामुपमायामपि वस्तुव्यङ्ग्योत्थापकत्वेन तन्मुखप्रेक्षितया न तेन, किन्तु प्रधानेन वस्तुनैव व्यपदेशः । वस्तुनि चानलङ्कारत्वमिति वस्तुमात्रोदाहृतिः ।

अथ यद्युपभोगक्षमोऽसि तदास्स्वेति विशिष्टव्यङ्ग्यस्य उपभोगांशे शब्दशक्तेः स्थित्यंशे चार्थशक्तेरुद्भटत्वमित्युभयशक्तिमूलतेति चेन्न,

---

१. बहले इति ख० । २. अनून्नतेर्वृत्ता इति ख० ।
३. आचार० इति ख० । ४. भावज्ञानाधिष्ठिते इति ख० ।
५. नानार्थेत्यारभ्य शब्दशक्तिमूलतेत्यन्तम् ख० पु० नास्ति ।
६. मूलत्वमिति ख० । ७. च्छाद्याभाव इति ख० ।
८. नन्वत्रेति ख० । ९. इव इति ख० ।
१०. आच्छाद्येत्यारभ्य'''उपमायामपि इत्यन्तं नास्ति ख० ।

शनिरशनिश्च तमुच्चैर्निहन्ति कुप्यसि नरेन्द्र यस्मै त्वम् ।
यत्र प्रसीदसि पुनः स भात्युदारोऽनुदारश्च ॥५९॥

अत्र विरुद्धावपि त्वदनुवर्तनार्थमेकं कार्यं कुरुत इति ध्वन्यते ।

---

अत्रोपभोग एव वक्तृतात्पर्यात् तदभावे स्थितेरकिञ्चित्करत्वात् । अत एवोक्तं क्षमोऽसीति । [1]तदाऽऽस्स्वेति हेतुः, तिष्ठ गच्छ वेति नाग्रह इति । उपभोगे च शाखाभावोन्नमन्मेघोन्नतस्तनदर्शनान्येव प्रभवन्तीति शब्दशक्तिमूलोत्थध्वनिः ।

[2]ये तु कष्टसृष्ट्या शब्दान्तरस्यार्थान्तरत्वं व्याख्याय शब्दमूलत्वमामनन्ति [3]तद्वद् दर्शितरीत्या तदर्थकपदान्तरोपादानेऽपि सत्थरादिपदस्य तदर्थव्यञ्जकत्वात्, तत्सत्त्वे सत्थराद्यसत्त्वे[4] वा व्यञ्जना। [5]न सत्थरादिशब्दशक्तिरेव प्राधान्यावगतेरिति न काचिदनुपपत्तिः[6] । एवञ्च न्यायः सर्वत्रै[7]वा[8]वधेय इति ।

सालङ्कारवस्तुनो वस्तुमात्रव्यञ्जकत्वमाह—शनिरशनिश्चेत्यादि । अशनिः शनिविरोधी वज्रञ्च । असुरवज्रञ्चो विरोधित्वमर्थः । उदारो महान्, अनुदारस्तदितरोऽनुगतदारश्च । नृपप्रसादादेव[9] धनवत्तया प्रवासाद्यभा[10]वादनुगतदारत्वम् ।

अत्र केचित्—अत्र द्वितीयार्ध एव विरोधः, विरुद्धधर्मद्वयस्योदारत्वानुदारत्वयोरेकत्र[11] धर्मिणि प्रतीतेः, न तु पूर्वार्धे, शन्यशन्योर्हननक्रियायां समुच्चयेनैवान्वयात् । तेन पूर्वार्धं प्रसङ्गा[12]देवोक्तम्, प्रकृतोदाहरणं तु परार्धमेवेत्याहुः, तन्न; एकस्मिन्नेव [13]नृपविद्वेषिशनितद्विरोधिहन्यमानत्वेन विरोधिद्वयकर्तृकहननयोर्विरोधात्[14] शत्रुशत्रोर्मित्रत्वात् । वज्रकर्तृकत्वेन च समाधानम् । यत्र "विरुद्धावपि त्वदनु[15]वर्तनार्थमेकं[16] कार्यं कुरुत" इत्यत्र विरुद्धाविति द्विवचनेनैकस्यैव

---

१. तत्त्वविरहे तु इति ख० ।
२. यत्तु ख० ।
३. तत्र दर्शितनीत्या इति ख० ।
४. सत्त्वेनाव्यञ्जनाच्च इति ख० ।
५. न नास्ति ख० ।
६. इतीत्यधिकः पाठः ख० ।
७. एव नास्ति ख० ।
८. इति नास्ति ख० ।
९. प्रसादेव इति ख० ।
१०. नञा इत्यधिकः ख० ।
११. एकधर्मणि इति ख० ।
१२. एव नास्ति ख० ।
१३. विद्विषि इति ख० ।
१४. क्रिययोर्विरोधः इति ख० ।
१५. अनवर्तमानार्थं इति ख० ।
१६. मेकक इति ख० ।

**अर्थशक्त्युद्भवोऽप्यर्थो व्यञ्जकः सम्भवी स्वतः ॥३९॥**
**प्रौढोक्तिमात्रात् सिद्धो वा कवेस्तेनोम्भितस्य वा ।**
**वस्तु वाऽलङ्कृतिर्वेति षड्भेदोऽसौ व्यनक्ति यत्॥४०॥**
**वस्त्वलङ्कारमथवा तेनायं द्वादशात्मकः ।**

स्वतःसम्भवी, न केवलं भणितिमात्रनिष्पन्नो यावद्बहिरप्यौचित्येन सम्भाव्यमानः। कविना प्रतिभामात्रेण बहिरसन्नपि निर्मितः कविनिबद्धेन वक्त्रेति वा द्विविधोऽपर इति त्रिविधः। वस्तु वाऽलङ्कारो वा असाविति षोढा व्यञ्जकः। तस्य वस्तु वाऽलङ्कारो वा व्यङ्ग्य इति द्वादशभेदोऽर्थशक्त्युद्भवो ध्वनिः।

---

विरोधस्य सूचनम्। विरोधद्वये[१] विरुद्धानाञ्च चतुष्ट्वेन बहुवचनं विदध्यादिति तैरुक्तम्, तदप्ययुक्तम्; हननस्य भानस्य चैकैकस्य कार्यस्य [२]पृथक्त्वाद् द्वाभ्यां द्वाभ्यां निष्पाद्यत्वेन[३] द्विवचनस्यैव न्याय्यत्वात्। अत एवोक्तम्—एकं कार्यमिति, एकत्र कार्ये चतुर्भिर्विरोधिभिरनिर्वाहनात्।

अर्थशक्त्युद्भवमाह—अर्थेत्यादि। अर्थशक्त्युद्भवे ध्वनौ तेन कविना उम्भितस्य[४] स्वकाव्ये निबद्धस्य अयमर्थशक्त्युद्भवो ध्वनिः। स्वतःसम्भवी लोकेऽपि[५] दृष्टः। चमत्कारानुगुणोक्तिः प्रौढोक्तिः। मात्रपदेन बहिः सम्भववारणं[६] कविनिबद्धवचनं कविवचनादधिकरागप्रकटकमिति द्वयोर्भेदः, तदाह - अपरो द्विविध इति। षड्भिर्व्यञ्जकैः प्रत्येकं वस्त्वलङ्कृत्योर्व्यञ्जना द्वादशविधो व्यङ्ग्यः क्रमेणेत्यतः पूर्वं स्वतःसम्भवीत्यादीति शेषः।

यद्यपि व्यङ्ग्यस्य स्वतःसम्भवित्वादिभेदः सम्भवति, तथापि न तन्मुखेन भेदगणनम्, व्यङ्ग्यस्यार्थस्य लोकोत्तरत्वेनैव चमत्कारित्वात्।

---

१. विरुद्धत्वाय इति ख०। २. पृथक्त्वाभ्याम् इति ख०।
३. निष्पादनेन इति ख०। ४. अङ्कितस्येति ख०।
५. लोऽकोपि इति क०। ६. विवरणम् इति ख०।

क्रमेणोदाहरणम्—

अरससिरोमणि धुत्ताणं अग्गिमो पुत्ति धणसमिद्धिमओ ।
इअ भणिएण णअङ्गी पप्फुल्लविलोअणा जाआ ॥६०॥
( गा० स० वे० ६७० )

अत्र ममैवोपभोग्य इति वस्तुना वस्तु व्यज्यते ।

धन्यासि या कथयसि प्रियसङ्गमेऽपि
विस्रब्धचाटुकशतानि रतान्तरेषु ।
नीवीं प्रति प्रणिहिते तु करे प्रियेण
सख्यः शपामि यदि किञ्चिदपि स्मरामि ॥६१॥
( विज्जकायाः )

---

स्वतःसम्भविनो वस्तुनो वस्तु व्यञ्जकतामाह—[1]अरस इत्यादि ।

अलसशिरोमणिर्धूर्त्तानामग्रिमः पुत्रि धनसमृद्धिमयः ।
इति भणितेन नताङ्गी प्रफुल्लविलोचना जाता ॥

अलसत्वेनाप्रवासित्वम्, धूर्तत्वेन विदग्धत्वम्, धनसमृद्ध्या सुखित्वम्, नताङ्गीत्वेन नमस्कारः, प्रफुल्लविलोचनत्वेन हर्षः । अथवा अलसानां कौतुकानाविष्टानां वस्त्वन्तरानाकृष्टानामित्यर्थः ।

अत्रेति । वस्तुना प्रफुल्लविलोचनत्वरूपेण स्वतःसम्भविनाऽलङ्कृतिशून्यत्वेन वस्तुव्यङ्ग्यम् ।

स्वतःसम्भविनो वस्तुनोऽलङ्कारव्यञ्जकतामाह— धन्यासीत्यादि[2] । प्रियसङ्गमे आलापादिषु । तत्रापि रतमध्येषु भवतु, कथञ्चिदादावन्ते वा सप्तम्याश्चाटुकशताधिकरणत्वम् । प्रणिहिते नीव्यां करोऽपयितव्य इति प्रणिधानविषये मनसि सङ्कल्पिते, न त्वर्पिते,अवाचकत्वाद्[3] भावलघुत्वापाताच्च करे प्रणिहिते न किञ्चिदपि स्मरामीति वाक्यमध्ये सख्यः शपामीति [4]गर्भितोऽपि गुण एव, विवक्षितार्थस्य सत्यत्वप्रत्यायनात् । शपामीति मिथ्यानिरसनमात्रार्थत्वेन वर्तमानपदम्[5], मिथ्यानिरसनहेतुशरीरस्पर्शस्यैव शपथत्वात् सखीषु मध्ये सौभाग्याभिमानगर्विताया एकस्याः

---

१. अलस इति ख० । २. इत्यादि नास्ति ख० ।
३. अवाचकत्वापातात् इति ख० । ४. गर्वतोऽपि इति ख० ।
५. मात्रार्थकत्वात् शपेर्नात्मनेपदम् इति ख० ।

अत्र त्वमधन्या, अहं तु धन्येति व्यतिरेकालङ्कारः।

दर्पान्धिगन्धगजकुम्भकपाटकूट
संक्रान्तिनिघ्नघनशोणितशोणशोचिः ।
वीरैर्व्यलोकि युधि कोपकषायकान्तिः
कालीकटाक्ष इव यस्य करे कृपाणः ॥६२॥

( कप्फि० अ० १।२७ )

अत्रोपमाऽलङ्कारेण सकलरिपुबलक्षयः क्षणात् करिष्यत इति वस्तु।

---

सम्बोध्यत्वे[१] धन्याऽसीत्येकवचनं बहूनामप्रतार्यत्वप्रतिपादनाय सख्य इति बहुवचनम्, तेन नासङ्गतिः। वैदग्ध्यतदभावाभ्यां धन्याधन्यत्वे, [२]इत्यहं धन्या त्वमधन्या इति सखीं प्रति धन्यत्वोक्तिर्विप्रलिप्सया। तेन 'विवक्षितान्वयानुपपत्त्या [३]धन्याऽसीत्यत्राधन्यत्वलक्षणे'ति निरस्तम्, विप्रलिप्सया धन्यत्वस्य विवक्षितत्वात्।

अत्र वस्तुनो वाक्यार्थस्य स्वतःसम्भवित्वं स्फुटमेव।

स्वतःसम्भविनोऽलङ्कारस्य वस्तुव्यञ्जकतामाह—दर्पेत्यादि। यन्मदमूत्रपुरीषगन्धेनान्ये गजाः पलायन्ते, स गन्धगजः। कुम्भयोर्मध्यभागः कपाटः, तदाकारत्वात्, तस्य कूटमग्रं [४]तद्वद् दुर्भेदम्। निघ्नमायत्तं दृढं यन्नद्धं घनं निबिडं शोणितस्य [५]शोणा शोचिर्यत्र। कषायो रक्तः शोणशोचिः कषायकान्त्योः [६]प्रतिबिम्बानुबिम्बभावेन समानधर्मता। अत्रोपमाऽलङ्कारेण स्वतःसम्भविना सादृश्यस्य बहिरपि सत्त्वात्।

अत्र केचित्—[७]क्षणात् सकलासुरकुलक्षयकारित्वं कालीकटाक्षधर्मसादृश्यावगमे तदवगमो न स्यात्, तत्तत्सादृश्यात् तत्तत्कर्मानुपपत्तेः, तस्मादुपमापदेनोत्प्रेक्षाभिधानमित्याहुः[1], तन्न; आशु रिपुकुलक्षयकारित्वस्य कृपाणकटाक्षोभयवृत्तेर्न कालीकटाक्षमात्रगामिता,

---

1. श्रीधरादयोऽपि प्राधान्यमत्र प्राचीनमतमेतत् कटाक्षयन्तीति मन्तव्यस्यास्य प्राचीनोत्थापनं सूच्यते। नवीना अपि केचिद् एतदुज्जीवयन्तीति तेऽपि समालोचिताः। श्रीधरपरिष्कृति ( १०६ पृ० एत्र द्रष्टव्या कुतूहलिभिः।

१. संबोध्यत्वेन इति ख०। २. इत्याह—अहम् इति ख०।
३. धन्यासीत्यारभ्य विप्रलिप्सयेति ख० पु० त्रुटितः पाठः।
४. तच्चेति ख०। ५. शोणशोचिरिति ख०।
६. प्रतिबिम्बानु० इति नास्ति ख०। ७. लक्षणात् इति ख०।
८. धर्मः ख०। ९. कटाक्षोभय इति नास्ति ख०। १०. पत्ते इति ख०।

गाढकान्तदशनक्षतव्यथासङ्कटादरिवधूजनस्य यः ।
ओष्ठविद्रुमदलान्यमोचयन्निर्दशन् युधि रुषा निजाधरम् ॥६३॥

अत्र विरोधालङ्कारेणाधरनिर्दशनसमकालमेव शत्रवो व्यापादिता इति तुल्ययोगिता, मम क्षत्या[१]ऽन्यस्य क्षतिर्निवर्तताम् इति तद्बुद्धिरुत्प्रेक्ष्यत इत्युत्प्रेक्षा च ।

---

असुरकुलक्षयकारित्वस्यैव तत्त्वात् । काली महामारिस्तस्या [२]रिपवोऽसुरा नृपस्य [३]नृपजाते रिपुत्वेन द्वयोरनुगमेन समानधर्मत्वात् । किञ्च, कालीकटाक्षत्वेन सम्भावनायां सजातीयधर्मस्याप्रयोजकत्वादेकधर्मस्यैव तत्त्वात्, यथा 'लग्ना मन्ये ललिततनु ते पादयोः पद्मलक्ष्मीः' इत्यत्र । अत्र चेति धर्मयोः प्रतिबिम्बानुबिम्बभावेन निर्देश इत्युक्तत्वात्, अपि चास्या उत्प्रेक्षायाः केवलकविप्रौढोक्तिनिष्पन्नत्वात् स्वतःसम्भवित्वविरहेण लक्ष्यता[1] न स्यात् ।

मिश्रास्तु साम्यावगमानन्तरमुपमानगतधर्मान्तरमुपमेये प्रतीयत इति यथोक्तव्यङ्ग्यावगमेन[४] बाधः । तदुक्तम्—धर्मयोरेकनिर्देशेऽन्यसंवित्साहचर्यत" इत्याहुः, तन्न; उपमागतधर्माणामुपमेयगतत्वेन[५] निर्देशस्यैवान्यसंवेदकत्वात् । यथा 'कैलासगौरम्' इत्यत्र गौरत्वनिर्देशेनोच्छ्रायस्य नात्र तथोपमानगतधर्मस्योपमेयगतत्वेनानिर्देशादिति ।

स्वतःसम्भविनोऽलङ्कारस्यालङ्कारव्यञ्जकतामाह—गाढेति । विद्रुमो नवपल्लवस्तस्य दलानि । अत्रौष्ठविषयकदंशन[६]तन्मोचनक्रिययोर्विरोधः प्रतियोगिभेदेनाभासः । एष च स्वतःसम्भाव्येव[७] ।

तुल्ययोगितेति—अत्र केचित् 'तुल्ययोगितापदेनाधरो निर्दिष्टः शत्रवश्च व्यापादिता इति सम्भूयाभिधानम्[८] । अप्रकृतानां प्रकृतानां चैकधर्मसम्बन्धस्य तुल्ययोगितायाः[९] अत्र गन्धस्याप्यभावादित्याहुः[2], तन्न; अधरनिर्दशनशत्रुव्यापादानयोर्द्वयोरपि वीरानुभावत्वेन प्रकृतयोरेककालरूपैकधर्मसम्बन्धेन तदनपायात् । न च धर्मस्य

---

1. इयं युक्तिश्चादरणीया ।
2. वस्तुतस्तु जातेरिव तुल्ययोगितालङ्कारे स्वीकारे द्वैधं यथा प्राचीनैः कैश्चिदर्वाग्भवैः दर्पणकृतादिभिश्च दर्शिता । निष्कर्षन्तं काव्यविवेकटिप्पण्यामस्मदुद्भाविविचार्यं द्रष्टव्यम् ।

१. क्षत्याप्यन्यस्येति पाठान्तरम् । २. रिपवो असुरा इति नास्ति ख० । ३. नृपा इव विप्रत्वेन इति ख० । ४. व्यङ्ग्यविगमेन इति ख० । ५. त्वेनैव इति ख० । ६. तत् नास्ति ख० । ७. सम्भाव्येषु इति ख० । ८. समुच्चयाभिधानम् इति ख० । ९. तुल्ययोगितया इति ख० ।

एषूदाहरणेषु स्वतःसम्भवी व्यञ्जकः ।

कैलासस्य प्रथमशिखरे वेणुसंमूर्छनाभिः
श्रुत्वा कीर्तिं विबुधरमणीगीयमानां यदीयाम् ।
स्रस्तापाङ्गाः सरसबिसिनी काण्डञ्जातशङ्का
दिङ्मातङ्गाः श्रवणपुलिने हस्तमावर्तयन्ति ॥६४॥

अत्र वस्तुना येषां[1]मप्यर्थाधिगमो नास्ति तेषामप्येवमादिबुद्धिजननेन चमत्कारं करोति त्वत्कीर्तिरिति वस्तु ध्वन्यते ।

---

गुणक्रियाऽन्यतरत्वेन [2]कल्पितत्वाभावादनुपपत्तितादवस्थ्यमिति वाच्यम्, कालोपाधेः सूर्यपरिस्पन्दत्वेन क्रियातोऽनन्यत्वात् । ममेति—तद्बुद्धिर्नृपबुद्धिः । चकारेण संसृष्टिसंसूचनम् ।

ननु गाढेत्यादौ कोपकृतकामकृतयोरधरदंशनयोरत्यन्तवैजात्येन कथं विरोधः ? एकविषयदंशनमोचनयोरेव तत्त्वात् । [3]अथैकस्याध्यवसाय इति चेत्तस्य कविप्रौढोक्तिरूपस्य व्यञ्जकत्वे कथं स्वतःसम्भविव्यञ्जकतेत्याह—एष्विति ।

अयमर्थः—विरोधस्य स्वतःसम्भविन एव व्यञ्जकताभेदाभेदरूपाया अतिशयोक्तेश्च विरोधस्यैव निर्वाहकत्वम्, न तु प्राधान्यम् । प्रधानेनैव च व्यवहार इति स्वतःसम्भवी व्यञ्जकः । न खलु स्वतःसम्भवीत्यादिकं [4]गोत्वादिवद् विरुद्धम्, येन विरोधः स्यात् । एवमन्यत्राप्यूह्यम् ।

कविप्रौढोक्तिनिष्पन्नानां[5] व्यञ्जकतामाह—कैलासस्येत्यादि । प्रथमशिखरे मूलशिखरे, वेणुसंमूर्छनाभिः, वेणूत्थापितरागैः । तदुक्तम्—

स्वरः संमूर्छितो यत्र [6]रागत्वं प्रतिपद्यते ।
मूर्छनामिति तां प्राहुर्गीततत्त्वविदो जनाः ॥ इति ।

पुलिने समीपे, पुलिनत्वेन श्रवणस्य सरसीत्वम्, अत एव मृणालत्वभ्रमः ।

अत्रेति—वस्तुना कविप्रौढोक्तिनिष्पन्नेन मृणालवद् यशः कर्णप्रवेशरूपेण[7] । एवमादि मृणालादि ।

---

१. मुद्रितपुस्तकेषु क्वचिद् अपि नास्ति । २. कलितः स्वभावात् इति ख० ।
३. अर्थैकत्वाद् व्यवसाय इति ख० । ४. गोत्वाश्वत्ववत् इति ख० ।
५. निष्पन्नाम् इति ख० । ६. रागतामिति ख० ।
७. प्रवेशनरूपेण इति ख० ।

केसेसु बलामोडिअ तेण अ समरम्मि जअसिरी गहिआ ।
जह कन्दराहि विहुरा तस्स [1]दढं कण्ठअम्मि संट्ठविआ ॥६५॥
( गा० स० (?) वे० ६७७ )

अत्र केशग्रहणावलोकनो[2]द्दीपितमदना इव कन्दरास्तद्विधुरान् कण्ठे गृह्णन्तीत्युत्प्रेक्षा। एकत्र संग्रामे विजयदर्शनात् तस्यारयः प्रपलाय्य गुहासु तिष्ठन्तीति काव्यहेतुरलङ्कारः । न प्रपलाय्य गतास्तद्वैरिणः, अपि तु ततः पराभवं सम्भाव्य तान् कन्दरा न त्यजन्तीत्यपह्नुतिश्च ।

गाढालिङ्गनरहसुज्जुअम्मि दइए लहुं समीसरइ ।
माणंसिणीण माणो पीलणभीअव्व हिअआहि ॥६६॥
( गा० स० (?) वे० ६३४ )

अत्रोत्प्रेक्षया प्रत्यालिङ्गनादि तत्र विजृम्भत इति वस्तु ।

---

वस्तुनोऽलङ्कारव्यञ्जकतामाह— केसेस्विति ।

केशेषु बलात्कारेण तेन समरे जयश्रीर्गृहीता ।
यथा कन्दराभिर्विधुरास्तस्य दृढं कण्ठे संस्थापिताः ॥

एकस्या नायककर्तृककेशाकर्षण[3]दर्शनेनापरस्याः कामोद्रेकः स्यादेव । [4]समासोक्तितः पुनरुत्प्रेक्षाया एवात्र सङ्कीर्णमाह—काव्यहेतुरिति । चकारेणैकव्यञ्जकानुप्रवेशसङ्करसूचनमत्र[5] वाक्यार्थः; न [6]लोकसिद्ध इति न स्वतःसम्भवी ।

अलङ्कारस्य वस्तुव्यञ्जकतामाह—गाढेत्यादि ।

गाढालिङ्गनरभसोद्यते दयिते लघु समपसरति ।
मनस्विन्या मानः पीडनभीत इव हृदयात् ॥

अत्रेत्यादिपदेन प्रसादहसितादिग्रहणम्, गाढालिङ्गनमात्रेणैव पीडनभयमिति प्रत्यालिङ्गनस्य[8] वाच्यसिद्ध्यङ्गता । मानस्याचेतनस्य पीडनभयं न स्वतःसम्भवि ।

---

१. दिढं इति पाठान्तरम् । २. उद्दिप्त इति पाठान्तरम् ।
३. पलाय्येति पाठान्तरम् । ४. दर्शने इति ख० ।
५. 'समासोक्तितः पुनरुत्प्रेक्षायामेवाङ्गसङ्कीर्णमिति' इति ख० ।
६. तत्रेति ख० । ७. लोकप्रसिद्धेति ख० ।
८. न इत्यधिकः पाठः ख० । ९. अचेतनस्य नास्ति ख० ।

जा ठेरं व हसन्ती कइव अणंबुरुहबद्धविणिवेसा ।
दावेइ भुअणमण्डलमरणं विअ जअइ सा वाणी ॥६७॥
( गा० स० (?) वे ६८२ )

अत्रोत्प्रेक्षया चमत्कारैककारणं नवं नवं जगदजडासनस्था निर्मिमीते इति व्यतिरेकः । एषु कविप्रौढोक्तिमात्रनिष्पन्नो व्यञ्जकः ।

जे लङ्कागिरिमेहलासु खलिआ संभोअखिण्णोरई-
फारुफुल्लफणावलीकवलणे पत्ता दरिद्दत्तणं ।
ते एण्हि मलआणिला विरहिणीणीसासंसंग्गिणो[1] ।
जादा[2] झत्ति सिसुत्तणेवि बहला तारुण्यपुण्या[3] विअ ॥६८॥
( क० म० २।१९ )

---

अलङ्कारस्यानलङ्कारव्यञ्जकतामाह—जा ठेरमिति ।
या स्थविरमिव हसन्ती कविवदनाम्बुरुहबद्धविनिवेशा ।
दर्शयति भुवनमण्डलमन्यदिव जयति सा वाणी ॥
[4]कविवदनाम्बुनि जगदन्यदर्शनात् ।
[1]न स्वतःसम्भविनो स्वल्पचित्ता [5]इत्यादिगम्यो व्यतिरेकः ।
कविनिबद्धवक्तृप्रौढोक्तिसिद्धानां व्यञ्जकतामाह—जे लङ्केत्यादि ।
ये लङ्कागिरिमेखलासु स्खलिता सम्भोगखिन्नोरगी
स्फारोत्फुल्लफणावलीकवलनात् प्राप्ता दरिद्रत्वम् ।
त इदानीं मलयानिला विरहणीनिःश्वाससंसर्गिणो
जाता झगिति शिशुत्वेऽपि बहलास्तारुण्यपूर्णा इव ॥
लङ्कासन्निकृष्टो गिरिर्लङ्कागिरिर्मलयः । सम्भोगः स्वभोक्तृसर्पभ्य-

---

1. केसेस्वित्याद्युदाहरणत्रयाणां व्याख्यान मातृकासु सर्वास्वप्यदृष्टमिति महत् कौतुकम् ।

१. सक्किणो इति पाठान्तरम् ।

२. जाद्या इति पाठान्तरम् । ३. तारुण्णपुण्णा इति पाठान्तरम् ।

४. कविवदनाम्बुजनिवासश्च जगदन्यदर्शनम् इति ख० ।

५. अत्र रत्यादिगम्यो व्यतिरेकः इति ख० ।

अत्र निःश्वासैः प्राप्तैश्वर्या वायवः किं किं न कुर्वन्तीति वस्तुना वस्तु व्यज्यते ।

सहि विरइऊण माणस्स मज्झ [1]धीरत्तसोसा आसासं ।
पिअदंसण विहलंत्तणखणम्मि सहसत्ति तेण ओसरिअं ॥६९॥
( गा० स० ६३६ )

अत्र वस्तुनाऽकृतेऽपि प्रार्थने प्रसन्नेति विभावना; प्रियदर्शनस्य सौभाग्यबलं धैर्येण सोढुं न शक्यते इत्युत्प्रेक्षा च[2] ।

ओल्लोल्लकरअरअणक्खएहिं तुह लोअणेसु महदिण्णं ।
रत्तं सुअं पसाओ कोवेण पुणो इमे ण अक्कमिआ ॥७०॥
( गा० स० (?) वे० ६७१ )

---

स्त्रासेन स्खलनं स्फारा वितता उत्फुल्ला ऊर्ध्वप्रसृता, तेन [3]श्वा[त्रा]सस्य स्थूलता स्त्रीणामाहारद्वैगुण्येन उरगीति [4]विशेषाभिधानम् । बहुलाः प्रचिताः । कर्पूरमञ्जर्यां सट्टके कर्पूरमञ्जर्या [5]इयमुक्तिः ।

वस्तुना मलयानिलस्खलनयौवनरूपेण[6] बहिरसम्भाव्येन वस्तुनो वस्तुव्यञ्जकत्वम् ।

वस्तुव्यञ्जकतामुक्त्वाऽलङ्कारव्यञ्जकतामाह—[7]सहीति ।

सखि विरचय्य मानस्य मम धीरत्वेनाश्वासम्[8] ।
प्रियदर्शनविश्रृङ्खलत्वक्षणे सहसेति तेनापसृतम् ॥

विश्रृङ्खले कौतुकोत्तरलिते वस्तुना सहसा प्रियदर्शनादिशब्दबोध्ये-[9]नस्वतःसम्भविना चकारेण सङ्करसूचनम् ।

अलङ्कारस्य वस्तुव्यञ्जकतामाह—अल्लोलेति ।

आर्द्रार्द्रकरजरदनक्षतैस्तव लोचनयोर्मम दत्तम् ।
रक्तांशुकं प्रसादः कोपेन पुनरिमे नाक्रान्ते ॥

---

१. धीरत्तणेण इति पाठान्तरम् ।
२. वा इति क्वचित् ।
३. ग्रामस्य इति ख० ।
४. विशेषणोपादानम् इति ख० ।
५. इव भुक्तिः इति ख० ।
६. सूर्येणेति ख० ।
७. सखीति इति क० ।
८. श्वासनम् इति ख० ।
९. नार्थतः इति ख ।

अत्र किमिति लोचने कुपिते वहसीत्युत्तरालङ्कारेण न केवलमार्द्रनखक्षतानि गोपायसि, यावत्तेषामहं प्रसादपात्रं जातेति वस्तु।

महिलासहस्सभरिए तुह हिअए सुहअ सा अमाअन्ती ।
अणुदिणमणण्णकम्मा अङ्गं तणुअं वि तणुएइ ॥७१॥
( गा० स० ३।८२ )

अत्र हेत्वलङ्कारेण तनोस्तनूकरणेऽपि तव हृदये न वर्तत इति विशेषोक्तिः। एषु कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरो व्यञ्जकः।

एवं द्वादश भेदाः।

**शब्दार्थोभयभूरेकः**

यथा—

अतन्द्रचन्द्राभरणा समुद्दीपितमन्मथा ।
तारकातरला श्यामा सानन्दं न करोति कम् ॥७२॥

---

अत्रेति। किमितीत्यादेः प्रश्नस्य यदुन्नायकमुत्तरं कोपेनेत्यादिरूपमालङ्कार इत्यन्वयः।

अत्रापह्नुतेर्वाक्यार्थस्याप्रसङ्गे प्रतिषेधानुपपत्त्या प्रश्नमाक्षिप्य विश्रान्तावुत्तरालङ्कारस्यैव व्यञ्जकत्वम्, नापह्नुतेः; तस्यास्तन्मुखनिरीक्षकत्वात्, सत्प्रतिपक्षोत्थापकस्योपाधेर्हेत्वाभासाभावेवत्[1]।

अलङ्कारमूलमलङ्कारमाह—महिलेति।

महिलासहस्रभृते[2] तव हृदये सुभग साऽमान्ती।
[3]अनुदिवसमनन्यकर्माङ्गं तनुकमपि[4] तनयति॥

अत्रेति। तनोस्तनूकरणे हृदये स्थानाप्राप्तिर्हेतुः। तदाह—हेत्वलङ्कारेणेति। एवमिति [5]कविनिबद्धकत्वतन्निबद्धवक्तृकत्वयोर्भेदादित्यर्थः।

उभयशक्तिमूलमाह—शब्देत्यादि। एकोऽलङ्काररूपः।

अतन्द्रोऽनाच्छन्नोऽनल्पश्च चन्द्रः शशी कर्पूरश्च। तारका नक्षत्रं नेत्रमध्यश्च। श्यामा रात्रिर्वर्णविशेषवती सितासितामितादिसकलवसनाभरणानुलेपनसुभगा च।

---

१. भासत्वाभावेति ख०। २. भरिते इति ख०।
३. अनु नास्ति ख०। ४. तनुमति इति ख०। ५. कविवक्तृकत्वेति ख०।

अत्रोपमा व्यङ्ग्या ।

**भेदा अष्टादशास्य तत् ॥ ४१ ॥**

---

अत्र चन्द्रतारकाश्यामापदानां नानार्थत्वाच्छब्दशक्तिरुद्भटा । [1]पदान्तरेऽर्थशक्तिरिति । [2]स्त्रीविशेष एव रात्रिरित्युपमायामुभयशक्तिमूलतांऽशभेदेन[3] शब्दपरिवृत्त्यसहत्वासहत्वात् ।

अत्र [I]केचित्—'श्यामा'पदस्थाने 'रजनी'पदप्रक्षेपेऽपि[4] स्त्रीसाम्यमवगम्यते । एवं सति च [5]तस्मिन् सम्भेदेनान्यतर[6]वैयर्थ्यमित्युभयशक्तिमूलोऽयमलङ्कार इत्याहुः, तन्न; तत्परिवृत्तिसहत्वेऽपि तन्मूलकत्वे शब्दार्थशक्तिमूल[7]कत्वविभागो न स्यात्, नियामकाभावात् । किञ्च, श्यामापदपरिवर्तने विवक्षिते स्त्रीविशेषसाम्याप्रतिपत्तिप्रसङ्गात् । न च 'श्यामा'पदपरिवर्तने[8] सहत्वासहत्वाभ्यामुभयमूलत्वे 'वाक्ये द्व्युत्थम्' इति नियमभङ्गः स्यादिति वाच्यम्, पदान्तरसाचिव्येनैव श्यामापदस्य व्यञ्जकत्वात् । यत्तु शब्दशक्तिं विना अर्थशक्तेरनुत्थानादुभयशक्तिमूलो न पृथगित्याहुः, तदसत् ; श्यामेव श्यामा सर्वमानन्दयतीति विशिष्टव्यङ्ग्यस्योभयशक्तिं विनाऽनुत्थानात् ।

ननु वस्तुनोऽपि व्यङ्ग्यस्योभयशक्तिमूलत्वे सम्भवति कथमेक इत्युक्तम् ? मैवम्, रहस्ये वस्तुनि व्यङ्ग्य एव गोपनाय नानार्थपदोपादानम्, तद्गोपने च शब्दशक्तय एव प्रभवन्तीत्युभयश[9]क्तिमूलताविरहात् । अत एव शब्दशक्तिमूले 'पंथिअ एत्थ' इत्याद्युदाहृतम् ।

अष्टादशेति । अर्थान्तरसंक्रमितात्यन्ततिरस्कृतवा[10]च्यालक्ष्यक्रमव्यङ्ग्ये [द्वौ] (विवक्षितान्यपरवाच्ये रसादिरेकः, लक्ष्यक्रमव्यङ्ग्ये) शब्दशक्तिमूले वस्त्वलङ्कृती । अर्थशक्तिमूले[11] द्वादश । उभयशक्तिमूलश्चैकः ।

---

I. मिश्रमतमिति तत्कृतव्याख्यातो वक्ष्यते ।

१. पदान्तरेषु इति ख० ।　२. स्त्रीविशेष एव रात्रि इति नास्ति ख० ।

३. भेदेनाशब्द इति ख० ।　४. अपि नास्ति ख० ।

५. तस्मिन्नंशभेदे इति ख० ।　६. तरस्येति ख० ।

७. मूलत्वेति ख० ।　८. परिवर्तनापरिवर्तनेति ख० ।

९. शक्ति नास्ति ख० ।　१०. वाच्यलक्ष्येति ख० ।

() इत्यन्तःपातिपाठो नास्ति ख० । ११. मूला० ख० ।

अस्येति ध्वनेः ।

ननु रसादीनां बहुभेदत्वेन कथमष्टादशेत्यत आह—

**रसादीनामनन्तत्वाद् भेद एको हि गण्यते ।**

अनन्तत्वादिति तथाहि नवरसाः । तत्र शृङ्गारस्य द्वौ भेदौ—संभोगो विप्रलम्भश्च । संभोगस्यापि परस्परावलोकनालिङ्गनपरिचुम्बनादिकुसुमावचय[1]जलकेलिसूर्यास्तमयचन्द्रोदयषड्ऋतुवर्णनादयो बहवो भेदाः ।

विप्रलम्भस्याभिलाषादय उक्ताः । तयोरपि विभावानुभावव्यभिचारिवैचित्र्यम् । तत्रापि नायकयोरुत्तममध्यमाधमप्रकृतित्वम् । तत्रापि देशकालावस्थादिभेदा इत्येकस्यैव रसस्यानन्त्यम्, का गणना त्वन्येषाम् । असंलक्ष्यक्रमत्वं तु सामान्यमाश्रित्य रसादिध्वनिभेद एक एव गण्यते ।

**वाक्ये द्व्युत्थः**

द्व्युत्थ इति शब्दार्थोभयशक्तिमूलः ।

---

अनन्तराकृष्टस्याऽसङ्गतिरित्याह—अस्य ध्वनेरिति ।

परिचुम्बनादीत्यादिपदेनान्तराङ्गान्तरग्रहणम् । नायकयोरित्येकशेषः । [2]उत्तमेत्यादि । प्रकृतिः स्वभावः । [3]स्वापेक्षकोत्तमस्वजातीयनिकृष्टानुरागित्वेनोत्तमप्रकृतित्वादि । देशो विजनादिः । [4]कालो वसन्तादिः । अवस्था बाल्यादिका । अन्येषां रसानां तदाभासानाञ्चेत्यर्थः । तदेकत्वगणने किं बीजमित्याह—असंलक्ष्येत्यादि । [5]सामान्यं रसादिषु भावादिष्वप्यनुगतो धर्मः । एकोऽसंलक्ष्यक्रमः ।

'वाक्य' इत्यादि । ननु [6]द्व्युत्थनामको भेद इत्याह—शब्दार्थोभयेत्यादि । एकत्र पदेऽन्वयव्यतिरेकानुविधानानुविधानविरहाद् वाक्यगामितानियमः । केचित्तु प्रायिकमेतत् ।

---

1. कश्चिदस्तीति परमानन्दधृतपाठत्वेन प्रतिभाति । कश्चिदतीतैः-प्रचलितः पाठः ।
१. कुसुमोच्चयेति पाठान्तरम् ।
२. उभयेति ख० । ३. सापेक्षमेवोभयसजातीय इति ख० ।
४. कालो नास्ति ख० । ५. सामान्यरसा० इति ख० ।
६. द्व्युत्थात्मको इति ख० ।

## पदेऽप्यन्ये

'अपि'शब्दाद् वाक्येऽपि । [1]एकावयवस्थितेन भूषणेन कामिनीव पदद्योत्येन व्यङ्ग्येन वाक्यव्यङ्ग्याऽपि भारती भासते ।

---

तमनुगतवती [2]शठस्तदर्थे त्वमपि च[3] मम सदृशी कृतासि धात्रा ।
वहति वपुरिदं गतागतैस्तेऽनवरतखेदमवाप्य यत् कृशत्वम् ॥

इत्यत्र 'नवरत'स्थाने 'गुरुपरी'ति पाठे वक्तृबोद्धव्यवैशिष्ट्यैः सद्यः कामुकसम्भोगस्य प्रकाशेनार्थशक्तिमूलत्वम्[4], सति च तस्मिन् वक्त्रादिवैशिष्ट्यमनपेक्ष्यैव शब्दशक्तिरेव प्रभवतीति [5]पदेऽप्युभयशक्तिमूलतादर्शनादित्याहुः, तन्न; तत्पदान्वयव्यतिरेकानुविधानेन तन्मूलताविरहात् । गुरुपरीति पाठे प्रथमरताप्रतीतेः ।

पदेऽपीति—अन्ये सप्तदश 'अपि'शब्दस्यानुक्तपदांशादिसमुच्चायनं बोधयति ।

'अपि' शब्दादित्यादि । अलङ्कारादीनां पदांशादिव्यङ्ग्यत्वासम्भवात् । एकावयवेत्यादि । द्योत्येन बोध्येन, व्यङ्ग्येन [6]व्यञ्जनाविषयेण, भारती [7]काव्यता, भासते चमत्कुरुते । वाक्यव्यङ्ग्येत्यर्श [8]आदित्वादच् । वाक्यस्य व्यङ्ग्यं यत्रेति बहुव्रीहिर्वा । यद्वा भारती चमत्कारः, स च यत्किञ्चिदेकपदसाध्यत्वाद् वाक्यस्यैव व्यङ्ग्यः, तथापि पदस्य [9]शक्तिरुद्भटत्वेन तद्व्यङ्ग्येन भासते प्रतीतिपथमवतरति ।

---

१. एकावयवसंस्थेन भूषणेनेव कामिनी ।
पदद्योत्येन सुकवेर्ध्वनिना भाति भारती ॥
( द्र० ध्व० आ० वृ० ३।१ )

२. शठं मदर्थे इति ख० ।　३. च क० नास्ति ।
४. मूलकत्वमिति ख० ।　५. पदेषूभय इति ख० ।
६. व्यञ्जकविशेषेण इति ख० ।　७. काव्यम् इति ख० ।
८. अर्श आदिभ्योऽच् (पा०सू०५।२।१२७) ।　९. शक्तिरुद्भटत्वेनेति ख० ।

तत्र पदप्रकाश्यत्वे क्रमोदाहरणानि—

यस्य मित्राणि मित्राणि शत्रवः शत्रवस्तथा ।
अनुकम्प्योऽनुकम्प्यश्च स जातः स च जीवति ॥७३॥

अत्र द्वितीय 'मित्रादि'शब्दा आश्वस्तत्वनियन्त्रणीयत्वस्नेहपात्रत्वादिसंक्रमितवाच्याः ।

खलववहारा दीसन्ति दारुणा जहवि तहवि धीराणं ।
हिअअवअस्सबहुमआ ण हु ववसाआ विमुज्झन्ति ॥७४॥
( गा० स० (?) वे० ६७८ )

अत्र विमुज्झन्तीति ।

---

पदप्रकाश्यत्व इति पदात् प्रकाशत [1]इत्युक्तेऽर्थाद् व्यङ्ग्यस्य । पदप्रकाशत्व इत्यपि पाठः ।

अत्रेति । एकेनादिपदेन शत्र्वनुकम्प्यजातजीवतिपदानि । द्वितीयेन च सुजन्मत्वश्लाघ्यजीवनत्वे परिगृह्येते[2], विश्वासस्यातिशयो यावज्जीवस्थिरत्वं व्यङ्ग्यम् । एवं निर्यन्त्रणाद्यतिशयाश्च ।

अत्र वाक्यार्थानां प्रत्येकविश्रान्तत्वेन[3] नैकवाक्यता, तेन पदानामेव [न] वाक्यस्य व्यञ्जकतेत्यवधेयम् ।

[4]एवं, सर्वत्र प्रथममित्रादिपदार्थानां नानुपयोगित्वबाध इति न तेषु लक्षणेत्याह—द्वितीयेत्यादि । अर्थान्तरसंक्रमितवाच्यलक्षणाया व्यञ्जकत्वमुक्तम्[5] ।

अत्यन्ततिरस्कृतवाच्याया आह—खलेत्यादि ।

खलव्यवहारा दृश्यन्ते दारुणा यद्यपि तथापि धीराणाम् ।
हृदयवयस्यबहुमता न खलु व्यवसाया विमुह्यन्ति ॥

दारुणाः प्राणानामपि द्वेषकाः, हृदयमेव वयस्यः, सदर्थग्राहकत्वात् ।

अत्रेत्यादि । मोहस्य चेतनधर्मस्य व्यवसायेषु बाधात् । विमुह्यन्तीति त्यागाभावे [6]लक्षणामाह । अत्र मोहपदेन स्थगितत्वे

१. इत्यर्थः तत्त्वे इति ख० । २. परिग्राह्यन्ते इति क० ।
३. विश्रान्तत्वेनैकवाक्यता इति ख० । ४. नैवमिति क० ।
५. उक्तमिति नास्ति ख० । ६. लक्षणा मोहस्यात्यन्ततिरस्कारः इति ख० ।

लावण्यं तदसौ कान्तिस्तद्रूपं स वचःक्रमः ।
तदा सुधाऽऽस्पदमभूदधुना तु ज्वरो महान् ॥७५॥

अत्र तदादिपदैरनुभवैकगोचरा अर्थाः प्रकाश्यन्ते ।

यथा वा—

---

लक्षणया धीराणां सदाशयत्वं व्यज्यते इत्यन्त्यतिरस्कारः । [१]अत्र व्यवसाया इति बहुवचनेन प्रकाशितस्य महाशयत्वस्य भावप्रकर्षकत्वम् सर्वत्रैवमवधेयम् ।

अलक्ष्यक्रमव्यङ्ग्यमाह—लावण्यमित्यादि । अवयवानां प्रत्येकमकृत्रिममनोहारित्वम् । लावण्यरूपनिष्ठोऽनुभावकत्वातिशयः कान्तिः । अनुभवस्मरणाभ्यां [२]सुधाऽऽस्पदत्वज्वरत्वे । तदादीत्यादिपदादसाविति ।

तदिति[३] । तदादिपदानां परिग्रहः । अनुभवैकगोचरा, [४]न तु निर्वक्तुं शक्या । अस्य व्यङ्गस्य [५]विप्रलम्भे प्रकर्षकत्वम्, नालक्ष्यक्रमत्वम्, तन्मुखेनैव विप्रलम्भस्य सहृदयहृदयोदयत्वात्[६] । [७]तदादीनां बुद्धिविषयताऽवच्छेदकप्रकारेण शक्तौ लावण्यातिशये व्यङ्ग्यः ।

[८]अत्र तदादिपदानामन्वयव्यतिरेकाभ्यां [९]तन्मूलता । ननु 'तदा [१०]सुधाऽस्पदमभूत्' इत्यादिवाक्यसहकारेणैव तदादिपदानां विवृतार्थव्यञ्जकत्वम्, अन्यथाप्रसिद्धिपरामर्शकत्वमपि स्यात् । ततश्च वाक्यस्यैव [११]व्यञ्जकत्वानुप्रवेशः, न पदानामित्याह—यथा वेति[१२] ।

वस्तुतस्तु विप्रलम्भसम्भोगभेदेन [१३]पूर्वापरमतयोर्भेदत्वात् 'यथा वा' इत्युक्तम् ।

---

१. तत्र व्यवसायप्रच्यवनेन प्रकाशितस्येति ख० ।
२. सुधास्पन्देति ख० । ३. 'स' इति अधिकः पाठः ख० ।
४. 'न तु' नास्ति ख० । ५. विप्रलम्भप्रकर्षकत्वे इति ख० ।
६. गमत्वादिति ख० ।
७. तदानीमिति ख० ।
८. तत्रेति ख० । ९. तन्मूलकतेति ख० ।
१०. सुधास्यन्देति ख० । ११. व्यञ्जकत्वम्, न तु पदानामिति ख०, ङ० ।
१२. चेति इति ख० । १३. पूर्वापरलक्षयोर्भेदादिति ख० ।

मुग्धे मुग्धतयैव नेतुमखिलः कालः किमारभ्यते
मानं धत्स्व धृतिं बधान ऋजुतां दूरे कुरु प्रेयसि ।
सख्यैवं प्रतिबोधिता प्रतिवचस्तामाह भीतानना
नीचैः शंस हृदि स्थितो हि ननु मे प्राणेश्वरः श्रोष्यति ॥७६॥

( अ० श० ९७ )

अत्र भीताननेत्यनेन हि नीचैः शंसनविधानस्य [1]युक्तता गम्यते । भावादीनां पदप्रकाश्यत्वेऽधिकं न वैचित्र्यमिति न तदुदाह्रियते ।

रुधिरविसरप्रसाधितकरवालकरालरुचिरभुजपरिघः ।
झटिति भ्रुकुटिविटङ्कितललाटपट्टो विभासि नृप भीम ॥७७॥

---

मुग्धे उपदेशग्राहिणी । एवकारोऽयोगव्यवच्छेदार्थः । अखिलोऽतीतो वर्तमानो भविष्यंश्च । आरम्भेणोत्साहातिशयः । धत्स्व बलाद् धारय[2] । बधानेति[3] बन्धनेनापसरणाशक्यताप्रतीतिर्वीप्सायां मुहुर्मुहुर्बोधिता । प्रतिकूलं वचनं प्रतिवचः ।

अत्रेति । नीचैः शंसनस्य विधानमप्राप्तप्रापकत्वं हि प्रत्ययप्रतिपाद्यम् । भीतं [4]भयाज्जन्यं विच्छायं [5]वैक्लव्यवदाननं यस्याः । प्रवर्तनाया अनाहार्यत्वेन युक्तत्वम्, तच्च[6] तनुगतविच्छायत्वलक्षितभयगम्यमित्याह—भीताननेत्यनेनेत्यादि । भयप्रतिपाद्याकृत्रिमानुरागेण सम्भोगः प्रकृष्यत इति तस्य [7]भीताननपदमूलता ।

भावादीनामित्यादि । रसापेक्षया [8]अपकृष्टानाममीषां [9]पदव्यङ्ग्यत्वे रसवन्न वैचित्र्यमित्याह-नाधिकमिति । पदप्रकाश्यत्व इति—पदात् प्रकाशो यस्येति विग्रहः ।

शब्दशक्तिमूलालङ्कारमाह—रुधिरेति । विसरो धारा । उत्कर्षकत्वेन प्रसाधम्, [10]मित्रशत्रुविषमभेदेन करवालरुचिरता । [11]परिघा

---

१. युक्ततरतेति पाठान्तरम् ।
२. अलम्बस्वेति ख० ।
३. इति नास्ति ख० ।
४. भयजन्यमिति ख० ।
५. वैक्लव्यं नास्ति ख० ।
६. तच्चाननगतेति ख० ।
७. पद नास्ति ख० ।
८. प्रकृष्टानामिति ख० ।
९. पदव्यङ्ग्यत्व रसत्व इति ख० ।
१०. मित्राशत्रुविषय० इति ख० ।
११. परिघार्गला इति ख० ।

अत्र भीषणीयस्य भीमसेन उपमानम् ।

भुक्तिमुक्तिकृदेकान्तसमादेशनतत्परः ।
कस्य नानन्दनिस्यन्दं विदधाति सदागमः ॥ ७८ ॥

काचित् संकेतदायिनमेवं[१] मुख्यया वृत्त्या शंसति ।

---

[२]तत्कृतजयलक्ष्मीनिरोधकत्वात्[३] । विटङ्कितस्तदाकाररेखान्वितः[४] । विस्तीर्णत्वात् [५]पट्टता ।

अत्रेति । भीषयतीति भीषणीयः, कर्तर्यनीयः । '[६]कृत्यमतोऽन्यत्रापि'इति वचनात् । हेतुभये भियोण्यन्तता[७] । भीमसेनः पाण्डवभेदः । विभासीति मध्यमपुरुषान्वयान्न[८] रूपकम्, तत्र विधेयप्राधान्येनैवान्वयात्, अत एव 'मुखचन्द्रो हसति' इत्यत्र हसनस्य रूपके बाधकम्, उपमायां साधकमिति वक्ष्यति ।

शब्दशक्तिमूलवस्तुव्यङ्ग्यम्, आह—भुक्तीत्यादि । भुक्तिः '[९]सुखोपभोगः सम्भोगश्च; मुक्तिश्चरमदुःखध्वंसो गृहकर्मत्यागश्च । एकान्तो निश्चयो विजनञ्च । समादेशो विधिः कथनञ्च । आनन्दो नित्यसुखं रतिसुखञ्च । सदागमः सच्छास्त्रं सतः सुन्दरस्यागमनञ्च ।

काचिदित्यादि । [१०]सङ्केतदायिनमिति । णिनिस्ताच्छील्यावगमः । एवं श्लिष्टशब्देन । नन्वत्र सुन्दरागमनमिव सच्छास्त्रमित्युपमा कथं न स्यादित्याह—मुख्ययेत्यादि । मुख्यया वृत्त्या उद्देश्यत्वेन सुन्दरागमनस्य वस्तुतः प्रकृतस्य नोपमानता, न चोपमेयता, सच्छास्त्रस्यैव प्रकरणावतारात् । रहस्यभङ्गभयेन सच्छास्त्रेणाच्छाद्याभिधानात् । तेन वस्तुध्वनिरेवेत्यर्थः । अत्र सुन्दरागमनस्य वस्तुनो व्यञ्जने सदागमपदमेव प्रभवतीति पदमूलता ।

---

१. मेवममुख्ययेति पाठान्तरम् ।　२. तत्कृत नास्ति ख० ।
३. निबोधकत्वात् इति ख० ।　४. कारवेशान्वितो इति ख० ।
५. पटुता इति ख० ।　६. कृत्यल्युटो इति ख० ।
७. सन्नन्तता इति ख० ।　८. पुरुषानन्वया इति ख० ।
९. शब्दोपभोगः इति ख० ।
१०. सङ्केतेत्यारभ्य नन्वत्रेत्यन्तं ख० पु० नास्ति ।

सायं स्नानमुपासितं मलयजेनाङ्गं समालेपितं
यातोऽस्ताचलमौलिमम्बरमणिर्विस्रब्धमत्रागतिः ।
आश्चर्यं तव सौकुमार्यमभितः क्लान्ताऽसि येनाधुना
नेत्रद्वन्द्वममीलनव्यतिकरं शक्नोति ते नासितुम् ॥७९॥

अत्र वस्तुना कृतपरपुरुषपरिचया [1]क्लान्ताऽसीति वस्तु 'अधुना'पदद्योत्यं व्यज्यते ।

तदप्राप्तिमहादुःखविलीनाशेषपातका ।
तच्चिन्ताविपुलाह्लादक्षीणपुण्यचया तथा ॥८०॥
चिन्तयन्ती जगत्सूतिं परब्रह्मस्वरूपिणम् ।
निरुच्छ्वासतया मुक्तिं गताऽन्या गोपकन्यका ॥८१॥
( वि० पु० ५।१३।२१, २२ )

अत्र जन्मसहस्रैरुपभोक्तव्यानि दुष्कृतसुकृतफलानि वियोगदुःखचिन्तनाह्लादाभ्यामनुभूतानीत्युक्तम् । एवं च 'अशेष' 'चय'-पदद्योत्ये अतिशयोक्ती ।

---

अर्थशक्तिमूलवस्तुना वस्तुव्यङ्ग्यमाह—सायमित्यादि । सायं स्नानं श्रमनाशकमुपासितं यत्नतः कृतम् । अम्बरमाकाशं [2]वस्त्रञ्च । [3]वस्त्रस्थमणिरिवाम्बरमणिः सूर्यः । तेन प्रकाशाभावो [4]मणेः मौलिगामित्वं युक्तमेव । विस्रब्धा भीता । अभितो बाह्याभ्यन्तरतः । मीलनं मुद्रणम् । व्यतिकरः सम्बन्धः ।

अत्रेति । वस्तुना [5]पदार्थेन । अधुना, न तु कालान्तरे । एवं क्रमो दृष्ट इत्याकारेण तेनाधुना पदार्थस्योद्भटशक्तिकता ।

अर्थशक्तिमूलवस्तुव्यङ्ग्यालङ्कारमाह—तदप्राप्तीत्यादि ।

अत्रेति । अशेषचय[6]पदयोरपि वाचकत्वात्, न च विरहचिन्तयोर्दुष्कृतसुकृततादात्म्यावगमादेतदतिशयोक्तिद्वयस्यापि व्यङ्ग्यता । दुष्कृत-

---

१. स्नातासीति पाठान्तरम् ।
२. वासश्च इति ख० ।
३. वासस्थेति ख० ।
४. मणौ इति क० ।
५. पदार्थेन नास्ति ख० ।
६. पदयोरशेषेति ख० ।

क्षणदाऽसावक्षणदा वनमवनं व्यसनमव्यसनम् ।
बत वीर तव द्विषतां पराङ्मुखे त्वयि पराङ्मुखं सर्वम् ॥८२॥

अत्र शब्दशक्तिमूलविरोधाङ्गेनार्थान्तरन्यासेन विधिरपि त्वामनुवर्तत इति 'सर्व'पदद्योत्यं वस्तु ।

तुह वल्लहस्य गोसाम्मि आसि अहरो मिलाणकमलदलो ।
इअ णवबहुआ सोऊण कुणइ वअणं महिसंमुहम् ॥८३॥
( गा० स० ( ? ) वे० ६६८ )

अत्र रूपकेण त्वयाऽस्य मुहुर्मुहुः परिचुम्बनं तथा कृतम्, येन म्लानत्वमिति मिलाणादिपदद्योत्यं काव्यलिङ्गम् । एषु च स्वतःसम्भवी व्यञ्जकः ।

---

सुकृतयोस्तापतन्नाशकत्वाभावात्[1][2] । तत्फलयोस्तु सुखदुःखयोः 'अशेष, चय'-पदाभ्यामुपादानादत्र च 'अशेष, चय' पदार्थयोरन्वयव्यतिरेकानुविधानात् तन्मूलतैवेत्याह – अशेषचयपदेत्यादि ।

अर्थशक्तिमूलालङ्कारव्यङ्ग्यं वस्त्वाह—क्षणदेत्यादि । क्षणदा रात्रिः, तदितरा [ अक्षणदा ] नोत्सवं दत्ते च । [3]वनमरण्यम्, अवनं नारण्यं रक्षकञ्च । व्यसन द्यूतादि [ अव्यसनम् ] व्यसनभिन्नम्, व्यस्यति बहुलं भवतीति वसनम्, नञा समासात् संक्षिप्तञ्च । तवेति [4]द्विषः । कर्मणि षष्ठी ।

अत्रेति । अर्थान्तरन्यासस्य सर्वपदस्य व्यञ्जकस्य नानार्थता-भावाद् वस्तुनोऽर्थशक्तिमूलालङ्कारव्यङ्ग्यता ।

ननु क्षणदादीनां [5]नानार्थत्वाच्छब्दशक्तिमूलत्वमेवेत्याह—शब्द-शक्तीत्यादि । अङ्गमुत्थापकम्, विरोधोऽर्थान्तरन्यासस्यैवोत्थापकः, न तु तस्य वस्तुव्यञ्जकता ।

अर्थशक्तिमूलालङ्कारव्यङ्ग्यालङ्कारमाह—तुहेति ।

तव वल्लभस्य प्रातरासीदधरो म्लानकमलदलम् ।
इति नववधूः श्रुत्वा करोति वदनं महीसम्मुखम् ॥

प्राकृते लिङ्गानियमाद् दलपदस्य पुंस्त्वम् ।

अत्रेति । रूपकेणाधरस्य म्लानकमलदलत्वेन [6]म्लानत्वे परि-चुम्बनं हेतुरिति काव्यलिङ्गता । मिलाणादिपदं म्लानकमलदलमिति । एष्विति । पूर्वमनुसृत्य व्याख्येयम् ।

---

१. उपस्थापकत्वाभावत् इति ख० । २. सुकृतयोरुपस्थापकाभावात् इति ङ० ।
३. वनमरण्यमरक्षकं चेति ख० । ४. द्वेषकर्मणि इति ख० ।
५. नानार्थत्वात् नास्ति ख० । ६. म्लानञ्चेति ख० ।

राईसु चंदधवलासु ललिअमाप्फालिऊण[1] जो चावं ।
एकच्छत्तं वि[2]अ कुणइ भु[3]अणरज्जं विजम्भन्तो ॥८४॥
( गा० स० ( ? ) वे० ६६२ )

अत्र वस्तुना येषां कामिनामसौ राजा स्मरस्तेभ्यो न कश्चिदपि तदादेशपराङ्मुख इति जाग्रद्भिरुपभोगपरैरेव तैर्निशाऽतिवाह्यत इति 'भुअणरज्जं' पदद्योत्यं वस्तु प्रकाश्यते ।

निशितशरधियाऽर्पयत्यनङ्गो
दृशि सुदृशस्स्वबलं वयस्यरा[4]ले ।
दिशि निपतति यत्र सा च तत्र
व्यतिकरमेत्य समुन्मिषन्त्यवस्थाः ॥ ८५ ॥

अत्र वस्तुना युगपदवस्थाः परस्परविरुद्धा अपि प्रभवन्तीति 'व्यतिकर'पदद्योत्यो विरोधः ।

---

कविप्रौढोक्तिनिष्पन्नार्थव्यञ्जकतामाह—राईस्विति ।

रात्रीषु चन्द्रधवलासु ललितमास्फाल्य यश्चापम् ।
एकच्छत्रमेव करोति भुवनराज्यं विजृम्भमाणः ॥

यः प्रकृतः कामः । चापास्फालनेन तु कामस्य भुवनराज्यकरणं [5]कविप्रौढोक्तिप्रसिद्धम् ।

अत्रेति । वस्तुना भुवनराज्यपदार्थेन । तेभ्य इति पञ्चम्यपायार्थे तदपेतः सन् । कश्चिदपि न तदादेशपराङ्मुखः - अपेतः पृथग्भूतः । निर्धारणपञ्चमीपक्षो न साधुः ।

केचित्तु तेभ्यो[6] न कश्चिदस्ति [1]पराङ्मुखः । न कश्चिदिति चतुर्थ्यन्तं व्याख्यान्ति, तदसत्; सापेक्षत्वात् समासो न स्यात्, तादर्थ्याच्चतुर्थ्याः कारकत्वाभावात् ।

वस्तुमूलालङ्कारमाह—निशितेत्यादि । अराले कुटिले विदग्धयौवन इत्यर्थः, व्यतिकरः परस्परसम्बन्धः । एत्य प्राप्य । एतेन सम्बन्धस्यास्वा-

---

1. कश्चिदस्तीति परमानन्दधृतपाठत्वेन प्रतिभाति । कश्चि[illegible]तीति प्रचलितः पाठः ।
१. अमप्फालि इति पाठान्तरम् । २. व, विण इति पाठान्तरम् ।
३. तिभुवण इति पाठान्तरम् । ४. वयस्यबालेऽपि पाठान्तरम् ।
५. कविप्रौढोक्त्यैव सिद्धम् इति ख० ।
६. यस्तदादेशस्तत् पराङ्मुखो न कश्चिदितीति ख० ।

वारिज्जन्तो वि पुणो संदावकदत्थिएण[1] हिअएण ।
थणहरवयस्सएण विसुद्धजाई ण चलइ से हारो ॥ ८६ ॥
( गा० स० ( ? ) वे० ६६४ )

अत्र विशुद्धजातित्वलक्षणहेत्वलङ्कारेण हारोऽनवरतं कम्पमान एवास्ते इति 'ण चलइ'पदद्योत्यं वस्तु ।

सो मुद्धसामलङ्गो धम्मिल्लो कलिअललिअणिअदेहो ।
तीए खंधाहि बलं गहिअ सरो सुरअसंगरे जअइ ॥ ८७ ॥
( वि० बा० ली० ६६८ )

अत्र रूपकेण मुहुर्मुहुराकर्षणेन तथा केशपाशः स्कन्धयोः प्राप्तः, यथा रतिविरतावप्यनिवृत्ताभिलाषः कामुकोऽभूदिति 'खंधाहि'पदद्योत्या विभावना । एषु कविप्रौढोक्तिमात्रनिष्पन्नशरीरः ।

णवपुण्णिमामिअङ्कस्स सुहअ कोत्तंसि भणसु मह सच्चम् ।
का सोहग्गसमग्गा पओसरअणिव्व तुह अज्ज ॥ ८८ ॥
( गा० स० ( ? ) वे० ६८६ )

---

भाविकत्वम् । अवस्था [2]हसितरुदितप्रलपितमूर्च्छितादयः । युवत्या दृशि कामस्य स्वबलार्पणं प्रौढोक्तमेव ।

अलङ्कारव्यङ्ग्यं वस्त्वाह--वारिज्जन्तो इति ।

वार्यमाणोऽपि पुनः सन्तापकदर्थितेन हृदयेन ।
स्तनभरवयस्येन विशुद्धजातिर्न चलत्यस्या[3] हारः ॥

हारभारवारकत्वेन हृदयस्य [4]स्तनवयस्यता । चलनाभावे विशुद्धजातित्वं हेतुः, तदाह—हेत्वलङ्कारेणेति ।

अलङ्कारमूलालङ्कारमाह--सो मुद्धेति ।

स मुग्धश्यामलाङ्गो धम्मिल्लः कलितललितनिजदेहः ।
तस्याः स्कन्धाभ्यां बलं गृहीत्वा स्मरः सुरतसङ्गरे जयति ॥

स्कन्धोंऽसः सेनानिवेशश्च । बलं सामर्थ्यं सैन्यञ्च । धम्मिल्लः स्मर इति रूपकम् । [5]तीए नायिकायाः स्मरस्य च ।

कविनिबद्धवक्तृप्रौढोक्तिनिष्पन्नव्यङ्ग्यमाह—णवेति ।

---

१. अत्थिएण इति पाठान्तरम् ।    २. शब्दितादयः इति ख० ।
३. तस्याहारः इति ख० ।    ४. वयस्येति ख० ।    ५. देहो इति ख० ।

अत्र वस्तुना मयीवान्यस्यामपि प्रथममनुरक्तस्त्वम्, न तत इति 'णव' इत्यादि 'पओस' इत्यादिपदद्योत्यं वस्तु व्यज्यते ।

सहि णवणिहुवणसमरम्मि अङ्कबाली सहीए णिबिडाए ।
हारो णिवारिओ विअ उच्छरन्तो तदो कहं रमिअं ॥८९॥
( गा० स० (?) वे० ९९६ )

अत्र वस्तुना हारच्छेदानन्तरमन्यदेव रतमवश्यमभूत्, तत् कथय कीदृगिति व्यतिरेकः 'कहं'पदगम्यः ।

पविसंती घरवारं विवलिअवअणा विलोइऊण पहं ।
खन्धे घेत्तूण घडं हा हा णट्टोत्ति रुअसि सहि किन्ति ॥९०॥
( गा० स० वे० ९६८ )

अत्र हेत्वलङ्कारेण सङ्केतनिकेतनं गच्छन्तं दृष्ट्वा, यदि तत्र

---

नवपूर्णिमामृगाङ्कस्य सुभग कस्त्वमसि भण मम सत्यम् ।
का सौभाग्यसमग्रा प्रदोषरजनीव तवाद्य ॥

नवः प्रथमोदितो रजनीमुखं प्रदोषः । अनयोः सम्बन्धः क्षणिक एवेत्याह--मयीवेत्यादि ।

वस्तुमूलालङ्कारमाह--सहीति ।

सखि नवनिधुवनसमरे [1]अङ्कपाल्या सख्या निबिडया ।
हारो निवारित [2]एवोच्छ्रियमाणस्ततः कथं रमितः ॥

तत उद्वृण्वन् उक्तार्थतामापन्नः ।

प्रसिद्धतरेभ्योऽधिकत्वेन व्यतिरेकः । 'कहम्' इति पदस्य विस्मयार्थत्वात् ।

अलङ्कारमूलं वस्त्वाह--पविसंतीत्यादि ।

प्रविसन्ती गृहद्वारं विचलितवदना विलोक्य पन्थानम् ।
स्कन्धे गृहीत्वा घटं हा हा नष्ट इति रोदिषि सखि किमिति ॥

घटध्वंसे ( 76 b ) स्कन्धग्रहणं हेतुरित्याह--हेत्वलङ्कारेणेति ।

---

१. पुङ्कपालीसख्या इति मु० पु० ।

२. उद्वृण्वन् इति ख० । श्लोकस्य चतुर्थपादो छायापाठः क०पु० नास्ति ।

गन्तुमिच्छसि, तदाऽपरं घटं गृहीत्वा गच्छेति वस्तु 'किन्ति'-पदद्योत्यम्।

यथा वा—

विहलं खलं तुमं सहि दटठुणं कुडेण तरलतरदिट्ठिं।

वारप्फंसमिसेण अ अप्पा गुरुओत्ति पाडिअ विहिण्णो ॥९१॥

( गा० स० वे० ८८० )

अत्र नदीकूले लतागहने कृतसङ्केतमप्राप्तं गृहप्रवेशावसरे पश्चादागतं दृष्ट्वा, पुनर्नदीगमनाय द्वारोपघातव्याजेन बुद्धिपूर्वं [1]व्याकुलतया त्वया घटः स्फोटित इति मया चिन्तितम्, तत् किमिति नाश्वसिषि, तत्समीहितसिद्धये व्रज, अह ते श्वश्रू-निकटे सर्वं समर्थयिष्ये इति द्वारस्पर्शनव्याजेनेत्यपह्नुत्या वस्तु।

जोह्लाई महुरसेण अ विइण्णतारुण्ण उस्सुअमणा सा[2]।

बुड्ढावि णवोढव्विअ परवहुआ अहह हरइ तुह हिअअम्॥९२॥

( गा० स० ( ? ) वे० ९८४ )

अत्र काव्यलिङ्गेन वृद्धां परवधूं त्वमस्मानुज्झित्वाऽ-

---

किन्तीत्यादि, हेत्वभावे रोदनस्याहार्यता। स्कन्धग्रहणेन घटभङ्गस्य हेत्व-लङ्कारस्य कथं व्यञ्जकता? कारणान्तरतोऽपि तदुपपत्तेः। विवृत्य पथि विलोकनं सहकारीति चेत्, तस्यैव व्यञ्जकत्वमित्याह--यथा वेति।

विश्रृङ्खलां त्वां सखि दृष्ट्वा कुटेन तरलतरदृष्टिम्।

द्वारस्पर्शमिषेण चात्मा गुरुक इति पातयित्वा विभेदितः॥

[ विभिन्नः ] कुटो घटः, विभिन्न इत्यन्तर्भूतण्यर्थः। व्याजेन घटस्फोटनं पुनर्नदीगमनायेत्याह--अपह्नुत्या वस्त्विति।

अलङ्कारमूलालङ्कारमाह--जोह्लाई इत्यादि।

ज्योत्स्नया मधुरसेन च वितीर्णतारुण्योत्सुकमना सा।

वृद्धाऽपि नवोढेव परवधूरहह हरति तव हृदयम्॥

वृद्धाया हृदयहारित्वे ज्योत्स्नामधुरसाभ्यां दत्तं तारुण्यं हेतु-रित्याह—काव्यलिङ्गेनेति। नायककुचेष्टाया अशक्यवक्तव्यत्वेनाक्षेपः।

---

१. व्याकुलतया क्वचिन्नास्ति। २. सा क्वचिन्नास्ति।

भिलषसीति त्वदीयमाचरितं वक्तुं न शक्यमित्याक्षेपः 'परवहूआ'-पदप्रकाश्यः। एषु कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरः। वाक्यप्रकाश्ये तु पूर्वमुदाहृतम्। शब्दार्थोभयशक्त्युद्भवस्तु पद-प्रकाश्यो न भवतीति पञ्चत्रिंशद् भेदाः।

प्रबन्धेऽप्यर्थशक्तिभूः ॥ ४२ ॥

यथा गृध्रगोमायुसंवादादौ। तथाहि—

अलं स्थित्वा श्मशानेऽस्मिन् गृध्रगोमायुसङ्कुले।
कङ्कालबहुले घोरे सर्वप्राणिभयङ्करे ॥ ९३ ॥
न चेह जीवितः कश्चित् कालधर्ममुपागतः।
प्रियो वा यदि वा द्वेष्यः प्राणिनां गतिरीदृशी ॥ ९४ ॥

( म० भा०, आ० प०, अ० २५३ )

इति दिवा प्रभवतो गृध्रस्य पुरुषविसर्जनपरमिदं वचनम्।

आदित्योऽयं स्थितो मूढाः स्नेहं कुरुत साम्प्रतम्।
बहुविघ्नो मुहूर्तोऽयं जीवेदपि कदाचन ॥९५॥

---

उदाहृतम्—"उल्लास्य कालकरवालमहाम्बुवाहम्" इत्यादि। पदप्रकाश्यो न भवतीति—एकस्यैव पदस्यान्वयव्यतिरेकत्वविधानानुविधानासम्भवा-न्नोभयशक्तिमूलतेत्यर्थः। पञ्चत्रिंशदिति—उक्ताष्टादशसु सप्तदशध्वनयः पदवाक्यमूलत्वद्वैविध्येन चतुस्त्रिंशत्, उभयशक्तिमूलस्तु वाक्यमात्र-व्यङ्ग्यत्वेनैक इति मिलित्वा पञ्चत्रिंशत्।

प्रबन्ध इत्यादि। प्रबन्धो [2]महावाक्यम्, 'अपि'शब्दाद् वाक्ये पदे चेत्यर्थः। अर्थशक्तेर्भवत्याविर्भवतीत्यर्थशक्त्युद्भवो द्वादशविधः।

संवादादौ तत् [3]प्रथमतः। कालधर्मो मरणम्, [4]तमुपागतः। कश्चिन्न जीवित इति सम्बन्धः। दिवा प्रभवत इति रात्रावन्धत्वात्।

बहुविघ्न इत्यादि। अयं सन्ध्यासन्निहितः कालः, बहुविघ्नो राक्षस-कालत्वात्। एतत् कालापगमे जीवनं सम्भाव्यते। तदाह—जीवेदपीति।

---

१. व्यतिरेकानु इति ख०।
२. महाकाव्यम् इति ख०।
३. प्रथनतः इति क०।
४. तदुपगतः इति ख०।

अमुं कनकवर्णाभं बालमप्राप्तयौवनम् ।
गृध्रवाक्यात् कथं मूढास्त्यजध्वमविशङ्किताः ॥ ६६ ॥
( म० भा० आ० प०, अ० १५३ )

इति निशि विजृम्भमाणस्य गोमायोर्जनव्यावर्तननिष्ठं च वचनमिति प्रबन्ध एव प्रथते । अन्ये त्वेकादश भेदा ग्रन्थविस्तरभयान्नोदाहृताः, स्वयं तु [1]लक्ष्यतोऽनुसर्तव्याः । अपिशब्दात् पदवाक्ययोः ।

**पदैकदेशरचनावर्णेष्वपि रसादयः ।**

---

कनकवर्णाभम्, न तु कनकाभम्, तदा कनकगतकाठिन्यस्यापि प्रसङ्गात् । अप्राप्तेत्यादि । यौवनप्राप्तौ परदाराभिगमनादिदोषेणायुः[2]-संक्षेपसम्भावना स्यात् । बालत्वेन तदभावाद् भूताभिभव एवेत्यर्थः । बाला अविवेचकाः । बालत्वे हेतुमाह—अविशङ्किता इति ।

व्यावर्तननिष्ठं तदुद्देश्यकम् । विजृम्भमाणस्य विश्रब्धं सञ्चरतः । प्रबन्ध एवेति[3] । न तु यत्र कुत्रचिद् वाक्ये । प्रथते प्रकाशते । अन्य इत्यादिनोक्ता नोदाहृताः । महावाक्यस्यापि वाक्यत्वेन तदुदर्शनेनैव सुगमत्वादित्यर्थः । तदाह—लक्ष्यत इत्यादि । लक्ष्यते इति लक्ष्यं प्रेक्ष्यानुसर्तव्याः, वाक्येष्विव ज्ञातव्याः ।

पदैकदेश इत्यादि । पदैकदेशो नाम सुब्धात्वाख्यातभेदाद्भिन्नः । आदिपदादुपस्कारकः । स च त्रिविधः, अन्तरङ्गबहिरङ्गोभयरूपत्वात् । प्रथमस्त्वागम उपग्रहश्चेति द्विविधः । उपग्रहश्च—

यत्रात्मनेपदाद् भेदः कश्चिदर्थस्य [1]गम्यते ।
परस्मैपदतो वापि मन्यन्ते [4]तदुपग्रहम् ॥

इत्युक्तदिशाऽऽत्मनेपदपरस्मैपदगम्योऽर्थस्य विशेषः । द्वितीयो निपातोपसर्गकर्मप्रवचनीयादिभेदाद् बहुविधः । तृतीयः सर्वनामपूर्वनिपाताव्ययीभावद्विर्वचनादिभेदाद् द्विविधः । स्वातन्त्र्येणार्थप्रत्यायनादेषां पदैकदेशता ।

---

1. उपग्रहपदेन ।

१. लक्षणतो इति पाठान्तरम् ।　　२. दोषेणाद्युः इति ख० ।
३. इति नास्ति ख० ।　　४. तमुपग्रमिति ख० ।

तत्र प्रकृत्या यथा—

रइकेलिहिअणिअसणकरकिसलअरुद्धणअणजुअलस्स ।
रुद्दस्स तइअणअणं पव्वईपरिचुम्बिअं जअइ ॥९७॥

अत्र 'जयती'ति, न तु शोभत इत्यादि । समानेऽपि[1] स्थगनव्यापारे लोकोत्तरेणैव व्यापारेणास्य पिधानमिति तदेवोत्कृष्टम् ।

---

रइ इत्यादि ।

रतिकेलिहृतनिवसनकरकिसलयरुद्धनयनयुगलस्य ।
रुद्रस्य तृतीयनयनं पार्वतीपरिचुम्बितं जयति ॥

रतिकेल्या हृतं निवसनं येन, करकिशलयाभ्यां रुद्धं नयनयुगलं यस्य । 'निवसनान्त, युगलान्त' पदाभ्यां कर्मधारयः ।

केचित्तु रतिकेलिहृतनिवसनायाः[2] करकिशलयाभ्यां[3] रुद्धं नयनयुगलं यस्येति विग्रहमाहुः, तदसत्; [4]कृतनिवसनाकरकिशलयेत्यादिप्रयोगापत्तेः ।

[5]प्रकृत्यन्तरस्य न व्यञ्जकत्वमन्वयव्यतिरेकाभ्यां तदुपगमादित्याह—न त्विति । हेतुमाह—समानेऽपीत्यादि । स्थगनमाच्छादनम् । [6]तत्तु हस्तादिना कृतम्, लौकिकं परिचुम्बनं तु [7]पिधानोपकरणत्वेनाकृतत्वाल्लोकोत्तरमित्याह—लोकोत्तरेणेति । तदेव चुम्बनपिधानमेव, उत्कृष्टं चमत्कारविशेषानुगुणत्वात् । आनुगुण्यं रागातिशयहर्षलज्जादिसम्पत्तिद्वारा[8] रसातिशयपोषणात् । तच्च नयनविषयेण जयतिना [उत्कर्षः] गम्यत इति न शोभते प्रयोगः । तेन रागातिशयाद्यर्थं [9]प्रत्येकव्यञ्जकत्वं नोत्कर्षं प्रति, अनुशासनेन तत्र शक्त्युपगमात् । एतेन "समुदितमेव पदं वाचकम्, प्रकृतिप्रत्ययौ तु [10]स्वस्वार्थे व्यञ्जकावित्युत्कर्षो व्यङ्ग्यः" इति निरस्तम् । शक्त्योपपत्तौ [11]व्यञ्जना न प्रसरेत् । एवं सर्वत्रानुसन्धेयम् ।

---

१. हि इति क्वचिदधिकः । २. निवसनीयः इति ख० ।
३. लयाभ्यां इति ख० । ४. हृतेति ख० ।
५. प्रकृत्यन्तस्येति ख० । ६. तच्चेति ख० ।
७. प्रधानो० इति ख० । ८. द्वारकसातिशयेति ख० ।
९. प्रत्येवेति ख० । १०. स्वार्थव्यञ्जका इति ख० ।
११. व्यञ्जनानवसरात् इति ख० ।

यथा वा—

प्रेयान् सोऽयमपाकृतः सशपथं पादानतः कान्तया
द्वित्राण्येव पदानि वासभवनाद् यावन्न यात्युन्मनाः ।
तावत् प्रत्युत पाणिसंपुटगलन्नीवीनिबन्धं धृता[1]
धावित्वैव कृतप्रणामकमहो प्रेम्णो विचित्रा गतिः ॥ ९८ ॥

( का० अ० सु० वृ० ३।२।१५ )

अत्र 'पदानि' इति, न तु द्वाराणीति ।

तिङ्सुपोर्यथा—

पथि पथि शुकचञ्चूचारुराभाऽङ्कुराणां
दिशि दिशि पवमानो वीरुधां लासकश्च ।
नरि नरि किरति द्राक् सायकान् पुष्पधन्वा
पुरि पुरि विनिवृत्ता मानिनीमानचर्चा ॥ ९९ ॥

---

नाम्नो व्यञ्जकतामाह—[2]यथा वेति ।

प्रेयानित्यादि । सोऽयं प्रकृष्टप्रियत्वेन प्रसिद्धः । सशपथमित्युभयत्रान्वेति । सशपथं पादानतः सशपथमपाकृतश्चेति । प्रेयानिति कान्तयेति च[3] परस्परविरहाक्षमत्वम् । उन्मनाः सोत्कण्ठः, प्रत्युत विरोधे । पाणिसम्पुटे प्रणामार्थं बद्धाञ्जलौ गलद् [4]यद्रागौत्कण्ठ्यान्मुद्रणम्[5] । इत्थं[6] त्यजन्नीवीनिबन्धो यत्र [7]धारणेन प्रणामाञ्जलिनैव [8]स्खलतो नीवीबन्धस्यालम्बनम् ।

अत्रेति, द्वारादिव्यवच्छेदो व्यङ्ग्यः । स च सम्भोगसञ्चार्यौ-[9]त्सुक्यत्वेन सम्भोगपरिपोषकृत् ।

[10]यथेति । पथि पथीत्यादि । लासको नर्तकः । चर्चा प्रसङ्गः ।

---

१. धृतो इति पाठान्तरम् ।　२. तथेति ख०
३. च नास्ति ख० ।　४. यत् नास्ति ख० ।
५. रागौत्कण्ठ्यमुद्रणाम् इति ख०　६. इत्थं नास्ति ख० ।
७. धारणे इति ख० ।　८. छलतो इति ख० ।
९. औत्सुक्योद्बलनद्वारा इति ख० ।　१०. यथेति नास्ति ख० ।

अत्र 'किरती'ति किरणस्य साध्यमानत्वम् 'निवृत्ते'ति निवर्तनस्य सिद्धत्वम्, तिङा सुपा च, तत्रापि 'क्त'प्रत्ययेनातीतत्वं द्योत्यते।

---

अत्रेति। औणादिकल्युट्प्रत्ययेन किरणपदसिद्धिरिति [१]मिश्रमतं नानुमतम्, किरति तमांसीति कर्तरि व्युत्पन्नस्य [२]किरणपदेनाभिधानात् किरणपदं चिन्त्यम्। साध्यत्वसिद्धत्वे[३] तिङ्सुपोरनभिधेयत्वेन व्यङ्ग्ये एवेत्याह—तिङा सुपा चेति। किरणनिवृत्त्योः सिद्धत्वसाध्यत्ववैपरीत्येन कारणकार्यपौर्वापर्यविपर्ययमूलातिशयोक्तिव्यञ्जनद्वारा[४] वसन्तकालस्योद्दीपकत्वप्रकर्षः प्रत्याय्यते। क्तप्रत्ययेनेति। ननु क्तप्रत्ययेन वाच्यस्यातीतत्वस्य कथं व्यङ्ग्यत्वमिति चेदुच्यते—तदुपस्थितेः शक्यत्वेऽप्यनुभवस्य व्यञ्जनैकसाध्यत्वात्। स्वप्रकृतमानचर्चा[५] गतेत्यतीतत्वानुभवने[६] क्तप्रत्ययस्याक्षमत्वात्। प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थानुभावकत्वव्युत्पत्तेः। न च प्रकृत्यर्थेनैवान्वयः, निवृत्तिप्रकृत्यर्थस्या[७]तीतत्वबोधनायोग्यत्वात्। न च प्रकृतिप्रत्ययाभ्यामुभाभ्यामेव मानचर्चाया अतीतत्वबोधनादेकवैयर्थ्यम्, सम्भेदेनान्यतरस्य वैयर्थ्यात्। तस्मात् प्रकृत्यर्थान्वितस्वार्थानुभावकत्वं 'क्त'प्रत्ययस्य [८]व्यञ्जनादेवेति। यद्वा अतिशयेन ईतत्व[९] गतत्वं प्रकृत्या। प्रत्यायितस्यातीतत्वस्य पुनः 'क्त'प्रत्ययेन प्रत्यायनम[१०]तिशयावगमाय। 'शुक्लः शुक्लः' इत्यत्र द्वितीयशुक्लपदाद् यथा शुक्लत्वातिशयावगतिः। मानचर्चान्तरासमानकालीनत्वमेव मानचर्चातीतत्वातिशयः' इति।

---

१. मिश्रपदमिति ख०।

२. किरणपदस्य मयूखवाचितया कियानभिधानादिति ख०।

३. सिद्धत्वेन व्यङ्ग्यत्व इति ख०।

४. गम्यमाननिवृत्तिशीघ्रभावित्वव्यञ्जनद्वारा इति ख०।

५. प्रकृति इति ख०।

६. गतातीतत्वानुभवे इति ख०।

७. प्रकृत्यर्थस्यातीतत्वस्यातीतत्वबोधनायोग्यत्वात् इति ख०, ङ०।

८. व्यञ्जनयैवेति इति ख०।

९. निवृत्त्या इत्यधिकः ख०।

१०. अतिशयागमनायेति ख०।

यथा वा—

लिखन्नास्ते भूमिं बहिरवनतः प्राणदयितो
निराहाराः सख्यः सततमरुणोच्छूननयनाः ।
परित्यक्तं सर्वं हसितपठितं पञ्जरशुकै-
स्तथावस्था चेयं विसृज कठिने मानमधुना ॥ १०० ॥

( अ० श० ६ )

अत्र 'लिखन्नि'ति, न तु लिखतीति, तथा 'आस्ते' इति, न त्वासित इति, अपि तु प्रसादपर्यन्तमास्त इति, 'भूमिम्' इति, न तु भूमाविति, न हि बुद्धिपूर्वकमपरं किञ्चिल्लिखतीति तिङ्सुब्-विभक्तीनां व्यङ्ग्यम् ।

सम्बन्धस्य यथा—

गामारुहम्मि गामे वसामि णअरट्ठिइं ण जाणामि ।
णाअरिआणं पइणो हरेमि जा होमि सा होमि ॥१०१॥

( गा० स० वे० ७०५ )

अत्र 'णाअरिआणम्' इति षष्ठ्याः ।

---

लक्ष्यान्तरमाह (78b)यथा वेति । लिखन्नित्यादि । प्राणा इव दयित इति समासः ।

अत्रेति । न लिखति लिखनस्य न साध्यत्वमित्यर्थः । प्रसाद-पर्यन्तस्थितेरेव तत्त्वम् । तदाह—अपि त्वित्यादि । तथेत्यादि । स्थितेर्वर्तमानत्वम् । वर्तमानतायाः प्रत्ययवाच्यत्वेन व्यङ्ग्यमाह—न त्विति । स्थित्यतीतताऽव्यवच्छेदो व्यङ्ग्यः । भूमिमितीति । अधिकरणता-भिधाने त्वाकाङ्क्षितस्य कर्मण उद्देश्यत्वं [१]प्रतीयेत, न च तथेत्यर्थः । तदाह—न हीति ।

गामेत्यादि ।

[२]ग्रामरुहाऽस्मि ग्रामे वसामि नगरस्थितिं न जानामि ।
नागरिकाणां पतीन् हरामि या भवामि सा भवामि ॥

नगरस्थितिर्नगरमर्यादावैदग्धीत्यर्थः ।

अत्रेति । षष्ठ्या अनादरो व्यङ्ग्य इत्यर्थः ।

---

१. प्रतीयते इति ख० । २. ग्रामारोहे ग्रामे इति ख० ।

'रमणीयः क्षत्रियकुमार आसीत्' (१०२) ( म० वी० च० २।३१ अ० गद्यम् ) इति कालस्य ।

एषा हि भग्नमहेश्वरकार्मुकं दाशरथिं प्रति कुपितस्य भार्गवस्योक्तिः ।

वचनस्य यथा—

ताणं गुणग्गहणाणं [1]ताणमुक्कंठाणं तस्स पेम्मस्स ।
ताणं भणिआणं सुंदर एरिसिअं जाअमवसाणं ॥१०३॥
( गा० स० वे० ६४० )

अत्र गुणग्रहणादीनां बहुत्वं प्रेम्णश्चैकत्वं द्योत्यते ।

---

अत्र प्राञ्चः—'षष्ठी चानादरे' इत्यनादरविहितायाः षष्ठ्याः अनादरस्य व्यञ्जकत्वम्, न वाचकत्वम्, गौरवात्। अत एवानादरे गम्यमान इत्युक्तम्। गम्यमानत्वं व्यङ्ग्यत्वमित्याहुः, तन्न; अनुशासनस्य बाधकं विना शक्तेर्नियामकत्वात्। गौरवस्य बाधकत्वे संख्यादिष्वपि प्रसङ्गात्। 'षष्ठी चानादरे' इत्यनादरस्यानुशिष्टत्वात्; प्रकरणापेक्षणेनैव गम्यमानतोक्तेः। वस्तुतस्तु नागरिकानित्यपहाय तत्पतीनित्युक्तौ तेष्वनादरः प्रतीयत एव। तत्र [2]व्यञ्जनेनैवेत्यर्थः।

रमणीय इत्यादि। अतीतकालोपदेशाद् वर्तमानभविष्यत्त्वव्यव[3]च्छेदोऽवगम्यते। मत्क्रोधक[4]लितस्यास्य स्थितेर्न वर्तमानत्वम्[5]।

ताँणमित्यादि।

तेषां गुणग्रहणानां तासामुत्कण्ठानां तस्य प्रेम्णः ।
तेषां भणितानां सुन्दरमीदृशं जातमवसानम् ॥

बहुत्वं नानाप्रकारता। एकत्वमैकरूप्यम्, [6]उत्कर्षकाष्ठाऽऽपन्नत्वात्। संख्याविशेषस्तु वाच्य एवेति (79a)। ईरिसिमिति पाठे ईर्षितमित्यर्थः।

---

१. ताणुक० इति पाठान्तरम् । २. व्यञ्जनयैवेत्यर्थः इति ख० ।
३. च्छेदो न गम्यते इति ख० । ४. कवलितास्येति ख० ।
५. न वा भविष्यतेत्यर्थः इति अधिकः ख० ।
६. तत् प्रकर्षकाष्ठानुरूपत्वात् इति ख ।

पुरुषव्यत्ययस्य यथा—

रे रे चञ्चललोचनाञ्चितरुचे चेतः प्रमुच्य स्थिर-
प्रेमाणं महिमानमेणनयनामालोक्य किं नृत्यसि ।
किं मन्ये विहरिष्यसे बत हतां मुञ्चान्तराशामिमा-
मेषा कण्ठतटे कृता खलु शिला संसारवारांनिधौ ॥१०४॥

अत्र प्रहासः ।

पूर्वनिपातस्य यथा—

येषां दोर्बलमेव दुर्बलतया ते सम्मतास्तैरपि
प्रायः केवलनीतिरीतिशरणैः कार्यं किमुर्वीश्वरैः ।
ये क्ष्माशक्र पुनः पराक्रमनयस्वीकारकान्तक्रमा-
स्ते स्युर्नैव भवादृशास्त्रिजगति द्वित्राः पवित्राः परम्॥१०५॥

अत्र पराक्रमस्य प्राधान्यमवगम्यते ।

---

पुरुषेत्यादि । प्रथममध्यमोत्तमरूपः ।

रे रे इत्यादि साक्षेपसम्बोधने; स्थिरं प्रेम यत्र । महिमानं प्रमुच्येत्यन्वयः । हतां निन्दिताम्[1]नन्यप्रकाश्यामित्यर्थः । किं मन्यसे विहरिष्यामीति मध्यमोत्तमयोरुत्तममध्यमव्यत्ययः । तथा चानुशासनम्—'प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच' ( पा० १।४।१०६ ) इति ।

अत्र प्रहासे नोत्तमपुरुषस्य शक्तिः, ततस्तदप्रतीतेः । न त्वसौ वाक्यार्थः, पदार्थसंसर्गताबिरहात् । किन्तु प्रहासे विवक्षितेऽनुशिष्टेन पुरुषव्यत्ययेन स व्यज्यत इत्यर्थः ।

येषामित्यादि । एवेन नीतिबलव्यवच्छेदः । दुर्बलतया ते सम्मता दुर्बलत्वेन ज्ञातव्याः । तैः दोर्बलमात्रशरणैः, केवलनीतिरीतिशरणैस्तैरप्युर्वीश्वरैः किमित्यन्वयः । भवादृशा भवत्तुल्याः । पराक्रमनयेत्यत्र पराक्रमस्य पूर्वनि[पा]तेन प्राधान्यरूपमर्चितत्वं [2]लभ्यते । न च 'यथार्चितं द्वयोः' इत्यनेनानुशिष्टस्यार्थस्य कथं[3] व्यङ्ग्यतेति वाच्यम्; अर्चायामननुशासनात् । वस्तुतोऽर्चितस्य पूर्वनिपातनात् ।

---

१. अन्तर्मध्ये लब्धप्रकाशमित्यर्थः इति ख० ।
२. गम्यते इति ख० । ३. कथनमिति ख० ।

विभक्तिविशेषस्य यथा—

प्रधनाध्वनि धीर धनुर्ध्वनिभृति विधुरैरयोधि तव दिवसम् ।
दिवसेन तु नरप भवानयुद्ध विधिसिद्धसाधुवादपदम् ॥१०६॥

अत्र 'दिवसेन' इत्यपवर्गतृतीया फलप्राप्तिं द्योतयति ।

भूयो भूयः सविधनगरीरथ्यया पर्यटन्तं
दृष्ट्वा दृष्ट्वा भवनवलभीतुङ्गवातायनस्था ।
साक्षात् कामं नवमिव रतिर्मालती माधवं यद्
गाढोत्कण्ठा[1]ललितललितैरङ्गकैस्ताम्यतीति ॥१०७॥
( मा० मा० २।२५ )

अत्रानुकम्पावृत्तेः 'क' रूपतद्धितस्य ।

---

प्रधनेत्यादि । प्रधनं [2]युद्धमेवाध्वा, प्रवेशनिःसरणहेतुत्वात् । [3]विधुरैः शत्रुभिः । दिवसं व्याप्य [4]विधिसिद्धमनाहार्यम् । पदं स्थानम्, क्रियाविशेषणम् ।

अत्रेति । क्रियासमाप्तिरपवर्गः, सा च विजयलाभ एव भवति; फलसिद्धावेवेच्छाविच्छेदात् ।

भूयो भूय इत्यादि । [5]सविधेति रथ्याविशेषणम् । वलभी प्रासादोपरिमण्डपः । सैव भवनसक्षुद्रत्वात् । तुङ्गमुच्चदेशस्थम्, वातायनं तत्र स्थिता पश्यति, न तु तेन । अनेन वर्त्मना कदाचिदयं पश्येदित्यभिप्रेत्य तत्र [6]शरीरमर्पयन्तीत्यर्थः, साक्षाद् दृष्ट्वेत्यन्वयः । तेनेन्द्रजालादिव्युदास । तदुक्तम्—

"इन्द्रजाले च चित्रे च साक्षात् स्वप्ने च दर्शनम्" इति ।

तेन साक्षाद् दर्शने रागोत्कटता । ललितललितैरतिमनोहरैः । ताम्यति ग्लायतीति 'कथितम्' इति [7]चूर्णकेन सहान्वयः । कथितञ्च मे मालतीधात्रेय्या लवङ्गिकयेत्युपक्रम्[8]य मालतीमाधवे कामन्दक्युक्तिरियम् ।

अनुकम्पेत्यादि । तदुक्तम्—"अज्ञाने कुत्सिते चैव दयायामनुकम्पने[के]" इति । अनुकम्पाव्यङ्ग्येनाङ्गसौकुमार्येण दुःखक्षमत्वानधिकारित्वद्वारा विप्रलम्भः प्रकृष्यते ।

---

१. लुलितलुलितैः इति पाठान्तरम् । २. स्वत्वमेव इति ख० ।
३. विबुधैः इति ख० । ४. विधिसाध्यम् इति ख० ।
५. सविधेति नास्ति ख० । ६. अर्पयतीति ख० ।
७. कलकेनेति ख० । ८. उपक्रमे इति ख० ।

परिच्छेदातीतः सकलवचनानामविषयः
पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान् ।
विवेकप्रध्वंसादुपचितमहामोहगहनो
विकारः कोऽप्यन्तर्जडयति च तापं च कुरुते ॥१०८॥
( मा० मा० २।३० )

अत्र 'प्र'शब्दस्योपसर्गस्य ।

कृतश्च गर्वाभिमुखं मनस्त्वया
किमन्यदेवं निहताश्च नो द्विषः ।
तमांसि तिष्ठन्ति हि तावदंशुमान्
न यावदायात्युदयाद्रिमौलिताम् ॥१०९॥

अत्र तुल्ययोगिताद्योतकस्य 'च' इति निपातस्य ।

रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं परा-
मस्मद्भाग्यविपर्ययाद् यदि परं देवो न जानाति तम् ।
बन्दीवैष यशांसि गायति मरुद् यस्यैकबाणाहति-
श्रेणीभूतविशालतालविवरोद्गीर्णैः स्वरैः सप्तभिः ॥११०॥
( रा० अ० )

अत्रासाविति भुवनेष्विति गुणैरिति सर्वनाम-प्रातिपदिक-वचनानाम्, न त्वदिति, न मदिति, अपि त्वस्मदित्यस्य सर्वा-

परिच्छेदेति । परिच्छेदो विरतिः । सकलानि शक्तलक्षकव्यञ्जकानि । वचनानां विवेको दोषगुणविभागः, महामोहो वस्त्ववस्तुनोर्विपरीत-बुद्धिः । अन्तर्मनः जडयति, विषयग्राहकतां तिरोधत्ते । तापं विरहज्वालाम् । अथ च जडकत्वतापकत्वयोर्विरोधः ।

प्रशब्दस्येति । ध्वंसप्रकर्षेण समूलोन्मूलकत्वव्यक्तिः ।

कृतश्चेत्यादि । गर्वाभिमुखम्, न तु गर्वितम् । एवं शस्त्रप्रयोगादिकं[1] विना निहताः, न तु निहनिष्यन्ते ।

निपातस्येति । चकारद्वयव्यङ्ग्यतुल्यकालतया वीरप्रकर्षः ।

रामोऽसाविति । यदि परमित्यखण्डो[2]ऽवधारणे ।

अत्रेति । महिमातिशयेन प्रत्यक्षायमाणत्वम् । असावित्यस्य [भुवनेष्विति], न तु यत्र कुत्रचिदिति । बहुवचनस्य दोषव्यवच्छेदो

१. आदिकं नास्ति ख० ।  २. अखण्ड एव निष्ठा अ० इति ख० ।

क्षेपिणः, भाग्यविपर्ययादित्यन्यथासंपत्तिमुखेन, न त्वभावमुखेनाभिधानस्य ।

तरुणिमनि कलयति कलामनुमदनधनुर्भ्रुवोः पठत्यग्रे ।
अधिवसति सकलललनामौलिमियं चकितहरिणचलनयना ॥१११॥
(व्य० वि०)

अत्र इमनिजव्ययीभाव-कर्मभूताधाराणां स्वरूपस्य, तरुणत्वे इति, धनुषः समीपे इति, मौलौ वसतीति 'त्वा'-दिभिस्तुल्य एषां वाचकत्वेऽस्ति कश्चित् स्वरूपस्य विशेषः । यश्चमत्कारकारी स एव व्यञ्जकत्वं प्राप्नोति ।

एवमन्येषामपि बोद्धव्यम् । वर्णरचनानां व्यञ्जकत्वं गुणस्वरूप-

---

गुणैरित्यस्य व्यङ्ग्यम् । तदाह [1]सर्वनामेत्यादि । [अस्मदिति] आत्मगतबहुत्वाभिधायकास्मदुत्तरबहुवचनस्य कुलाक्षेपकत्वं व्यञ्जनैरित्याह— सर्वाक्षेपिण इति । भाग्यपरिवृत्तौ सम्पत्तिविपर्ययः । अभाग्याभिधाने भाग्यसामान्याभावात् सम्पत्तिसामान्याभावः प्रतीयते, न तु ध्वंसः ।

तरुणिमनीत्यादि । कलामुपचयम् । [2]भ्रुवोरग्रे पठति इति ।

अत्रेति । [3]स्वरूपस्य त्वादिभिस्तुल्यत्व इत्यन्वयः । तुल्यत्वं भावानुविधायित्वाविशेषात् । क विशेष इत्याह—एषां वाचकत्व इति । एषामिमनिजादीनां त्वादीनाञ्च वाचकत्वं प्रत्यायनम् । तत्र [यत्र] स्वरूपस्य विशेषोऽस्ति, तत्र साक्षिणमाद्रियते[4] । यश्चमत्कारेत्यादि । (80 a) चमत्कार एव तत्र मानमित्यर्थः । इमनिचा[5] प्रत्याय्यमाने यौवने सौकुमार्यं प्रतीयते, न तु श्रुतिकटुना त्वप्रत्ययेनेत्यनुभवसाक्षिकप्रतीत्योर्भेदः । एवं पूर्वपदार्थप्रधानेनाव्ययीभावेन मदनधनुष उपलक्षणभावं प्रकाशयता भ्रूलताऽग्रस्य जगद्वशीकरणं प्रकाश्यते । मौलिमिति कर्मत्वेन व्याप्तिसूचनम् । आधारत्वे ह्येकदेशवृत्तिता स्यादित्याह—विशेष इति ।

नन्वेवमिमनिजादीनां माधुर्यादिव्यञ्जकत्वमुक्तं स्यात् । ततश्च वर्णादिव्यञ्जकत्वाविशेषापत्तिरित्याह—वर्णरचनानामित्यादि । गुणस्वरूपे-

---

१. सर्वनाम इत्यारभ्य व्यञ्जकैरित्याहेत्यन्तं ग्रन्थपातः ख० ।
२. गुरोरग्रेति ख० ।
३. सरूपस्येति क० ।
४. आपादयतीति ख० ।
५. तत्रेत्यधिकः ख० ।

निरूपण उदाहरिष्यते। 'अपि'शब्दात् प्रबन्धेषु नाटकादिषु। एवं रसादीनां पूर्वगणितभेदाभ्यां सह षड् भेदाः।

**भेदास्तदेकपञ्चाशत्**

व्याख्याताः।

**तेषां चान्योऽन्ययोजने ॥ ४३ ॥**

---

त्यादि। माधुर्यादयः साक्षात्सम्बन्धेन रसेषु, व्यङ्ग्यव्यञ्जकभावे, न तु वर्णादाविति वक्ष्यमाणवचनेन वर्णादेर्गुणेषु व्यञ्जकत्वम्, अत्र तु प्रत्ययादिजन्यप्रतीतिस्वरूपाणां स्वस्वविषयनिष्ठमपि दर्शितम्। तत्तद्विशेषेष्विति परस्परभेद इति भावः। तदाह—उदाहरिष्यत[1] इति। गुणव्यञ्जकत्वज्ञानस्य गुणज्ञानाधीनत्वादित्यर्थः। 'तुल्य' इति पाठो न समीचीनः, वर्णादिव्यञ्जकत्वाविशेषापत्तेरिति। अपीत्यादि। कविविवक्षितेति[2]वृत्तप्रत्यायकं वाक्यं प्रबन्धः। पञ्चसन्धिसमन्वितं पञ्चादिदशपर्यन्ताङ्कं ख्यातवृत्तकं काव्यं[3] नाटकम्। आदिपदात् प्रकरणादिपरिग्रहः। तेषां रसं प्रति व्यञ्जकता। तदुक्तम्—

एक एव भवेदङ्गी शृङ्गारो वीर एव वा।
अङ्गमन्ये रसाः सर्वे कार्यनिर्वहणेऽद्भुतम्॥ इति।

निर्वहणं समापनम्।

एवमित्यादि। पूर्वगणिताभ्यां पदवाक्यप्रकाशाभ्याम्। षडिति पदवाक्यपदैकदेशवर्णरचनाप्रबन्धव्यङ्ग्यताभेदात्[4]। 'अपि'शब्दस्यानुक्तसमुच्चितावुक्तविस्मृत्यापत्तिभयेन पूर्वगणिताभ्यामित्युक्तम्। ( 80 b )।

एकपञ्चाशदिति। पूर्वं गणिताः पञ्चत्रिंशत् प्रबन्धव्यङ्ग्याः। अर्थशक्त्युत्थत्वाद्[5] अलक्ष्यक्रमस्य पदैकदेशरचनावर्ण[6]प्रबन्धव्यङ्ग्यत्वेन परे चत्वारो भेदा इति संवलनेनैकपञ्चाशत्। तदाह—व्याख्याता इति। पूर्वगणनोट्टङ्कनेनेत्यर्थः।

---

१. विशेष्यत इति ख०। २. इति नास्ति ख०। ३. वाक्यमिति ख०।
४. व्यञ्जकता इति ख०। ५. शक्त्युत्था द्वादश। लक्ष्येति ख०।
६. बन्ध इति ख०।

**सङ्करेण त्रिरूपेण संसृष्ट्या चैकरूपया ।**

न केवलं शुद्धा एकैकपञ्चाशद् भेदा भवन्ति, यावत्तेषां स्वप्रभेदैरेकपञ्चाशता[1] संशयास्पदत्वेनानुग्राह्यानुग्राहकतयैक-व्यञ्जनानुप्रवेशेन चेति त्रिविधेन सङ्करेण परस्परनिरपेक्षरूप-यैकप्रकारया संसृष्टया चेति चतुर्भिर्गुणने ।

**वेदखाब्धिवियच्चन्द्राः ( १०४०४ )**

शुद्धभेदैः सह ।

**शरेषुयुगखेन्दवः ( १०४५५ ) ॥ ४४ ॥**

---

इमे शुद्धभेदाः । सङ्कीर्णभेदानाह—सङ्करेणेत्यादि । स्वप्रभेदैरेक-पञ्चाशत्[2] । सङ्करेण संसृष्ट्या चेत्यन्वयः । साधकबाधकप्रमाणाभावेन [3]संशयास्पदत्वेन एकव्यञ्जकव्यङ्ग्यत्वेनैकव्यञ्जकानुप्रवेशः । उपकार्योपकारकत्वम[ नु ]ग्राह्यानुग्राहकता । [4]परस्परापेक्षत्वं सङ्करः । तच्चोक्तरूपत्रये सुव्यक्तमेव । एकं विना परस्य तत्तद्रूपताविरहात् साधकप्रमाणैर्निश्चितानां पृथग् व्यञ्जकानुप्रविष्टानां स्वातन्त्र्येण विश्रान्तानामैकपद्याभिनिवेशः संसृष्टिः । तत्र नान्योन्यापेक्षणमित्याह—निरपेक्षयेति ।

वेदेत्यादि ! एकपञ्चाशतो ह्येकपञ्चाशद्गुणनेन विधिबिन्दु-रसैर्लोचनाः, तैर्वेदगुणितैर्मताः[5] । वेदाश्चत्वारः, खबिन्दुरब्धयोऽपि चत्वारः । वियदपि बिन्दुःचन्द्र एकः । अङ्कशास्त्रे तथैव [6]सङ्केतनात् । अङ्कानां व्युत्क्रमेण स्थापनमित्यङ्कशास्त्रपरिभाषया चतुरधिकचतुः-शत्युत्तरं दशसहस्रं भवति (१०४०४) । वस्तुतः पुनरियती न संख्या । [7]तथा च पूर्वपूर्वमिश्रणेन गतार्थतया परपरमिश्राणामेकादिसंख्याह्रासाद् [8]वेदखाग्निशराः । अत एव विरोधालङ्कारे जातिर्विरुद्धा जात्याद्यै-र्गुणो गुणादिभिस्त्रिभिः । क्रिया द्वाभ्याम् , अथ द्रव्यं द्रव्येणैवेति [9]जाति-गुणक्रियाद्रव्याणां विरोधे दशत्वस्याभिधानस्य[10] मानता, अन्यथा प्रत्येकं चतुष्ट्वे षोडशत्वमेव स्यात् , गुणजात्योर्विरोधस्य जातिगुण-[11]विरोधानन्यत्वेन गुणविरोधानां त्रित्वात् । एवं क्रियाद्रव्यविरोधयो-

१. पञ्चाशता सह तेषाम् इत्यधिकः ख० ।
२. व्यञ्जका इति पाठान्तरम् । ३. संशयस्योदयता इति ख० ।
४. परस्परासापेक्ष्यत्व इतिख० ।५. यत्र सलोचने च तैर्वेदगुणितैर्युता इति ख० ।
६. सम्भेदनादिति ख० । ७. नास्ति ख० ।
८. वेदखाब्धिशरा (५४०४)इति ख० ।९. ते दशेतीति इत्यधिकः ख० ।
१०. अभिधास्यमानत्वादिति ख० । ११. विरोधानुद्रव्यत्वेन इति ख० ।

तत्र दिङ्मात्रमुदाह्रियते—

[1]खणपाहुणिआ देअर जाआए सुहअ किम्पि दे भणिआ।
रुअइ पडोहरबलहीघरम्मि अणुणिज्जउ वराई॥ ११२॥
(गा० स० वे० ६६३)

अत्रानुनयः किमुपभोगलक्षणेऽर्थान्तरे संक्रमितः ? किमनुरणनन्यायेनोपभोग एव व्यङ्ग्यो व्यञ्जकः ? इति सन्देहः।

तथा—

स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घनाः
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः।

---

द्वित्वैकत्वे। एवञ्च प्रकृतेऽर्थान्तरसंक्रमितात्यन्ततिरस्कृतवाच्ययोः परेण सह पूर्वस्य यन् मिश्रणं पूर्वेण सह परस्यापि तदेवेति दिशा व्यक्त एवोत्तरेषु संख्याक्रमः[2]।

क्षणप्राघुणिका देवर जायया सुभग किमपि ते भणिता।
रोदिति पश्चाद्भागवलभीगृहेऽनुनीयतां वराकी॥

क्षणप्राघुणिका[3] उत्सवातिथिः। पडोहरो गृहपश्चाद्भागः।

अत्रेति। अनुनीयतामुपभुज्यताम्, सा रोदनान्निवर्त्यतां वेति साधकबाधकप्रमाणविरहेण तात्पर्यसन्देहात् सन्देहः। एकस्यैवोपभोगस्योद्देश्यत्वेन सन्देहस्य न दोषता। रोदननिवर्तनेऽप्युपभोग एव तात्पर्यम्, किन्तु बाधविरहान्न लक्षणेत्याह—उपभोग एव व्यङ्ग्य[4] इति।

परसङ्करद्वयसंसृष्ट्योरुदाहरति—तथेति। लेपकस्य स्निग्धत्वेन [5]श्यामत्वमुपैति। घना मेघा एव घना निविडाः। वियदिति [6]विस्तीर्णपत्रत्वेन [7]स्फुटपुण्डरीकस्मरणया स्वतः परतोऽप्युद्दीपकता। शीकरिण इति नित्ययोगे इनिः[8]। शीकरवाहित्वेन मन्दता, अत एव घनस्य

---

१. छणप्राहुणिका इति पाठान्तरम्।
२. ह्रासः इति ख०।
३. प्राघुणिकी इति ख०।
४. एवेति ख०।
५. श्यामलत्वं नापैति इति ख०।
६. विस्तीर्णे। पतत्रत्वेन इति ख०।
७. स्फुट नास्ति ख०।
८. इनिः नास्ति ख०।

कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे
वैदेही तु कथं भविष्यति ह हा हा देवि धीरा भव ॥११३॥
( ध्व० आ० २।१ वृ: )

अत्र 'लिप्त'इति 'पयोदसुहृदाम्'इति चात्यन्ततिरस्कृतवाच्ययोः संसृष्टिः। ताभ्यां सह 'रामोऽस्मि'इत्यर्थान्तर-

---

निविडता, मन्दवातेनाप्यनुत्सार्यमाणत्वात्। पयोदसुहृदां मयूराणां पयो ददति। दातृणां सुहृदामुन्नतिदर्शनेनानन्दो भवत्येव। तत्प्रभवाः केकाः, केकाशब्दसान्निध्यात् सुहृत्पदेन मयूराभिधानम्। आनन्दजन्यत्वे हेतुमाह—कला इति। मधुरत्वे सत्यस्फुटा आनन्देन कण्ठजाड्यादस्फुटता, माधुर्येणोद्दीपकत्वाशयोद्भावनम्। कामं प्रभूतम्। दृढं बलवत्। अर्थान्तरसंक्रमितवाच्यलक्षणया रामो दुःखसहिष्णुः।

ननु दर्शनस्पर्शनश्रवणविरोधे घनादयोऽकला[बाध्य]न्तामित्याह—सर्वमित्यादि। नैते मम द्वेष्याः। तत्र हेतुमाह—कठोरहृदयो रामोऽस्मीत्यादि। कठोरहृदयस्य किमपि न दुःसहमित्यर्थः। वैदेही विदेहराजपुत्री स्त्रीत्वेन राजापत्यत्वेन च सुकुमारतया दुःखाक्षमा। कथं भविष्यति जीविष्यति? तस्या जीवनं न सम्भाव्यत इत्यर्थः। खेदातिशये (81b ) ह हा हेति त्रयो निपाताः।

स्मृतिसङ्कल्पोपनीतां सीतां सम्बोध्याह—देवीति। मनुष्येषु तद्रूपस्यादृष्टत्वाद् देवीत्वेन सम्बोधनम्। अथ च देवत्वेन धैर्यमुचितम्।

अत्रेति। [ द्रव ] द्रव्यकरणकपिधानस्य लेपस्य हितैषित्वस्य च सुहृत्त्वस्य रुचिरेष्वचेतनेषु घनेष्वसम्भवाद् व्यापनम्, परितोषहेतुत्वञ्च लक्ष्यते। तदतिशयौ च व्यङ्ग्यौ। लेपनसुहृत्त्वयोः सर्वथान्वयानुप्रवेशाद् वाच्ययोरत्यन्ततिरस्कारः। संसृष्टिरिति। संदेहादनुग्राह्यानुग्राहकत्वैकव्यञ्जकानुप्रवेशविरहादिति भावः।

---

१. अपि नास्ति ख०। २. मातृणाम् इति ख०। ३. शब्द नास्ति ख०।
४. मयूरत्वे इति ख०। ५. उद्दीपकसातिशयेद्भावनम् इति ख०।
६. घनादयोऽति बाह्यन्तामित्याह इति ख०। ७. कठिनहृदयस्येति ख।
८. दुःखाक्षमत्वं भविष्यति इति ख०। ९. कठिनेष्वचेतनेष्विति ख०।
१०. लेपसुहृत्त्वयोः इति ख०।

संक्रमितवाच्यस्यानुग्राह्यानुग्राहकभावेन 'राम'पदलक्षणैक-व्यञ्जकानुप्रवेशेन चार्थान्तरसंक्रमितवाच्यरसध्वन्योः सङ्करः। एवमन्यदप्युदार्यम्।

इति काव्यप्रकाशे ध्वनिनिर्णयो नाम
चतुर्थ उल्लासः ॥ ४ ॥

---

अर्थान्तरेति। दुःखसहिष्णुत्वेन वाच्यस्य रामस्यैवान्वयादस्य च व्यतिकरसहस्रसम्पातेऽपि प्राणधारणादात्मन्यकारो[1] व्यङ्ग्यः। तत्र[2] घनकेकाचिरस्थायित्वयोर्लिप्तसुहृत्पदव्यङ्ग्ययोरनुग्राहकत्वं सुव्यक्तमेव। ताभ्यां सहार्थान्तरसंक्रमितवाच्यस्य सङ्कर इत्यन्वयः। रामपदेत्यादि। दुःखसहिष्णुत्वलक्षणया व्यज्यमानस्य राज्यत्याग-वनवासजटावल्कल[3]धारणफलमूलाहारस्त्रीवियोगपितृ[4]शोकादिपात्रतया दुःखसहनातिशयस्यावगमे[5]ऽवगतैः शोकावेगधैर्यनिर्वेदादिभिः परिपुष्टो विप्रलम्भः प्रकाशत इति दुःखसहनातिशयवस्तु[6]रसध्वन्योरेकत्र रामपदेऽनुप्रवेश इत्येकव्यञ्जकानुप्रवेशः सङ्कर इति भावः।

ननु विप्रलम्भास्वादे वस्तुनोऽपि गुणीभावे कथं तस्य ध्वनित्वमिति चेत्, सत्यम्; वाच्यतः प्राधान्येनैव ध्वनित्वात्, आस्वादे तु सर्वेषां गुणीभावाव्यभिचार एवेत्युक्तमेव।

अन्यदिति। सजातीयमिश्रितं लक्ष्यक्रमालक्ष्यक्रमरूपं ध्वन्यन्तरम्॥

इति श्रीपरमानन्दचक्रवर्तिकृतौ काव्य(82a)
प्रकाशविस्तारिकायां ध्वनिविस्तारो नाम
चतुर्थ उल्लासः॥ ४॥

---

१. आत्मनि इति ख०। २. च इत्यधिकः ख०।
३. वल्कल इति नास्ति ख०। ४. पितृशोक इति नास्ति ख०।
५. मेवगतिः इति ख०। ६. वस्तुत्वनीरसत्वयोः इति ख०।

# पञ्चम उल्लासः

एवं ध्वनौ निर्णीते गुणीभूतव्यङ्ग्यप्रभेदानाह—

**अगूढमपरस्याङ्गं वाच्यसिद्ध्यङ्गमस्फुटम् ।**
**सन्दिग्धतुल्यप्राधान्ये काक्वाक्षिप्तमसुन्दरम्॥ ४५॥**

**व्यङ्ग्यमेवं गुणीभूतव्यङ्ग्यस्याष्टौ भिदाः स्मृताः ।**

---

एवं भेदप्रभेददर्शनाय निर्णीते निश्चायिते प्रभेदान् प्रति नियतभेदान्न्यूनानतिरिक्तानाह, ध्वनिभेदाभिधानानन्तरं तेषामेवाकाङ्क्षितत्वात् । अगूढमसहृदयैरपि झटिति संवेद्यम्, अपरस्य व्यङ्ग्यस्य वाच्यस्य वाङ्ग-[1]मुत्कर्षकम् । वाच्यस्य वाक्यार्थस्य कुतोऽपि वैगुण्याद् विश्रान्तस्य सिद्धिर्विश्रान्तिरङ्गंनिदानम् । अस्फुटं सहृदयैरपि [2]झटित्यसंवेद्यम्, सन्दिग्धं तुल्यं वा प्राधान्यं यस्य । प्राधान्यं चमत्कारिता । सन्दिग्धं वाच्यकृतं व्यङ्ग्यकृतं वेति न निश्चितम् । चमत्कारे वाच्यव्यङ्ग्ययोर्द्वयोरप्यङ्गत्वेन तुल्यता । काकुर्ध्वनेर्विकारः । तेनाक्षिप्तं झटिति प्रकाशितम् । असुन्दरं चमत्कारे वाच्यमुखनिरीक्षकम् । एवमगूढत्वादिभिरन्योन्य-[3]विलक्षणैर्धर्मैः गुणीभूतव्यङ्ग्यस्य[4] काव्यभेदस्य [5]अष्टौ भिदाः प्रकाराः, न तु वैजात्यानि, एकस्यैव [6]काव्यस्यावच्छेदकभेदेन ध्वनित्वाद् गुणीभूतव्यङ्ग्यत्वाच्च । अष्टाविति न्यूनाधिकसङ्ख्याव्यवच्छेदाय । तेनाप्राधान्यं सन्दिग्धतुल्यप्राधान्यञ्चेति मध्यमं त्रिविधं [8]मतमिति निरस्तम्, उपाधिवैलक्षण्यस्य दुरपलपत्वात् ।

---

१. उत्कर्षमिति ख० । २. झटिति न स्वार्थं क० ।
३. विलक्षणे इति ख० । ४. व्यङ्ग्यस्य नास्ति ख० ।
५. अष्टौ नास्ति ख० । ६. कार्यावच्छेदक इति ख० ।
७. प्राधान्ये चेतीति ख०; प्राधान्यमिदं वाच्यकृतमित्यादि नपुंसा इति ङ० ।
८. हेमचन्द्रमतमिति यावद् । परमयं निरासो न सहृदयाह्लादकः ।

कामिनीकुचकलशवद् गूढं चमत्करोति; अगूढं तु स्फुटतया वाच्यायमानमिति गुणीभूतमेव ।

अगूढं यथा—

यस्यासुहृत्कृततिरस्कृतिरेत्य तप्त-
सूचीव्यधव्यतिकरेण युनक्ति कर्णौ ।
काञ्चीगुणग्रथनभाजनमेष सोऽस्मि
जीवन्न संप्रति भवामि किमावहामि ॥ ११४ ॥

---

कामिनीत्यादि[१] । कामवत्याः कुचकलसो नाविदग्धेषु विदग्धेष्वेव यथा प्रकाश्यते तद्वत् । तदुक्तम्—

नान्ध्रीपयोधर इवातितरां प्रकाशो
नो गुर्जरीस्तन इवातितरां निगूढः ।
अर्थो गिरामपिहितः पिहितश्च कश्चित्
सौभाग्यमेति मरहट्टवधूकुचाभः ॥[२] इति ।

अपिहितो विदग्धेषु, पिहितस्तदन्यत्र । अगूढं यथेति (82b) ।

अगूढस्य सूत्रे प्रथममुपादानात् [३]तस्यैव विवरणाच्च लक्ष्यत्वे प्राप्तेऽगूढं यथेति पुनरुपादानं सुगमत्वायेति यदाहुः, तन्न[४]; सूत्रविवरणयोरगूढस्योपाधेरेवोपादानादुपधेयस्यैव लक्ष्यत्वात्, अतो भेदेन पौनरुक्त्याप्रसङ्गात् ।

यस्येत्यादि । किङ्करोषीति सुहृदा पृष्टस्य निर्विण्णस्य कस्यचिदियमुक्तिः । असुहृदित्यन्योन्याभावस्य व्याप्यवृत्तित्वेनाजन्मविपक्षतिरस्कृतिः । कर्णौ युनक्तीत्यन्वयः । शरणागतस्य तप्तशलाकया कर्णवेधनमिति पाश्चात्याचारः । शरणापादानद्वारा कर्णवेधे तिरस्कृतेरेव हेतुत्वात् झटिति सम्पादनादेवेत्यस्येत्युक्तम् । गुणेनोत्कर्षेण

---

१. हि इत्यधिकः ख० ।

२. नान्ध्रीपयोधर इवातितरां निगूढो नो गुर्जरीस्तन इवातितरां प्रकाशः । अर्थो गिरामपिहितः पिहितश्च कश्चित् सौभाग्यमेति महरट्टवधूकुचाभः ॥ इति क० पु० पाठः ।

३. 'तस्यैव विवरणाच्च' इति ख० नास्ति । ४. तदपि इति ख० ।

अत्र 'जीवन्' इत्यर्थान्तरसंक्रमितवाच्यस्य ।

उन्निद्रकोकनदरेणुपिशङ्गिताङ्गा
गायन्ति मञ्जु मधुपा गृहदीर्घिकासु ।
एतच्चकास्ति च रवेर्नवबन्धुजीव-
पुष्पच्छदाभमुदयाचलचुम्बि बिम्बम् ॥ ११५ ॥

( व० जी० २।३ वृ० )

---

यद् ग्रथनं तत एव [१]नियोजकचित्तरञ्जनं स्यात् । स एष ऐश्वर्याद् भ्रष्टो निकृष्टतामापन्नः, सम्प्रति, न तु पुरा । आवहामि करोमि ।

जीवन्नितीति । जीवतो जीवनाभाववेदने बाधः । श्लघ्यजीवित्वं लक्ष्यतावच्छेदकम्, [२]तदभावेन कष्टजीवित्वावगमः । अनुतापादेव जीवनं निन्दतीत्यनुतापातिशयः सर्वजनसंवेद्यत्वादगूढः । ये तु कष्ट-जीवित्वं लक्ष्यतावच्छेदकं वदन्ति, ते न विदन्ति, नञः सम्बन्धे श्लाघ्य-[३]जीवित्वावगमप्रसङ्गात् । न च नञस्तात्पर्यग्राहकत्वं सार्थकत्वे सम्भवति, निरर्थकत्वस्याकल्प [ नात् ] नीयत्वात् । वाक्यस्यैव [ श्लाघ्यजीवित्वस्यैव ] लक्ष्यत्वे नार्थान्तरसंक्रमः ।

[४]अत्रागूढे काव्येऽर्थान्तरसंक्रमितवाच्यस्य व्यङ्ग्यमुपाधिरूप-मगूढमिति सौत्रव्यङ्ग्यागूढपदाभ्यामन्वयः । एवमुत्तरत्रापि ।

उन्निद्रेति । उन्निद्रमुत्फुल्लम्, कोकनदं रक्तोत्पलं [५]कृष्णेष्वङ्गेषु रक्त-रेणुसम्बन्धात् पिशङ्गता । गायनानामङ्गेषु पटवासग्रहणाज्जातिः, मधुपत्वेन मत्तता, गोष्ठीबन्धेनैव मधुपानमिति बहुवचनम् । मञ्जु मनोहरम् । मत्तानां यथा तथा गानं मनोहार्य्येव । मत्तानां [६]पानमित्यपि जातिः । दीर्घिका भ्रमराणां गृहाः । सदा [७]सन्निहितत्वान्नवानां प्रत्यग्राणां पुष्पविशेषाणां किञ्जल्कानां [८]नानावर्णत्वेन च्छदानामतिरक्तत्वाद् विशिष्याभिधानम् ।

---

१. नियोजक नास्ति ख० ।
२. तदन्त इति ख० ।
३. जीवनावगम इति ख० ।
४. अत्र गूढे इति ख० ।
५. कृष्णेष्वारक्तरेणुसमन्वयात् इति ख० ।
६. गानमिति जात्यपि जातिः इति ख० ।
७. सान्निध्याद् नवस्य प्रत्यग्रस्य पुष्पविशेषणमिति ख० ।
८. नानावस्तुत्वेन इति ख० ।

अत्र चुम्बनस्यात्यन्ततिरस्कृतवाच्यस्य ।

अत्रासीत् फणिपाशबन्धनविधिः शक्त्या भवद्देवरे
गाढं वक्षसि ताडिते हनुमता द्रोणाद्रिरत्राहृतः ।
दिव्यैरिन्द्रजिदत्र लक्ष्मणशरैर्लोकान्तरं प्रापितः
केनाप्यत्र मृगाक्षि राक्षसपतेः कृत्ता च कण्ठाटवी ॥११६॥

( वा० रा० २०।२० )

---

अत्रेति । चुम्बनस्य वक्त्रसंयोगविशेषस्य रवेर्बिम्बे बाधात् संयोगे लक्षणा, तस्य च मन्मथोद्दीपकत्वं व्यङ्ग्यं द्राक् प्रतीतेरगूढः ।

अत्रासीदित्यादि । लङ्कातोऽयोध्यागमनावसरे पुष्पकविमानविहारे सीतां प्रति रामस्योक्तिरियम् । बन्धनविधिरिति । विधेर्दुरतिक्रमत्वेन स्वावमाननाच्छादनम् । भवद्देवर इति । [1]सम्बन्धोद्भावनेन [2]वात्सल्योत्पादनया पराभवज्ञानतिरोधापनम् (476), द्रोणाद्रिर्गन्धमादनः[3], पर्वताहरणेन स्वभृत्योत्कर्षप्रकटनम् । इन्द्रजितोऽपि जयेन[4] लक्ष्मणे वीरप्रकर्षः । दिवमर्हन्तीति दिव्याः, तैर्लोकान्तरमिन्द्रलोकम् । यस्तेन जितस्तस्यैव सविधं प्रापितः [5]अनिच्छन्नपि बलादिव स्थापितः[6] । क्षिप्रस्यैकस्येव[7] बहूनामारम्भकत्वाच्छरैरिति बहुवचनम् । लक्ष्मणस्य शरैः शत्रून् निहत्य प्रत्यावर्तनात् सदातनसान्निध्यप्रकाशनम् । अत एव लक्ष्मणेनेति नोक्तम्, अहङ्कारप्रकटनप्रसङ्गभयाद् । धीरोदात्तेन तेन मयेत्यपहाय केनापीत्युक्तम् । अपिरवहेलायाम् । छिन्नप्ररूढच्छेदेनाटवीत्वरूपणम् । दिदृक्षितानां स्थानानां सीताया नवनवप्रीतिदायित्वादत्रेत्यसकृदुपात्तस्य नवीकृतत्वम् ।

---

१. सम्भेदोद्भावनेन इति ख० । २. वात्सल्यापादनया ङ० ।
३. द्रोणाद्रिः आकुलः इति ख० । ४. जयेन नास्ति ख० ।
५. अनीहन्नपि इति ख० । ६. प्रस्थापितः ङ० ।
७. इव नास्ति ख० । ८. प्रकटच्छादनेन इति ख० ।

अत्र 'केनाप्यत्र' इत्यर्थशक्तिमूलानुरणनरूपस्य। 'तस्याप्यत्र' इति युक्तः पाठः।

---

अत्रेति। अनिर्धारितविशेषत्वेन किमः शक्तौ मयेत्यर्थो व्यङ्ग्यः। स च प्रसिद्धिवशाद्गूढः। [1]केनापीति। पदान्तरोपपादनेऽपि स प्रतीयत इत्यर्थशक्तिमूलता। [2]पाठान्तरेण गूढत्वमापादयति—तस्येत्यादि।

अयमाशयः—'अपिना' 'च' इत्यनेन च लक्ष्मण[3]शरसमुच्चय-रूपसाहित्यतात्पर्यग्राहकाभ्यां [4]तत्तात्पर्यग्रहः। [5]रामकर्तृकत्वप्रसिद्ध्या च तद्बाधः, ततो मयेत्यध्याहारादस्मदर्थप्रतीतौ गूढता; विरोधि-तात्पर्यग्रहा[6]न्तरायेण प्रतीतिविलम्बात्। तेन केनेति पदप्रयोज्यमेवागूढ-त्वम्। न च न्यूनपदत्वं प्रसिद्धिवशान्मयेत्यध्याहारे, विलम्बाभावाद् विरोधितात्पर्य[7]ग्रहेणैव विलम्बनात्। यत्र पदानुसन्धाने विलम्बः, तत्रैव [8]तदवसरः। यथा [9]तथाभूतामित्यादीत्यत्र बल्कलधरैरित्यत्रास्माभि-रिति विशेष्यपदस्य झटित्युपस्थापकत्वाभावात्।

ननु कथं शब्दशक्तिमूलवस्त्वलङ्कृत्योर्नोदाहृतमिति चेत्, मैवम्; प्रकृतवाक्यार्थ[10]प्रतीत्यां व्यवधानेन प्रतीयमानस्य व्यङ्ग्यस्य द्वितीयार्थ-स्यालङ्कारस्य वा झटित्यसंवेद्यत्वेन गूढत्वात्। एवं विभावादिव्यङ्ग्ये-ष्वपि। लक्ष्यक्रमेषु न तत्प्रसङ्गः, विभावाद्यनुसन्धानस्य व्यवधाय-कत्वात्। अत एव पदव्यङ्ग्येष्वेवोदाहृतम्, वाक्यव्यङ्ग्येषु तु वाक्यार्थ-प्रतीत्यां व्यावधानेन [11]न झटित्यवभासः। एवमन्यत्र स्वयमूह्यम्।

---

१. एकेनापीति ख०।
२. मूल तात्पर्यान्तावगूढत्व मापादयति इति ख०।
३. शर नास्ति ख०।
४. तत् नास्ति ख०।
५. ०कत्वप्रयुक्त्या च इति ख०।
६. ०न्तरायिणः इति ख०।
७. ग्रहायैव इति ख०।
८. तत् नास्ति ख०।
९. यथा तथा भूतेत्यादौ तत्र बल्कलधरैरिति ख०।
१०. प्रतीत्यव्यवधानेन इति ख०।
११. न नास्ति ख०।

अपरस्य रसादेर्वाच्यस्य वा वाक्यार्थीभूतस्याङ्गं रसाद्यनुरणनरूपं वा ।

यथा—

अयं स रसनोत्कर्षी पीनस्तनविमर्दनः ।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥ ११७ ॥

( महा० भा० स्त्री० २४।२६ )

अत्र शृङ्गारः करुणस्य ।

---

अपरस्येति । वाक्यार्थीभूतस्य प्रधानस्य रसादे रसादि वाच्यस्यार्थस्यानुरणनरूपमिति यथासंख्यमन्वयः । केचित्तु—अनुरणनरूपमित्यतो वाकारं पठित्वा (48a) वाच्यस्य रसाद्यनुरणनरूपं वेति योजयन्ति, तन्न चारु; रसस्य [२]वाच्याङ्गत्वासम्भवात् । न च—

तदिदमरण्यं यस्मिन् दशरथवचनानुपालनव्यसनी ।
[४]निवसन् बाहुसहायश्चकार रक्षःक्षयं रामः ॥

इत्यत्र [५]इदमरण्यमीदृशम्, यत्र स्थित्वा निरुपकरणोऽपि रामो रक्षांसि जिगायेति रामचन्द्रगतवीरस्य वाच्यस्यारण्यकस्योत्कर्षकत्वेनाङ्गताभावात् । अत एवम् महताञ्चोपलक्षणम्' इति लक्षितमुदात्तालङ्कारे । महतां रसानामुपलक्षणमङ्गभावो वाच्येषु सम्भवतीति वाच्यं दशरथवचनपालनावगतेः पितृविषयके रत्याख्यो भाव एव, तस्याङ्गभावात् । पितृभक्त्यैव निरूपकरणस्य जय इत्यवगतेरिति न रसादेर्वाच्याङ्गतेति ।

यथासंख्यान्वयाभिप्रायेण क्रमश उदाहरणान्याह—अयमित्यादि । समरपतितस्य भूरिश्रवोहस्तस्य दर्शनेन तद्वधूनां विलापोऽयम् । अयं छिन्नः, तदवस्थः सः । तामवस्थामाह—रसनेत्यादि ।

अत्र पूर्वावस्थास्मरणोद्बुद्धा[६] रतिः, रसनोच्छेदेनात्मन्यनासादितस्थैर्यशोकं प्रज्वलयन्ती करुणमेव पुष्णाति । अथ हेतुविच्छेदस्य सुदुःसहत्वादिति करुणाङ्गतैव शृङ्गारस्येति । अङ्गमिति सम्बन्धः ।

---

१. अर्थस्येति नास्ति ख० ।
२. व्यङ्ग्यत्वेति क० ।
३. अवश्यमिति ख० ।
४. निरसन्निति ख० ।
५. ईदृगरण्यम् इति ख० ।
६. तवेक्षणेक्षाणादिति पाठान्तरम् ।

कैलासालयभाललोचनरुचा निर्वर्तितालक्तक-
व्यक्तिः पादनखद्युतिर्गिरिभुवः सा वः सदा त्रायताम् ।
स्पर्धाबन्धसमृद्धयेव सुदृढं रूढा यया नेत्रयोः
कान्तिः कोकनदानुकारसरसा सद्यः समुत्सार्यते ॥११८॥

अत्र भावस्य रसः ।

अत्युच्चाः परितः स्फुरन्ति गिरयः स्फारास्तथाऽम्भोधय-
स्तानेतानपि बिभ्रती किमपि न क्लान्ताऽसि तुभ्यं नमः ।
आश्चर्येण मुहुर्मुहुः स्तुतमिति प्रस्तौमि यावद्भुव-
स्तावद् बिभ्रदिमां स्मृतस्तव भुजो वाचस्ततो मुद्रिताः ॥११९॥

अत्र भूविषयो रत्याख्यो भावो राजविषयस्य रतिभावस्य ।

बन्दीकृत्य नृप द्विषां मृगदृशस्ताः पश्यतां प्रेयसां
श्लिष्यन्ति प्रणमन्ति लान्ति परितश्चुम्बन्ति ते सैनिकाः !
अस्माकं सुकृतैर्दृशोर्निपतितोऽस्यौचित्यवारांनिधे
विध्वस्ता विपदोऽखिलास्तदिति तैः प्रत्यर्थिभिः स्तूयसे ॥१२०॥

---

कैलासेत्यादि । कैलासालयः शिवः, भाललोचनो रविः । निर्वर्तिता निर्वाहिताऽलक्तकस्य व्यक्तिः प्रकाशो यत्रेति द्युतिविशेषणम् । स्पर्धाबन्धो जिगीषा समृद्धया प्रचितया । समिद्धयेति पाठे स एवार्थः । रूढा प्रादुर्भूता । सद्यस्तत्क्षणम् । समृद्धस्य[1] विपक्षनिर्जये न विलम्बः ।

अत्रेति । भावस्य त्रायतामित्यवगतस्य कविनिष्ठस्य । रसो [2]महादेवनिष्ठा रतिः, प्रणत्यवसेया । महादेवोऽपि यत्प्रसादाय [3]प्रणमति । तत्र भक्तिरुचितेति रसस्य भावाङ्गता । एवं सर्वत्राङ्गादिभावे भाव्यम् ।

अत्युच्चा इति । परितः सर्वत्र किमपि किञ्चिदपि । मुहुर्मुहुर्बहुशो द्वित्वनिरसनाय द्विरुक्तिः । स्तुतिं प्रस्तौमि । अनवच्छिन्नां स्तुतिमाचरामि । इमां भुवं भुजः, न[4] भुजौ । मुद्रिताः संकुचिताः । भूविषयः पादत्रयप्रतिपाद्यः । चतुर्थपादगम्यो राजविषयः ।

बन्दीत्यादि । नृपेति सम्बुद्धिः । ता मृगदृशः । प्रेयसामित्यनादरे षष्ठी । बलादालिङ्गनतो जातस्य कोपस्य त्याजनाय प्रणामः परितोऽस्थानेऽपि त्वरया विवेचनाभावात् । प्रत्यर्थिभिर्वैरिभिः ।

१. अपि इत्यधिकः ख० । २. महादेवस्य निष्ठावति इति ख० ।
३. प्रणिपतति इति ख० । ४. न तु तौ इति ख० ।

अत्र भावस्य रसाभासभावाभासौ प्रथमद्वितीयार्धद्योत्यौ ।

अविरलकरवालकम्पनैर्भ्रुकुटीतर्जनगर्जनैर्मुहुः ।
ददृशे तव वैरिणां मदः स गतः क्वापि तवेक्षणात् ॥१२१॥

अत्र भावस्य भावप्रशमः ।

साकं कुरङ्गकदृशा मधुपानलीलां
कर्तुं सुहृद्भिरपि वैरिणि ते प्रवृत्ते ।
अन्याभिधायि तव नाम विभो गृहीतं
केनापि तत्र विषमामकरोदवस्थाम् ॥१२२॥

अत्र त्रासोदयः ।

असोढा तत्कालोल्लसदसहभावस्य तपसः
कथानां विश्रम्भेष्वथ च रसिकः शैलदुहितुः ।

---

अत्रेति । भावस्य कविनिष्ठस्य रसाभासः, प्रथमार्धद्योत्योऽनौचित्य-प्रवृत्तेः । भावाभासस्तु [१]अपरार्धगम्यः, प्रतिपक्षविषयस्या[२]हार्यत्वात् । तदाह—प्रथमद्वितीयेत्यादि ।

अविरलेत्यादि । भीषणा वाचस्तर्जनानि । तथा हुङ्कारा [३]गर्जनानि । [४]मदोऽहङ्कृतिः । तवेक्षणे त्वद्विषयकदर्शने ।

अत्रेति । भावस्य मदस्य कोपस्य वा प्रशमो विनाशः । कविनिष्ठ-राजविषयकरताबङ्गम् ।

साकमित्यादि । कुरङ्गकदृशा सुहृद्भिश्च साकमित्यन्वयः । अन्या-भिधाय्यन्याभिप्रायकम् । तव नाम [५]त्वत्सजातीयम् । विषमां कातरप्रेक्षणा-पसारणमूर्च्छादिरूपाम् ।

अत्रेति । कविनिष्ठभावस्याङ्गमिति नेयम् ।

असोढेत्यादि । कपटबटुवेषापनयनविषये त्वरा शैथिल्यमाहार्यम् । तपसोऽसोढा झटिति फलं दत्त्वा, [६]ततः सकाशात् पार्वतीं निवर्तयितु-

---

१. भावस्तु परार्धगम्य इति ख० ।	२. तस्याहार्यत्वात् इति ख० ।
३. गर्जितानि इति ख० ।	४. मदोऽहङ्कारः इति ख० ।
५. तत्सजातीयम् इति ख० ।	६. तपसः इति ख० ।

प्रमोदं वो दिश्यात् कपटबटु[1]वेषापनयने
त्वराशैथिल्याभ्यां युगपदभियुक्तः स्मरहरः ॥ १२३ ॥

अत्रावेगधैर्ययोः सन्धिः ।

पश्येत् कश्चिच्चल चपल रे का त्वराऽहं कुमारी
हस्तालम्बं वितर ह ह हा व्युत्क्रमः क्वासि यासि ।
इत्थं पृथ्वीपरिवृढ भवद्विद्विषोऽरण्यवृत्तेः
कन्या कञ्चित् फलकिसलयान्याददानाऽभिधत्ते ॥ १२४ ॥

अत्र शङ्काऽसूयाधृतिस्मृतिश्रमदैन्यविबोधौत्सुक्यानां शबलता ।

---

कामः । तपो विशेषयति--तत्कालेति । तत्काले बटुप्रादुर्भावसमये उल्लसन् प्रादुर्भवन्, असहभावः फलप्रदाने कालबिलम्बा[2]क्षमत्वम् । कथानां विश्रम्भेषु विश्वस्तकथासु ।

अत्रेति । त्वरागम्य आवेगः, शैथिल्यगम्यं धैर्यम् ।

पश्येदिति । परिवृढः प्रभुः, [3]कश्चिदभियोक्तारम् ।

अत्रेति । कश्चिदित्यनेन शङ्का । रे इत्याक्षेपसम्बोधनम्, तेनासूया । अत एवा[4]भिप्रायात् सम्बन्धाचरणाच्च चपलेति सम्बुद्धिः । त्वरेत्यनेन सम्बन्धः । [5]निजजिगमिषाधारणाय प्रयुक्तेन धृतिश्च । कुमारीति । तेन कुमार्या ममैवं स्वातन्त्र्यं नोचितमित्यर्थपरेण कौमार्यस्मरणात् स्मृतिश्च ! ह ह हेत्यनेन श्रमसंवलितं दैन्यम् । सम्भोगस्य प्राथमिकत्वेन श्रमः । [6]हस्तालम्बप्रार्थनगम्यमनौपेक्ष्यं दैन्यम् । व्युत्क्रम इत्यनेन मया शास्त्रविरुद्धमाचरितमित्यर्थपरेण विबोधशब्दार्थो मतिः । क्वासि, यासीत्यनेन[7] भावपरीक्षार्थगमनोद्यतस्याभियोक्तुर्गमनवारणपरेणौत्सुक्यं गम्यते । असीति त्वमित्यर्थे । शबलता पूर्वपूर्वोपमर्दनेन परपरोदयः । अत्रासूयास्मृतिविबोधानां शान्तसञ्चारिणां शङ्काधृतिश्रमदैन्यौत्सुक्यैः शृङ्गारसञ्चारिभिर्बाधनम् । पर्यन्ते औत्-

---

१. बहु इति पाठान्तरम् ।
२. बिलम्बत्वमिति ख० ।
३. कश्चिद् इति ख० ।
४. अभिप्रायात् इति ख० ।
५. निज नास्ति ख० ।
६. हस्तेन स्वप्रार्थनगम्यमनुपेक्ष्यं दैन्यमिति ख० ।
७. अनेक इति ख० ।

[1]एते च रसवदाद्यलङ्काराः। यद्यपि भावोदयभावसन्धि-भावशबलत्वानि नालङ्कारतयोक्तानि, तथापि कश्चिद् ब्रूयादित्येवमुक्तम्।

यद्यपि स नास्ति कश्चिद् विषयः, यत्र ध्वनिगुणीभूत-व्यङ्ग्ययोः स्वप्रभेदादिभिः सह सङ्करः संसृष्टिर्वा नास्ति; तथापि 'प्रधानेन व्यपदेशा भवन्ति' इति क्वचित् केनचिद् व्यवहारः।

---

त्सुक्यप्रधानास्वादाविर्भावात्। स चास्वादो विरोध्यु(48b/2)पमर्दन जायमानो ···रात् प्रकृष्टत्वं विपक्षनिर्जयपूर्वकं बाह्यस्थितो नृपति-रिवान्यनृपतिभ्यः।

गुणीभूतव्यङ्ग्यम्, तदाह—विषय इति। चतुर्थोल्लासेऽभिहितं स्ववचनं सङ्गमयति--एते चेत्यादि। [2]रसवदादिपदानि (49a) तत्तत्रैव व्याख्यातानि। अथ रसाङ्गालङ्कारत्वं न सम्भवति, वाच्यवाचका-दिभिः परिष्कार्यमाणानां तेषां तदपरिष्कारकत्वात्। तत्परिष्कार-त्वाधारसपरिष्कारकस्यैव शङ्कावत्त्वात्। मैवम्, स्वविभावाद्युपकृतेनाङ्ग-रसेनेत्यादौ मुख्यरसत्वम्. विभावाद्युपस्कारद्वारा मुख्यरसाद्युपस्क्रियत इत्यर्थालङ्कारत्वानपायात्, अयं स रसनेत्यादौ तथा प्रदर्शितत्वात्।

ननु भावोदयादीनामलङ्कारत्वं प्राचीनैरनुक्तम्, कथमिहोच्यत इत्यत आह--यद्यपीति। इतरोत्कर्षकत्वरूपस्य बीजस्य सत्त्वेऽप्यनुक्तिः, अविवेचकत्वाय पर्यवस्यतीत्याह—ब्रूयादिति। सम्भावनायां प्राप्तकाले वा लिङ्। कश्चिद् विवेचकः, तेनाक्षिप्ताः प्राञ्चः।

ननु अयं स रसनेत्यत्र प्रकरणगम्यस्य करुणस्य प्राधान्येन सम्भवति ध्वनित्वे कथं गुणीभूतव्यङ्ग्यतेत्यत आह—यद्यपीति। विषय आश्रयः, [3]स्वपदेन विजातीयप्रभेदपरिग्रहः। सङ्करस्त्रिविधः, संसृष्टि-रेका। क्वचिदित्यादि। यत्र यन्मुखेन चमत्कारस्तत्र तेनैव व्यवहार इत्यर्थः। तेनात्र करुणस्य गुणीभूतव्यङ्ग्यश्रृङ्गारमुखेन चमत्कारित्वात् तेनैव व्यवहारः, न ध्वनित्वेन। तदाह—प्रधानेनेति। प्राधान्यं तु चम-त्कारप्रयोजकत्वम्।

---

१. एत एव इति पाठान्तरम्। २. रसवदादीत्यारभ्य···तदपरिष्कारेत्यन्तं ख० पु० ग्रन्थपातः।

३. आदिपदेनेति ख०।

जनस्थाने भ्रान्तं कनकमृगतृष्णाऽन्धितधिया
वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम्।
कृतालङ्काभर्तुर्वदनपरिपाटीषु घटना
मयाऽऽप्तं रामत्वं कुशलवसुता न त्वधिगता ॥ १२५ ॥

( वाचस्पतिभट्टस्य )

अत्र शब्दशक्तिमूलानुरणनरूपो[1] रामेण सहोपमानोपमेय-भावो वाच्याङ्गतां नीतः।

---

अनुरणनरूपयोरलङ्कारवस्तुनोर्वाच्याङ्गत्वं क्रमेणाह—जनस्थान इत्यादि। आगम्येत्यादि च। जनस्थानं जनपदं दण्डकारण्यं च। कनके मृगतृष्णा निष्फलाशा, कनकमृगे तृष्णा च। वै निश्चितम्। देहि प्रयच्छेति, वैदेहि इति सीतासम्बोधनञ्च। भर्तुर्भरणकर्तुः, परिपाटीषु मुखविवलनाङ्कमोदनानवधानादिषु का घटना न कृता वद। यद्वा का-भर्तुरीषद्भर्तुः, "ईषदर्थे" कोः इति कादेशविधानात्। त्वत्तोऽल्पत्वेन कुत्सितत्वं लक्ष्यम। [3]अनुपमत्वं व्यङ्ग्यम्। पक्षे लङ्काभर्तुर्दशाननस्य वदनानां मुखानां परिपाट्यां पङ्क्तौ इषुघटना-शरसंयोजना कृता। कुशलमायतिशुद्धम्, वसु धनम्, तस्य भावस्तत्त्वम्। कुशलवौ सुतौ यस्याः सा सीता च।

अत्र प्रकृताप्रकृतयोः कविरामयोः साम्यं व्यञ्जनया गम्यत इत्याह-रामेण सहेति। उपमानोपमेयभावः साम्यम्। शब्दान्वय-व्यतिरेकानुविधायित्वाच्छब्दशक्तिमूलत्वम्। अनुरणनं लक्ष्यक्रमः, वाच्यस्य मया रामत्वं प्राप्तमित्यसम्बद्धसम्बन्धरूपातिशयोक्तेर्वा[2] च्याङ्गतामुत्कर्ष-कतां नीतः। मया रामत्वं प्राप्तमित्यभिधायकं विनेति शेषः। तदनुक्ता-वुपमाध्वनित्वानपायः स्यात्।

अयमर्थः—सदृशतत्त्वारोपस्य चमत्कारत्वाद् वाच्यस्य तत्त्वा-रोपस्य प्रतीयमानं साम्यमुत्कर्षकमित्यपराङ्गता। अतः कुतो रामत्वं प्राप्तमिति साधर्म्याकाङ्क्षाया निवर्तकस्य साम्यस्य वाच्यसिद्ध्यङ्गत्वमेव,

---

१. ध्वान इति पाठान्तरम्। २. अनुपास्यत्वमिति ख०।
३. व्यङ्ग्यताम् इति ख०।

आगत्य संप्रति वियोगविसंष्ठुलाङ्गी-
मम्भोजिनीं क्वचिदपि क्षपितत्रियामः ।
एतां प्रसादयति पश्य शनैः प्रभाते
तन्वङ्गि पादपतनेन सहस्ररश्मिः ॥ १२६ ॥

अत्र नायकवृत्तान्तोऽर्थशक्तिमूलो वस्तुरूपो निरपेक्षरविकमलिनीवृत्तान्ताध्यारोपेणैव स्थितः ।

---

नापराङ्गत्वमिति चेत्, जनपदभ्रमणं दण्डकारण्यभ्रमणमित्यादिसाम्यस्य शब्दशक्तितः प्रागेवावगतौ रामत्वारोपसाधर्म्याकाङ्क्षाऽनुदयेन वाच्यस्य सिद्धत्वात् कयाचिदनुपपत्त्या दोलायमाने वाच्ये व्यङ्ग्यस्य तत्सिद्धिकरत्व एव वाच्यसिद्ध्यङ्गत्वात् । अङ्गोपमायां तु शब्द एव साधर्म्यम् । केचित्तु वाच्याङ्ग (50a) तामित्यत्र वाच्यान्वयोपपादकतामर्थमाहुः, तन्न; वाच्यसिद्ध्यङ्गतापत्तेः । वाच्यतामिति पाठे वाच्यस्यान्वित इति वाच्यपदार्थप्रत्ययः । तेन वाच्यतां वाच्योत्कर्षतामित्यर्थः ।

आगत्येति । वियोगो द्वीपान्तरसञ्चारेण सम्बन्धाभावो विरहश्च । विसंष्ठुलं संकुचितम्, शोकादिना पूर्वावस्थातो विसंवादि च । क्वचिद् द्वीपान्तरे नायिकान्तरगृहे च । प्रसादनं विकासनं मानापनयनं च । पादो रश्मिश्चरणं च । [1]पतनमधःसंयोगः प्रणामश्च ।

अत्रेति । नायकेत्येकशेषः । वृत्तान्तो व्यवहारः, स एव न तत्प्रतियोगिनौ नायिकानायकौ, तदुपस्थापकविरहात्, व्यवहारावच्छेदकत्वेनैव तयोः प्रतीतेः । तेन प्राधान्येन तदनुपस्थितौ नोपमारूपकध्वनिः, तदाह—वस्तुरूप इति । एनां प्रसादयतीत्येतावतापि व्यवहारप्राप्तौ । 'पाद'पदश्लेषस्यावर्जितसन्निधिमात्रत्वमित्याह—अर्थशक्तिमूल इति ।

ननु प्रकृताप्रकृतवृत्तान्तयोरभेदो वाक्यार्थोऽप्रकृतवृत्तान्तं विना न पर्यवस्यतीति वाच्यसिद्ध्यङ्गत्वमापतितमित्याह—निरपेक्षेति । अप्रकृतवृत्तान्तोपस्थितिं विनापि वाक्यार्थस्य प्रकृतवृत्तान्तस्य पर्यवसानाद् न [2]तस्य साकाङ्क्षत्वम्, अपि तु तेनोत्कृष्टत्वमेवेत्यर्थः । नन्वेवं द्वयोर्वृत्तान्तयोरसम्बन्ध इत्याह—अध्यारोपेणेति ।

---

१. आत्मसंयोगः इति ख० । २. तत् सा इति ग० ।

वाच्यसिद्ध्यङ्गं यथा—

भ्रमिमरतिमलसहृदयतां प्रलयं मूर्च्छां तमः शरीरसादम् ।
मरणञ्च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम् ॥ १२७ ॥

अत्र हालाहलं व्यङ्ग्यं भुजगरूपस्य वाच्यस्य सिद्धिकृत् ।

---

रविकमलिनीवृत्तान्तयोरध्यारोपः, तेन तद्विषयतयाऽऽरोप्यमाणेन नायकवृत्तान्तत्वेन रविकमलिनीवृत्तान्तत्वेन प्रतीतेरित्यारोपविषयताख्य-सम्बन्धाद् द्वयोर्नासम्बन्धः, तदाह—स्थित इति । सम्बन्ध इत्यर्थः ।

इयं समासोक्तिः । अत्र व्यवहारस्य, रूपके तु व्यवहारिणश्च समारोपः । तदुक्तम्—"रूपकं रूपितारोपात्" इति । रूपित्वस्यारोपो रूपस्य रूपं व्यवहारः, तस्य समासोक्तिविषयत्वात् । [1]"ये तु रसस्य वाच्याङ्गत्वेऽप्येतदेव तन्त्रेणोदाहरणम्" इति वदन्ति, तेषामयमाशयः—"खण्डितानुनयलक्षणनायकवृत्तान्ततादात्म्यावगमा[2]क्षिप्तरतिरूपेण रसेन वाच्यस्य रविकमलिनीवृत्तान्तस्य परिपोषणमिति रसस्य वाच्याङ्गता" इति, तदसत् ; नायकतादात्म्याध्य[3]वसितप्रकृतवृत्तान्तेनाक्षेपकरू[4]पेणाक्षिप्त इति पोषकस्य प्राधान्येनाङ्गताविरहात । आक्षेपकस्याक्षिप्यमाणपर्यवसायित्वादिति ।

अपराङ्गताप्रकरणेन तद्भ्रमनिरा[5]सायाह—वाच्यसिद्ध्यङ्गं यथेति ।

[6]भ्रमिर्मुखविकारादि भ्रमणमिव दर्शनफलं कश्चनान्तरो धर्मः । अरतिर्विषयवैराग्यम् । [7]प्रलयो बहिरिन्द्रियचेष्टाविरहः । मूर्च्छा [8]मनसो बहिरिन्द्रियासम्बन्धः । तमोऽन्धकारदर्शनम ।

ननु जलदभुजगयोः [9]साम्याप्रसिद्ध्या कथं रूपणमित्यत आह—अत्र हालाहलमित्यादि । [10]जल इव [11]लोकादिसिद्धसाधर्म्येण जलद-भुजगयो [12]रूपणमुपपन्नमित्याह—सिद्धिकृदिति । ननु[13] गरलस्य रूढ्या

---

१ यत्तु इति ख० । २. क्षिप्तवति ज्ञेय इति ख० ।
३. अध्यवसितम् इति ख० । ४. रूपेण ख० नास्ति ।
५. निरसनायेति ख० । ६. भ्रमिर्मुखविकारकारी दिग्-भ्रमणमिव इति ख० ।
७. प्रणयः इति ख० । ८. मानसो इति ख० ।
९. साम्मप्रसिध्या इति ख० । १०. जन इति ख० ।
११. लोकविद्ध इति ख० । १२. निरूपणमिति ख० ।
१३. ननु इति क० ।

भूरिप्रयोगाहितसंस्कारपाटवेन सत्यपि [2]वृष्टिप्रकरणे तदपहाय नियतार्थ इव प्रागेव गरलोपस्थितावभिधाया नियन्त्रणाभावाद् व्यञ्जनाया अप्रसङ्गादिति चेत्, उच्यते—प्रसिद्ध्या गरलोपस्थितौ तत्रारोपितभुजगजन्यत्वबाधेन प्रकरणोज्ज्वलितयाऽभिधया व्यञ्जनया च जनस्य पुनर्गरलोपस्थितिरिति [3]जलाभिन्ने गरले जलदाभिन्नभुजगजन्यत्वावगमः, अभिधाया विरतत्वात्। व्यञ्जनयैव पुनर्गरलप्रत्यायनमिति न काचिदनुपपत्तिः।

ननु जलगरलयोर्जलदभुजगयोश्च न कथमुपमेति चेन्न, भ्रम्याद्यष्टविधकार्यस्य गरलादेवोपपत्तेः न तु तत्सदृशात्।

अत्र मिश्राः—प्रकरणेन विषपदस्य गरलवाचकत्वे नियन्त्रिते भुजगत्वारोपो जलदभुजगयोः साम्याप्रसिद्ध्याऽनुपपद्यमानः प्रकरणमपहृत्य [4]गरलार्थोऽभिधामुज्जीवयति। ततश्चावृत्त्या गरलार्थेऽभिहिते प्रकृताप्रकृतयोरभेदारोपे रूपकनिर्वाह इत्याह—अत्रेति। हालाहलं हालाहलत्व ( ८०a ) मित्यर्थः। जले हालाहलत्वमारोप्यते। तस्य स्वतन्त्रोपस्थितये व्यञ्जनोपगम इत्याहुः तन्न; प्रकरणादपि प्रसिद्धेरेव बलवत्त्वात्, अन्यथा [5]निहतार्थविलोपप्रसङ्गात्। प्रकरणबलात् प्रसिद्धार्थस्य प्रागुपस्थितौ दोषस्यानवकाशात्। किञ्च, प्रकरणस्य बलवत्त्वे पूर्ववत् परतोऽप्यभिधया गरलानुपस्थितिप्रसङ्गात्। अपि चावृत्त्या द्वितीयार्थं प्रत्यभिधायकत्वे शाब्दीव्यञ्जनाविलोपप्रसङ्गात्। सर्वत्रैवं युक्तिप्रसङ्गात्। अपरञ्चाश्लीलार्थान्तरस्थले तात्पर्यविषयस्य द्वितीयार्थस्य प्रतीत्यप्रसङ्गेन दोषाप्रसङ्गात्। तात्पर्यग्राहकाभावेन विरतस्य पदस्यावृत्त्यभावात्। तत्र व्यञ्जनैवेति चेत्, अत्रापि [6]तत्प्रसरे बाधकविरहात्।

---

१. प्रयोगा हि तत् इति ख०। २. दृष्टि० इति ख०।
३. जानाभिन्ने इति ख०। ४. गरलार्थे० इति ख०।
५. निहितानुवि० इति ख०। ६. प्रसवे इति ख०।

यथा वा—

गच्छाम्यच्युत दर्शनेन भवतः किं तृप्तिरुत्पद्यते
किं त्वेवं विजनस्थयोर्हतजनः संभावयत्यन्यथा ।
इत्यामन्त्रणभङ्गिसूचितवृथाऽवस्थानखेदालसा-
माश्लिष्यन् पुलकोत्कराञ्चिततनुर्गोपीं हरिः पातु वः ॥१२८॥

अत्राच्युतादिपदव्यङ्ग्यमामन्त्रणेत्यादिवाच्यस्य । एतच्चैकत्रैकवक्तृगतत्वेनापरत्र भिन्नवक्तृगतत्वेनेत्यनयोर्भेदः ।

अस्फुटं यथा—

अदृष्टे दर्शनोत्कण्ठा दृष्टे विच्छेदभीरुता ।
नादृष्टेन न दृष्टेन भवता लभ्यते सुखम् ॥१२९॥

अत्र अदृष्टो यथा न भवसि, वियोगभयञ्च यथा नोत्पद्यते तथा कुर्या इति क्लिष्टम् ।

---

लक्ष्यान्तरमाह—गच्छामीत्यादि । अच्युत तन्नामक अपरित्यक्तधैर्य च । किं दर्शनेन, अपि तु सम्भोगेन सम्भवतीति । अन्यथा सम्भावनमावश्यकम्, [1]तत् किमात्मानं [2]वञ्चयाव इत्याद्यर्था व्यङ्ग्याः, ते चामन्त्रणेत्याद्यर्थस्योपपादकाः, अन्यथा आमन्त्रणभङ्गिस्वरूपाज्ञाने [3]इत्यर्थानिश्चयः स्यादित्याह—अत्रेति ।

उदाहरणद्वयभेदकमाह—एतच्चेति । एतद् वाच्यसिद्ध्यङ्गमेकत्र भ्रमिमित्यादावेकेन [4]कविनैव वक्त्रा वक्तृव्यङ्ग्यवाच्ययोरङ्गाङ्गिभावापादनेन, अन्यत्र गच्छामीत्यादौ कविनिबद्धवक्तृव्यङ्ग्यस्य कविना स्वोक्तेरङ्गतापादनेनेति हेतोरनयोर्लक्ष्ययोर्भेद इति योजना ।

यदत्र मिश्रैरुक्तम्—"व्यङ्ग्ययोः शब्दार्थशक्तिमूलत्वेनाप्युदाहरणे [5]भेदोऽवगन्तव्यः" इति, तन्न चारु; विषयपदवदच्युतपदस्यापि नानार्थत्वेनोभयत्र शब्दशक्तेरेव मूलत्वेन भेदकत्वाभावात् ।

अदृष्ट इत्यादि । अदृष्टदृष्टयोर्भवदर्थ एव विशेष्यः । भवतेति हेतौ तृतीया । क्लिष्टः, व्युत्पन्नैरपि झटित्यसंवेद्यः । क्लिष्टमिति पाठेऽपि स एवार्थः ।

---

१. तत् किमित्यात्मानं इति ख० । २. वञ्चयाम इति ख० ।
३. इत्यर्थानन्वयः इति ख० । ४. कविनैकवक्त्रार्थव्यङ्ग्य इति ख० ।
५. उदाहरणभेदो इति ख० ।

सन्दिग्धप्राधान्यं यथा—

हरस्तु किञ्चित् परिलुप्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः।
उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि ॥१३०॥
(कु० स० ३।६७)

अत्र परिचुम्बितुमैच्छदिति किं प्रतीयमानम्, किं वा विलोचनव्यापारणं वाच्यं प्रधानमिति सन्देहः।

तुल्यप्राधान्यं यथा—

ब्राह्मणातिक्रमत्यागो भवतामेव भूतये।
जामदग्न्यस्तथा मित्रमन्यथा दुर्मनायते ॥१३१॥
(म० वी० च० ५।८)

अत्र जामदग्न्यः सर्वेषां क्षत्रियाणामिव रक्षसां क्षणात् क्षयं करिष्यतीति व्यङ्ग्यस्य वाच्यस्य च समं प्राधान्यम्।

---

उत्कण्ठाहेतुदर्शनेन[1] प्रतियोगित्वेन भयहेतुविच्छेदप्रतियोगित्वेन च सम्बोध्यस्य प्रेमास्पदत्वं वाक्यार्थः, तदपेक्षया चोक्तव्यङ्ग्यं न चारु। तेन च सामान्यलक्षणासमन्वयः। चारुत्वाचारुत्वयोस्तु झटिति संवेद्यासंवेदने सहृदयस्यैव बीजे इति तन्मूलको भेदः।

हरस्त्वित्यादि। अत्रेति। प्रतीयमानमधरसौन्दर्यावगतलौल्यत्वं[2] गम्यम् प्रधानं चमत्कारप्रयोजकम्। (5।a) न च चुम्बनेच्छायाः सम्भोगसामग्र्या दर्शनाख्यसंयोगापेक्षया हीनबलत्वेन न प्राधान्यसन्देह इति वाच्यम्, अन्तरङ्गसामग्रीत्वेन तस्या अपि बलवत्त्वात्। चुम्बनापेक्षया दर्शनस्यासन्निकृष्टत्वेन बहिरङ्गत्वात्।

ब्राह्मणेत्यादि। अतिक्रमोऽवमाननम्। भवतामिति बहुवचनं सकलगोष्ठीपरिग्राहकम्। जामदग्न्यो जमदग्निपुत्रः, तदवमन्तृक्षत्रकुलनाशकृत्। तथा ब्राह्मणः। अन्यथा अवमाननेन दुर्मनायते, अवमाननकृतदौर्मनस्येनावमन्तुः क्षत्रियस्येव रक्षसोऽपि कुलक्षयः करिष्यत इति दण्डो व्यङ्ग्यः, [3]इत्युपदेशो मित्रत्वाभिधानं च प्रियाभिधानं साम वाच्यम्, उभयमप्यनर्थनिवारकत्वेन तुल्यबलमित्याह—जामदग्न्यः सर्वेषामिति। वाच्यस्य सामरूपस्य।

---

१. दर्शनप्रति० इति ख०। २. लोभ्यत्व इति ख०।
३. इत्युप० इति ख०।

काक्वाक्षिप्तं यथा—

मथ्नामि कौरवशतं समरे न कोपाद्
दुःशासनस्य रुधिरं न पिबाम्युरस्तः।
सञ्चूर्णयामि गदया न सुयोधनोरू
सन्धिं करोतु भवतां नृपतिः पणेन ॥१३२॥
(वे० सं० १।१५)

अत्र मथ्नाम्येवेत्यादि व्यङ्ग्यं वाच्यनिषेधसहभावेन स्थितम्।

असुन्दरं यथा—

वाणीरकुडं गुड्डीणसउणिकोलाहलं सुणंतीए।
घरकम्मवावडाए बहुए सीअन्ति अंगाइं ॥१३३॥
(गा० स० वे० ८।२१)

---

मथ्नामीत्यादि। प्रतिज्ञातकुरुकुलक्षयस्य भीमसेनस्योक्तिरियम्। [1]उरस्तः उरसि। क्रोधातिशयेन क्रियाणां वर्तमानताऽभिधानाद् वर्तमानतोक्तिः[2]। भवतां नृपतिः, न [3]तु प्रजानाम्, प्रभुत्वविरहात्। न वा संधिममृष्यतो मम [4]स सन्धिं करोतु। तेन मम नास्ति क्षतिः, न वोपचितिः। पणो निष्क्रयः। पणः [5]संख्याविशेष एव।

अत्रेति। प्रतिज्ञातविरुद्धनिषेधाभिधायिषु न काकुर्निषेधान्तराक्षेपिका। अभावाभावश्चावधारणमेवेत्याह—मथ्नाम्येवेत्यादि। अवधारणस्य चमत्कारित्वे कथं गुणीभाव इत्यत आह—वाच्येत्यादि। सहभावेन समकालं प्रतीयमानत्वेन व्यङ्ग्यकृतचारुत्वस्य वाच्यानिर्वाह्यत्वाग्रहान्न ध्वनित्वमित्यर्थः। अत एवाक्षिप्तपदम्। आक्षिप्तं झटिति प्रत्यायितम्। यत्र काकुतोऽपि विलम्बेन प्रतीतिः, तत्र ध्वनित्वमेव यथोदाहृते 'गुरुः खेदं खिन्ने' इत्यत्र। अत एव काकुव्यङ्ग्यस्य पदार्थस्थानीयत्वेन बाधानवताराद् न लक्षणा।

वानीरकुञ्जोड्डीनशकुनिकोलाहलं शृण्वन्त्याः।
गृहकर्मव्यापृताया वध्वाः सीदन्त्यङ्गानि ॥

---

१. अस्तः इति ख०।

२. वर्तमानस्य लट्संज्ञकलकारेण उक्तिः प्रकाशनम्। वर्तमानेऽपि प्राचीनानां पाणिनितो भिन्नानां संज्ञा। तत्स्थानीयशत्रादेरपि तस्य संज्ञा यथार्वागत्रैव पृष्ठायाम्।

३. तु नास्ति ख०।

४. स्व इति ख०।

५. संस्थाविशे० इति ख०।

अत्र दत्तसङ्केतः कश्चिल्लतागहनं प्रविष्ट इति व्यङ्ग्यात् सीदन्त्यङ्गानीति वाच्यं सचमत्कारम्।

**एषां भेदा यथायोगं वेदितव्याश्च पूर्ववत् ॥४६॥**

यथायोगमिति—

व्यज्यन्ते वस्तुमात्रेण यदाऽलङ्कृतयस्तदा।
ध्रुवं ध्वन्यङ्गता तासां काव्यवृत्तेस्तदाश्रयात्॥
(ध्व० आ० २।३०)

इति ध्वनिकारोक्तदृशा वस्तुमात्रेण यत्रालङ्कारो व्यज्यते, न तत्र गुणीभूतव्यङ्ग्यत्वम्।

---

शृण्वन्त्या इति वर्तमानोपदेशात् कार्यकारणपौर्वापर्यव्यत्यासः।

अत्रेति। वाच्योऽङ्गावसादः। स च [1]विप्रलम्भानुभावो झटिति संपद्यमानस्तस्योत्कर्षः। व्यङ्ग्यस्तु सङ्केतभङ्गः, तन्मुखप्रेक्षित्वेन न स्वतस्तदुपकार इति चमत्काराप्रत्यासन्नत्वेन व्यङ्ग्यस्यासुन्दरता।

शुद्धभेदानाह—एषामित्यादि। यथायोगं यथासम्भवम्, पूर्ववद् ध्वनिभेदवत्; अर्थान्तरसंक्रमितवाच्यत्वादिना। व्यज्यन्त इत्यादि। वस्तुमात्रेण वाच्यालङ्कारशून्येन। ध्वन्यङ्गता ध्वनिव्यवहारहेतुता। काव्यवृत्तेस्तदाश्रयात् तदुद्देश्येनैव कविना काव्यनिर्वहणात् तत्कृतचारुत्वेनैव शब्दार्थयोः काव्यत्वलाभादित्यर्थः। न तत्रेत्यादि। न गुणीभूतव्यङ्ग्यत्वम्, अपि तु ध्वनित्वमेव।

अयमर्थः—अलङ्कारे व्यङ्ग्ये रसाद्यभावात् तत्परत्वेनैव काव्यत्वम्। स च व्यङ्ग्योऽलङ्कारः। सत्येव वाच्यालङ्कारे तदङ्गत्वेन [2]गुणीभावात्। तदभावे च स्वस्मिन्नेव विश्रामाद् ध्वनित्वमेवेति। तदुक्तम्—ध्रुवं ध्वन्यङ्गतेति। यथा—

ज्योत्स्नापूरप्रसरधवले सैकतेऽस्मिन् सरय्वा
वादः पूर्वं सुचिरमभवत् सिद्धयूनोः कयोश्चित्।
एकः प्राह प्रथमनिहतं केशिनं कंसमन्यः
स त्वं तत्त्वं कथय भवता को हतस्तत्र पूर्वम्॥ इति।

अत्र राजनि कृष्णतादात्म्यारोपो वस्तुमात्रव्यङ्ग्यो ध्वनिरेव। न च [3]भवतेत्यनेन स्फुटीकरणादगूढतैवेति वाच्यम्, प्रकरणानुसन्धानेनैव

---

१. विप्रलम्भाभावो इति ख०। २. गुणीभवेत् इति ख०।
३. भवता एवेति इति ख०।

**सालङ्कारैर्ध्वनेस्तैश्च योगः संसृष्टिसङ्करैः ।**

सालङ्कारैरिति तैरेवालङ्कारैः, अलङ्कारयुक्तैश्च तैः ।

तदुक्तं ध्वनिकृता—

स गुणीभूतव्यङ्ग्यैः सालङ्कारैः सह प्रभेदैः स्वैः ।
सङ्करसंसृष्टिभ्यां पुनरप्युद्योतते बहुधा ॥ इति ।
( ध्व० आ० ३।४४ )

**अन्योन्ययोगादेवं स्याद्भेदसंख्याऽतिभूयसी ॥४७॥**

एवमनेन प्रकारेणावान्तरभेदगणनेऽतिप्रभूततरा गणना । तथाहि शृङ्गारस्यैव भेदप्रभेदगणनायामानन्त्यम्, का गणना तु सर्वेषाम् ।

---

भवत्पदान्नृपतिप्रतीतौ तादात्म्यस्य विलम्बितप्रतीतिकत्वेनागूढताविरहात् ।

अलङ्कारव्यङ्ग्ये अलङ्कारे तु प्राधान्यमप्राधान्यञ्च । आद्यं यथा—"गाढकान्तदशनक्षत०"-इत्यादौ वाच्यविरोधालङ्कारव्यङ्ग्यायां तुल्ययोगितायाम् ।

द्वितीयं यथा—

नैसर्गगुणविनीतं जनयति कापिञ्जलो वंशः ।
आजन्मनो ह्यपूर्वं सूते रत्नाकरो रत्नम् ॥

इत्यत्र प्रतिवस्तूपमाव्यङ्ग्यायामगूढायामुपमायाम् ।

ध्वनिगुणीभूतव्यङ्ग्यमिश्रणमाह—सालङ्कारैरित्यादि । तैर्गुणीभूतव्यङ्ग्यैः शुद्धैः सजातीयमिश्रीभूतैश्च सहेत्यर्थः । ध्वनेर्योगो मिश्रणं संसृष्ट्यैकया संकरैस्त्रिभिस्तैरेवालङ्कारैरिति समासोक्तिस्थले । तत्र ' आगत्य संप्रति वियोगविसंष्ठुलाङ्गीम्" इत्यादौ व्यङ्ग्यस्य नायकवृत्तान्तस्य रविकमलिनीवृत्तान्तोत्कर्षकतां प्राप्य समासोक्त्यलङ्कारताप्राप्तेः । अलङ्कारयुक्तैरिति, वाच्यालङ्कारसहितैरित्यर्थः ।

स्वोक्तौ प्रामाणिकसम्मतिमाह—तदुक्तमिति । प्रभेदैरर्थान्तरसंक्रमितवाच्यादिभिर्वाच्यालङ्कारसहितैः, स ध्वनिः ।

अतिप्रभूततरा, शुद्धसजातीयविजातीयसंमिश्रणभेदेन निर्वक्तुमशक्येत्यर्थः । शृङ्गारस्य ध्वनिभेदा लक्ष्यक्रमभेदरसरूपभेदस्य भेदप्रभेदाः सर्वे मिश्रणप्रकारा इति भावः । सर्वेषां ध्वनिगुणीभूतव्यङ्ग्यानाम् ।

---

१. रसभेदरूपस्य इति ख० ।

सङ्कलनेन पुनरस्य ध्वनेस्त्रयो भेदाः, व्यङ्ग्यस्य त्रिरूपत्वात्। तथाहि—किञ्चिद् वाच्यतां सहते, किञ्चित्त्वन्यथा। तत्र वाच्यतासहमविचित्रं विचित्रं चेति। अविचित्रं वस्तुमात्रम्, विचित्रमलङ्काररूपम्।

यद्यपि प्राधान्येन तदलङ्कार्यम्, तथापि ब्राह्मणश्रमणन्यायेन तथोच्यते। रसादिलक्षणस्त्वर्थः स्वप्नेऽपि न वाच्यः। स हि रसादिशब्देन, शृङ्गारादिशब्देन वा[1]ऽभिधीयते, न चाभिधीयेत। तत्प्रयोगेऽपि विभावाद्यप्रयोगे तस्याप्रतिपत्तेः, यदप्रयोगेऽपि

ध्वनिगुणीभूतव्यङ्ग्यभेदान् निरूप्य (52a) सम्प्रति व्यञ्जनायां वादिविप्रतिपत्तिनिरासाय प्रकरणान्तरमाह—सङ्कलनेनेति। संक्षेपेणेत्यर्थः। अस्य प्रकृतस्य गुणीभूतव्यङ्ग्यसंवलितस्य गुणीभूतव्यङ्ग्यस्य ध्वनेश्चेत्यर्थः। वस्त्वलङ्काररसादिभेदेन त्रैरूप्यम्। किञ्चिद् वस्त्वलङ्काररूपम्। वाच्यतां सहते, स्थानान्तरे तत्सजातीयस्याभिधेयत्वात्। तत्र तयोर्मध्ये। अविचित्रं शोभाऽनाधायकम्, विचित्रं शोभाधायकोपमादिसजातीयम्। साजात्येनालङ्कारपदप्रयोगः, ध्वनिभूतस्य तस्य सर्वैरलङ्कार्यत्वात्। तदाह—यद्यपीत्यादि। तद् विचित्रं ध्वनित्वादलङ्कार्यम्। स्वप्नेऽपीत्यन्तासम्भावनायाम्। 'तत्'पदेन रसादिशृङ्गारादिशब्दानुकर्षणम्। उभयसंवलनेनाभिधानमित्याह—तत्प्रयोगेऽपीति। यथा—"शून्यं वासगृहम्" इत्यादौ। [2]रसादिपदेभ्यस्तु विभावादिव्यङ्ग्यस्थायित्वेन रत्यादेरज्ञानम्, न समूहालम्बनस्वरूपस्य स्वप्रकाशत्वात्। अत एव "शृङ्गारस्योपनतमधुना राज्यमेकातपत्रम्" इत्यादौ अस्यानुवादः, यत्र तु मुख्यतस्तदभिप्रायेण रसादिपदप्रयोगः, तत्र स्वपदाभिधानं दोष इति वक्ष्यते।

१. अभिधीयते, न चाभिधीयते इति पाठान्तरम्।

२. "रसादिपदेभ्यस्तु विभावादिरसादिपदतत्तद्विभावादिव्यङ्ग्यस्थायित्वेन अस्यैवानुवादः। यत्र तु मुख्यतस्तदभिप्रायेण रसादिप्रयोगः, तत्र रत्यादेरभिधानम्, न समूहालम्बनस्वरूपस्य, स्वप्रकाशकत्वात्, स्वपदाभिधानं दोष इति वक्ष्यते। अत एव "शृङ्गारस्योपनतमधुना राज्यमेकातपत्रम्" इत्यादौ न दोषः इति क०।

विभावादिप्रयोगे तस्य प्रतिपत्तेश्चेत्यन्वयव्यतिरेकाभ्यां विभावाद्यभिधानद्वारेणैव प्रतीयत इति निश्चीयते। तेनासौ व्यङ्ग्य एव। मुख्यार्थबाधाद्यभावान्न पुनर्लक्षणीयः।

अर्थान्तरसंक्रमितात्यन्ततिरस्कृतवाच्ययोर्वस्तुमात्ररूपं व्यङ्ग्यं विना लक्षणैव न भवतीति प्राक् प्रतिपादितम्। शब्दशक्तिमूले त्वभिधाया नियन्त्रणेनानभिधेयस्यार्थान्तरस्य, तेन सहोपमादेरलङ्कारस्य च निर्विवादं व्यङ्ग्यत्वम्।

---

ननु रसस्य विभावादिसंवलनरूपत्वेन विभावाद्यभिधानमेव तदभिधानमित्याह—विभावाद्यभिधानद्वारेणैवेति। विभावाद्युपस्थाप्य विरतायास्तदभिधाया न रसविषयत्वमिति भावः। नियतपूर्ववर्तित्वेन द्वारत्वम्, एतेन तदपेक्षाया आवश्यकत्वकथनम्। अन्वयव्यतिरेकाभ्यां निश्चीयत इत्यन्वयः। ननु वृत्त्यभावात् कथं प्रतीयत इत्याह—व्यङ्ग्य एवेति। व्यञ्जनयैवावगम्यत इत्यर्थः।

अथ विभावाद्यभिधायकेभ्यस्तत्प्रतीतेर्नियमेन तत्र तेषां शक्त्यभावाल्लक्षणाऽस्त्वित्याह—मुख्यार्थेत्यादि। न खलु तात्पर्यविषयविभावाद्यन्वयबोधः, येन सा स्यात्। रसस्य पदार्थान्वयत्वविरहेण तत्तात्पर्यानुपपत्तेर्लक्षणाबीजताविरहात्। न वा तैः सह रसस्य योगोऽस्ति, बोध्यबोधकत्वाख्योऽसाविति चेत्, न; [1]व्यञ्जनाभ्युपगमेन तद्विरहात्। व्यञ्जकव्यङ्ग्यभावेनैव तत्त्वात्। न च लक्ष्यलक्षकभावेनैव तथा लक्षणासिद्धौ तत्सिद्धिः, तत्सिद्धौ च लक्षणासिद्धिरित्यन्योन्याश्रयापत्तेः। ज्ञाप्यज्ञापकभावेन च नाविनाभावः सम्बन्धः, रूढ्यभावः स्फुट एव। विभावाद्यभिधायकप्रयोगमात्रेण रसस्याप्रतीतेः। न च रसलक्षणायां (52b) प्रयोजनान्तरं रसपर्यन्तेनैव प्रतीतिविश्रान्तेरित्याह—बाधाद्यभावादिति।

ननु मा भवतु रसादौ लक्षणा, वस्तुनि व्यङ्ग्ये साऽस्त्वित्यत आह—अर्थान्तरसंक्रमितेत्यादि। रूढ्यभावेन प्रयोजनवत्यां लक्षणायां प्रयोजनस्य व्यङ्ग्यत्वमेव न लक्ष्यत्वम्, अनवस्थापत्तेरित्याह—प्रागित्यादि। प्रतिपादितम् "एवमप्यनवस्था स्यात्" इत्यादिना।

---

१. व्यञ्जनानुपगमे इति ख०।

अर्थशक्तिमूलेऽपि विशेषे संकेतः कर्तुं न युज्यत इति सामान्यरूपाणां पदार्थानामाकाङ्क्षासन्निधियोग्यतावशात् परस्परसंसर्गे यत्रापदार्थोऽपि विशेषरूपो वाक्यार्थः, तत्राभिहितान्वयवादे का वार्ता व्यङ्ग्यस्याभिधेयतायाम् ।

येऽप्याहुः—

शब्दवृद्धाभिधेयांश्च प्रत्यक्षेणात्र पश्यति ।
श्रोतुश्च प्रतिपन्नत्वमनुमानेन चेष्टया ॥ १ ॥

---

अभिधामूलवस्त्वलङ्कृत्योः समर्थयति—शब्दशक्तीत्यादि । अनभिधेयस्याभिधया बोधयितुमशक्यस्य । उपमादेरलङ्कारस्याभिधावृत्त्यभिधेयस्य । निर्विवादं शब्दबोध्यस्य वृत्ति[1]विषयत्वनियमात् ।

अर्थेत्यादि । विशेषे व्यक्तौ, विशेष्यत इति व्युत्पत्त्या । न युज्यते, आनन्त्यव्यभिचारापत्तेः । सामान्येत्यादि । सामान्यमेव रूपं विशेषकं येषाम्, सामान्यप्रत्यासत्त्या शक्तिग्रहकाले चक्षुःसन्निकृष्टतयाऽपगतानन्त्यव्यभिचारदोषाणामित्यर्थः । पदार्थानां पदप्रवृत्तिविशेष्याणाम् परस्पर संसर्गे तद्विषये । अपदार्थः [2]प्रत्येकपदालभ्यः । विशेषरूपो वैशिष्ट्यात्मा [3]पदार्थसंसर्गभागित्यर्थः । वाक्यार्थ आकाङ्क्षादिसचिवपदसमूहगम्यः । अभिहितान्वयवादे जातिविशिष्टव्यक्तिशक्तिवादि[4]नैयायिकनये[5] । ननु संसर्गेऽपि कुब्जा शक्तिरिति चेत्, सत्यम्; तदंशे तस्या वृत्तित्वविरहात् । सम्बन्धिस्मारकज्ञानविषयसम्बन्धस्यैव वृत्तित्वात् । व्यङ्ग्यस्य वृत्त्यविषयवाक्यार्थप्रतीत्युत्तरकालीनत्वेन [6]वृत्त्यन्तरासंस्पर्शिनः, का वार्ता दूरविप्रकर्षादित्यर्थः ।

नन्वेवं पदार्थसंसर्ग इव व्यङ्ग्यार्थोऽपि वृत्त्यविषयो भासतामिति चेत्, न; तत्राकाङ्क्षादेस्तन्त्रत्वादनाकाङ्क्षादेरपि [7]व्यञ्जनाप्रतिपत्तेरिति ।

इदानीमन्विताभिधानवादिनो व्यञ्जनां ग्राहयति—येऽपीति । आद्या व्युत्पत्तिर्व्यवहारात् । तत्र व्युत्पादको वृद्धः प्रयोज्यः प्रयोजकश्च, व्युत्पादनीयश्च प्राथमिको बालकः, स तु वृद्धव्यवहारदर्शनाद् व्युत्पद्यते । तदाह—शब्देत्यादि । शब्दो 'गामानय' इत्यादिवाक्यम् । वृद्धौ प्रयोज्य-

---

१. विषयत्व नास्ति ख० ।　　२. प्रत्येकपदलभ्यः इति ख० ।
३. ०त्मा संसर्गस्य संसर्गभाग्० इति ख० । ४. नैयायिक नास्ति ख० ।
५. 'एतच्च न सर्वग्राहकमित्यवधेयम्'—नव्यन्यायानुसारिणां पुनरियमेव व्याख्या इति दिक्　　६. वृत्त्यन्तरत्वेनेत्यधिकः ख० ।
७. व्यञ्जनातः इति ख० ।

